श्रीः

Among the four Vedas the Sāma Veda holds a prominent place. It is mentioned as one of his vibhutis by Gitacarya. सामगानप्रियः is one amongest several names of Isvara. Veda has been defined as a particular collection of Mantras and Brāhamaṇas. There are three kinds of mantras : ऋक्, सामन् and यजुः Jaimini, the celebrated Sūtrakāra of Dharma Mimamsā, defines Sāma mantra as "गीतिषु सामाख्या". Sāma mantra is a collection of sounds with a musical pitch sung either on Rks or Stobha. From times immemorial it has been handed down by a competent guru to a sisya. Those sung on Rks are called Rksāman, and those on Stobha are called अनृक्सामानि such as, for example, प्रजापतेर्हृदयम्. Stobha is a letter or a collection of letters having no meaning, on which a sāman is sung to complete the limited time prescribed for a sāman.

The Sāma Veda is renowned to have one thousand Sākhās, that is, rescensions. Patañjali, the author of the Mahābhāṣya, mentions it as such. Jaimini learned all the thousand ṣākhās from Vyāsācārya. Jaimini taught only one sākhā to each one of his disciples. Most of these ṣākhās are considered to have been lost, there being none to whom they have been handed down in regular traditional succession. Fortunately some ṣākhās are still to be met with in India. The Kauthuma sākhā is one amongst them ; it is practised in South India and in Gujarat. All the Rks upon which several sāmans are sung are collected in the samhitā also called Uttarārcika consisting of nine prapāṭhakas or chapters.

Brahmasri Ramanatha Dikshit, a scion of the famous Appaya Dikshitar who is mentioned as an incarnation of Siva, and the author of more than a hundredworks, isanerudite scholar of the Sāma Veda including all Lakṣaṇa granthas connected with it. He is a repository of traditional knowledge of Sāma Veda. His knowledge in other branches of Veda and pratisakhyas is praiseworthy.

The present edition of the Kauthuma samhitā with पदपाठ and ऊहोह्यगान is an important addition to the extant Vedic literature. Sri Ramanatha Dikshit has written an elaborate preface which explains many abstruse matters connected with the Sāma Veda. Some misconceptions are wide among Vedic scholars. Some think that the Kauthuma samhitā is only a collection of Rks found in RkSamhitā and ऊहोह्यगान is not apauruṣeya, i.e., it has its origin in ṛṣis or illumined souls. These contentions have been rejected with satisfactory replies that refute all objections which might be raised and establish the separateness of Sāma samhitā and the apauruṣeyatva of ऊहोह्यगान. Modes of पदपाठ and स्वरनिर्देशपाठ have been elaborately explained with several examples. आर्षविकाराः and the contents of this samhitā have been elucidated. Several stotras sung in अग्निष्टोम and other yāgas are rendered explicit. This preface may be considered as a useful introduction to the Sāma Veda.

While samhita portions of other Vedas have पदपाठ, क्रमपाठ and other pāthas according to their respective प्रातिशाख्यानि the Sama samhita has पदपाठ only. In the present edition पदपाठ also is included for the benefit of vedic reciters.

Sri Ramanatha Dikshit is the Head of the Department of Veda at the Samskrit Mahavidyalaya of Banaras Hindu University. He has edited सामतन्त्रम् a प्रातिशाख्य of Sāma Veda with a hitherto unpublished commentary. He has taken great pains to bring out the present edition of Uttarārcika, i.e. Kauthuma samhitā with पदपाठ and ऊहोह्यगान. All lovers of ancient vedic literature will feel indebted and grateful to Pandit Ramanatha Dikshit for this commendable contribution to the existing printed works on the Vedas.

*Varanasi-5.*
*10th of November 1966.*

V. S. RAMACHANDRA SASTRY,
*Principal,*
Samskrit Mahavidyalaya,
Banaras Hindu University

श्रीः

श्रीगणेशाय नमः ॥

ॐ नमः सामवेदाय ॥

## ❋ प्राक्कथनम् ❋

विद्वन्मूर्धन्यानामविदितं कं वा विषयमपूर्वं प्रतिपादयितुं शक्नुयाम्। यदधिगतमितस्ततो मया तदत्र समितशुध्यै विमर्शकानां पुरतस्समुपस्थापयामि। निशाम्यैतद्गुणदोषाविष्करणे पटवो मां शिक्षयन्त्विति सविनयं प्रस्तौमि। तदस्मिन्नल्पकाये प्राक्कथने सामवेदसंहिताया ऋग्वेदसंहितातोऽनुद्धारः, ऊहोह्यगानयोरपौरुषेयत्वम्, सामवेदे पदिभाषापाठप्रकारः स्वरनिर्देशपाठप्रकारः, प्रकृतग्रन्थीयपदार्थप्रतिपादनम्, आर्षविकारः इत्येवमादयो विषया निरूप्यन्ते। तत्रादौ सामवेदसंहिता स्वतन्त्रा, न बह्वृचसंहितातस्समुद्धृतेति प्रतिपादयामि

सर्वेषां भारतीयानां वेदार्थानुसन्धानलब्धप्रतिष्ठानां निरन्तरमहर्षीणां दर्शनप्रणेतॄणां सद्दर्शनपुरीणानां महाकवीनां च वेदानधिकृत्य सात्त्विकी मतिरासीत् यदिमे वेदाः काव्यनाटकशास्त्रग्रन्था इव प्रमाणान्तरेणार्थानुपलभ्य तत्तद्देशकालपरिस्थितीर्वर्णयितुं महतामार्षैर्महर्षिभिर्न व्यरच्यन्त, परं परमात्मनः शरीरभूता अनादिनिधना एवेति। तत एवास्तिकवरेण्या द्विजवराः तत्र प्रतिपादितान्यैहिकामुष्मिकफलप्रदानि बहुलायाससाध्यान्यपि कर्माण्यनुष्ठाय विशुद्धान्तःकरणाः शाश्वतीं शान्तिमवापुरिति पुराणेतिहासादिभ्योऽवगच्छामः। गच्छति काले बुद्धावतारानन्तरं भारतीयानां केषाञ्चिन्मस्तिष्कारोहायं विषयः यत् इमे वेदाः पौरुषेया भवेयुर्नेति। तत्र च दत्तचित्ताः सहसा युक्त्या वेदानां पौरुषेयत्वमुररीचक्रुः। अतस्तत्खण्डनाय प्रवृत्तानि सर्वाण्यास्तिकदर्शनानि। तत्परं स्वीकुर्वन्तो नैयायिका रागद्वेषासंस्पृष्टेनाप्ततमेनेश्वरेण प्रणीता इमे वेदा इति पन्थानमवलम्बिरे। अपरे वोधकाराः सर्वज्ञः परमेश्वरो गतकल्पीयं वेदं यथावस्थितं स्मृत्वोपदिशतीति प्रत्यपादयन्। ईश्वरमनङ्गीकुर्वन्तः पूर्वमीमांसका अपौरुषेयत्वमेषां प्रत्यष्ठापयन्। बुद्धात्प्राचीनकालिकेषु वैदिकग्रन्थेषु पौरुषेयापौरुषेयत्वविषये वेदानां नास्ति विचारः। परन्तु यास्कप्रणीते निरुक्ताभिधे वैदिकग्रन्थरत्नम्। तत्र प्रथमद्वितीयसप्तमाध्यायेषु परिशिष्टप्रकरणे च बहवो वैदिका विषयाः सविमर्शं विचार्य सिद्धान्तिताः। यदि नामायं पौरुषेयापौरुषेयविचारस्तदानीं भवेत् तर्हि तदधिकृत्यापि निरुक्तेऽस्मिन्ग्रन्थे भगवता यास्केन कृतो भवेत्। अतो वयं जानीमः बुद्धकालानन्तरमेवायं कोलाहलः प्रावर्तत भारते।

एतस्मिन्नन्तरे वैदेशिकानां तदनुयायिनां भारतीयानां च प्रज्ञावतां संभावितानां वेदार्थानुसन्धानतत्पराणां मनसि पौरुषेयत्वप्रतिष्ठापनाय कथम नवीना मार्गाः प्रादुरभूत्, भाषादृष्ट्या विषयदृष्ट्या च ऋग्वेदसंहितातिप्राचीना वैदिक-

"ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाप्रख्यातं वोपमिमीते"[1] इति। तत्र "प्रख्याततमेन गुणेनाप्रख्यातमुपमिमीते इति वाक्ययोजनायां द्वितीयप्रकारेणात्रोपमा भवति। तेन ज्ञायते यत्सुद्गातृकर्तृकं सामगानं तस्मिन्काले प्रख्याततममासीत्। तेन प्रसिद्धेन गुणेन शकुनिकर्तृकं शब्दं अप्रख्यातमुपमिमीते द्रष्टा। तथा च गृत्समदाचार्यः सामगमुद्गातारं सम्यग्जानातीति सिद्धम्।

अपि च स्तोत्रप्रयोगं ज्ञात्वैव "उभे वाचौ" इति पदं प्रयुक्तवान्मण्डलद्रष्टा। सामगाः प्रातस्सवनादिषु बहिष्पवमानस्तोत्रादीनामुपक्रमे पूर्वं यानि सामानि गायन्ति तेषामाश्रयभूता ऋचः पठन्ति। तथा च श्रौतसूत्रम् "पुरस्तादुपरिष्टाच्चर्चः सर्वत्र जपेयुः यासु करिष्यन्तः स्युः"[1] इति। ततश्च से ऋङ्मन्त्रं गायत्रं त्रैष्टुभम् च-शब्दाज्जागतं गानमन्त्रं च प्रयुञ्जत इति ज्ञात्वैव उभे वाचौ इति सङ्गृह्णाति स्म। इदानीं कानि सामानि ज्ञात्वैवमवददिति ऋग्वेदादृङ्मन्त्राः सामवेदे सङ्गृहीता इति वदद्भिः स्वकीयसिद्धान्तस्समर्थनीयः।

केचन पुनरमीषां ऋङ्मन्त्राणामतिप्राचीनानां भाषाशास्त्रदृष्ट्यार्थान्तरमेव वर्णनीयम्। भारतीयैर्वेदव्याख्यातृभिर्भाषाशास्त्रानभिज्ञैर्योऽर्थो वर्णितस्सोऽस्वल्पं दोषभूयिष्ठ एवेत्याशेरते तत्रतत्रोद्घोषयन्ति च। परमेवमेवोद्घोषयन्तः कालमयापयन्। नवीनं व्याख्यानमार्गं प्रशस्तं न प्रकाशयामासुः। प्रसङ्गोऽस्मिन्भारतीयानामार्याणां व्याख्यानमदुष्टं शिष्टसंमतमिति शब्दार्थतत्त्वविदां वैदिकमूर्धन्यानां वाक्यादवगतमिति तानि वाक्यानि प्रस्तौमि। पश्यत शबरस्वामि-कुमारिलभट्टपादयोर्वाक्यानि। ते हि प्रामाणिकाः यच्छब्दार्थनिरूपणव्याजेन शब्दार्थतत्त्वं सर्वतन्त्रसिद्धान्तमुद्घोषयन्ति "यः शास्त्रस्थानां स शब्दार्थः। के शास्त्रस्थाः? शिष्टाः। तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च। तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे"[2] इति वदन्भगवान् शबरस्वामी श्रुत्यर्थविवरणं भाषाशास्त्रदृष्ट्या नो भवति किन्त्वनादिशिष्टपरम्परयेति प्रतिपादयति। कुमारिलभट्टपादा अपि तन्त्रवार्तिके—

शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया।
प्रमाणत्वेन मन्तव्या सप्रत्ययतरा हि ते॥
शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा।
स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत्॥
लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते।

× × ×

तस्माद्ये याज्ञिकैर्येषां वैदैर्वार्था निरूपिताः।
तेषां त एव शब्दानामर्था मुख्या हि नेतरे॥

× × ×

अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते।
तत्रस्थनिर्णयात्तस्माल्लोके भवति निर्णयः[3]॥

[1] का. श्रौ. सू. १. ९. १८
[2] शाबरभा पृ. २१७
[3] तन्त्रवा. पृ. २१७. २१८



इति व्यवस्थापयामासुः। एवं शब्दार्थनिर्णयं प्रतिपाद्योत्तरत्र लोकवेदाधिकरणे पूर्वपक्षिणा लौकिका वैदिकाश्च शब्दाः परस्परं भिन्नाः, एषामर्था अपि भिन्नाः। तस्माल्लौकिकात्पदार्थाद्वैदिकाः पदार्था भिन्ना इति शङ्किते तत्परिहारमाह भाष्यकर्ता "य एव लौकिकास्शब्दास्त एव वैदिकाः। त एवैषामर्थाः"[1] इति। अनेन प्रमाणजालेन सवनत्रयपुत्रोद्गातृपदानां न कदाप्यर्थान्तरं भवेत्।

ततश्च गृत्समदादीनां मण्डलद्रष्टॄणां काले सामवेद आसीदेव। अत एव ऋग्वेदसंहिताया भिन्नामिमां संहिताम्, ऋग्वेदसंहिताव्याख्यया अस्या अगतार्थतां च मन्यमानेन सायणार्येण पृथक् व्याख्यानाय प्रयत्न[2] आस्थीयते स्म। अपि च स जानाति ऋग्वेदादेव मन्त्रा उद्धृता इति? तदर्थेयं संहिता यजुर्वेदसंहितेव स्वतन्त्रैव भवेदिति युक्तमुत्पश्यामि।

एतेनैव परेषां स्वकपोलकल्पिताः—सामवेदीयऋङ्मन्त्रेषु पाठभेदा स्वरभेदाः कर्मस्वरूपप्रतिपादकेषु ब्राह्मणश्रौतसूत्रग्रन्थेषु वर्णिते, गीतिसम्पत्त्यै बुद्धिपूर्वकं ऋग्वेदमन्त्रमन्यथाविधायाऽपठन्. शाखायनादिशाखाग्रन्थेषु तथा भवेयु, इति पक्षाः निरस्तप्रायाः। तथा हि—यत्र प्रामाणिकस्य सिद्धान्तस्य कर्वाचित्वाभिन्नाभो दृश्यते तत्रैव तस्य समीकरणार्थमर्थापत्तिप्रमाणेन किञ्चित्कल्पयन्ति। यथा वेदान्तिभिः साधनचतुष्टयसंपन्नेन विदुषा वेदान्तवाक्यार्थविचारे कृते ब्रह्मज्ञानं प्राप्यते ततश्च कृतकृत्यो भवतीति स्वीकृतस्य प्रामाणिकस्य सिद्धान्तस्य साधनचतुष्टयरहितगर्भस्थवामदेवस्य ब्रह्मज्ञानप्राप्तिवर्णनमसङ्गतमिति मत्वा श्रुत्युक्तार्थस्थिरीकरणाय पूर्वजन्मनि वामदेवस्य साधनचतुष्टयसंपत्तिरासीत्. ब्रह्मविचारश्च तेनानुष्ठितः, परं प्रबलप्रतिबन्धवशात्साक्षात्कारो न जातः। प्रतिबन्धके विनिवृत्तेऽप्रतिबद्धकारणसद्भावात्कार्योत्पत्तिरिति वर्ण्यते तथात्र ऋग्वेदात्सामवेदीये आर्चिके गृहीते प्रबलदृढतरप्रमाणाभावेन पाठान्तरादयः शाखान्तरेषु भवेयुरित्यादिकल्पनं न शोभनतराम्। यदि ऋग्वेदसंहितां विहाय सामवेदसंहितायाः स्थितिरनुपपन्ना भवेत्तदैवमादिकल्पनं मनोरञ्जकं भवेत्। तामेवानुपपत्तिं न पश्यामः।

यदपि गीत्यर्थमेव पाठभेदमकुर्वन्महर्षय इति तदप्ययुक्तम्। यैरेव महर्षिभिः—
हीनो मन्त्रः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इत्यादिवाक्यैः वेदसंरक्षणोपायाः प्रतिपादिताः तैरेवात्मनः भविष्यतां शिष्यगणां वा हिंसायै बुद्धिपूर्वकं पाठभेदः कथमाश्रितो भवेत्। अनेन हीन इति मन्त्रपाठमर्थः प्रतिपादितः परम्परागतां श्रुतिमविचार्य स्वमनीषया लौकिकव्याकरणबलेन कारणान्तरेण वा स्वरवर्णानां आनुपूर्व्यां वा परिवर्तनं कुर्वन्निःश्रेयसात्प्रतिहन्येत-

[1] शाबरभा पृ. २५१
[2] यत्र प्रयुञ्जीत चतुर्नियमीते तत्र तत्र।
व्याख्यातं प्रथमं पश्चाद्वा व्याख्यास्मीरितम्॥
साम्नामृगाश्रितत्वेन साम्नाख्यानाय वर्ण्यते॥
सामवेदसंहिताभाष्योपोद्घाते. १०.

मनुष्ठानपूर्वकं विहितम् । सामवेदे च गायत्रम् वेयगानम् , आरण्यकगानम् , शुक्रियम् , महानाम्न्यः मन्त्रब्राह्मणमुपनिषत्सहितम् , इति विभागा वर्तन्ते । पूर्वोक्तानां भागानामु-त्क्रमोत्सर्जने स्तः । उपक्रम्य तद्भागं यथावदधीत्योत्सर्जनं कृत्वा भागान्तराण्यपि तथै-वाधीयीरन् । उपनयन-गोदान-व्रातिका दित्य-महानाम्न्युपनिषत्-ज्येष्ठसाम-भौतिक-व्रतानीति भवन्त्यष्टौ व्रतानि छन्दोगानाम् । उपक्रमकर्मणः श्रावणकर्म, उत्सर्जनकर्मणो-ऽनुप्रवचनीयकर्मेति संज्ञान्तरं छन्दोगप्रयोगेषु । अष्टमे वर्षे कृतोपनयनो बटुराश्रम-[1]धर्मानष्टवर्षपर्यन्तमनुतिष्ठन् श्रावणकर्मपूर्वकं यथाविधि साविञ्यासुत्पन्नं गायत्रम-धीयीत । षोडशे वर्षे तदुत्सृज्य गोदानव्रतमनुतिष्ठेत् । महानाम्नीं विहाय शिष्टानि व्रतानि संवत्सरसाध्यानि भवन्ति । सर्वेषामुपनयनं पृथक् स्मृतम् । अत्राङ्कनयः प्रसिद्धादुपनयनादागच्छति । [2]गोदानव्रते साविञ्युपदेशकाले आग्नेयैन्द्रपवमानपर्वाणि ऋग्भिस्सहोपदेष्टव्यानि । असम्भवे एकैकस्य पर्वण आद्यन्ते ऋचौ तथा सामनी उपदे-ष्टव्ये । श्रावणेन श्रावयित्वाध्यापयीत । व्रतान्ते श्रावणमिति केचन मन्यन्ते । अपरे पुनर-हरहरधीयीतेति वाक्येन व्रतानुष्ठानकाल एवाध्ययनमिति समर्थयन्ते ।

एवं व्रातिकव्रते उपनयनकाले सावित्रीस्थाने आरण्यकसंहितायाः "इन्द्रज्येष्ठं नः" "सहपेषा" इति, यथावई इत्यारभ्य स्वयंस्कुन्वाइ इत्यन्तमुपदिशेत् । असंभ-वेऽर्केद्वन्द्वव्रतपर्वणामाद्यन्ते सामनी आरण्यककाण्डस्य पूर्वोक्ते ऋचौ वा । व्रतान्ते श्रावणपूर्वकमध्ययनम् । तत्र ज्येष्ठसामपञ्चानुगानानां चोपरिष्टाद्व्रतनिर्देशादुद्धारः कर्तव्यः । अनन्तरं शुक्रियपर्वाध्ययनायादित्यव्रतं भवति । व्रतोपदेशकाले "अग्न आयूंषि" इत्यारभ्य "सप्तत्वा हरितः" इत्यन्तं संहिताभागम्, अग्नेर्व्रतमित्यारभ्योत्रयाभि पर्यन्तं गानमुपदिशेत् । पूर्वव्रतापेक्षयाऽत्र सन्ति केचन नियमाः[3] । तान्यथावद्वर्ष-पर्यन्तं अन्यैस्साधारणैर्नियमैस्सहानुष्ठायान्ते यथाविधि शुक्रियं पर्वाधीते । तस्य व्रत-स्योत्सर्जनानन्तरं महानाम्नीपर्वाध्येतुं महानाम्नीव्रतमनुतिष्ठति । तच्च व्रतं द्वादश नव

विद्यास्नात इति यतोऽत्र वेदाध्यायिनो विद्याव्रतस्नात इति सञ्जितान् चक्रिरे गृह्यसूत्रकाराः । सर्वथा व्रतानन्तरमेव समावर्तनकर्म भवेत् । केचन भारतीयाः उपनयनकर्मणैव साकं समावर्तनमाचरन्ति समानेऽहनि । नेद युक्तमिति प्रतिभाति-वेदाध्ययनाधिकारसिध्यर्थं विहितं कर्मोपनयनम् । समावर्तनं च "अधीत्य स्नायात्" इति वाक्येन स्वशाखाध्ययनानन्तरं विहितम् । उपनीतोऽप्युपनयनदिनादारभ्य नाधीते, उपाकर्मानन्तरमेव । अथवा परिमिते पदुपनयनेनैव साकं स्नातककर्मानुष्ठानतत् कथं नु सङ्गच्छेत ।

[1] मेखलाधारणभैक्षचर्यदण्डसमिदाधानोपस्पर्शनप्रातरभिवादा नित्यम् । खा० गृ० सू० २.५.१६.

[2] गोदानव्रातिकव्रतनियमाः खादिरे गृह्यसूत्रे—अवस्त्वेषो । [illegible] स्यात्, मैथुनमधुमांसस्नानावलेखनदन्तधावनपादधावनानि वर्जयेत्, नास्य काले रेतस्स्कन्देत् न गोयुक्तमारोहेत्, न ग्रामे उपानहौ ॥ खा० गृ० सू० २.५.१०–१५.

[3] ये चरत्येकवाससो भवन्ति । आदित्यं च नान्तर्दधते । अपोऽभ्युपयन्ति । खा० गृ० सू० २.५.१९–२१.



षट् त्रीन् वा वर्षान् यथोत्साहमाचरति । अत्रापि विशिष्टा[1] नियमास्सन्ति । पूर्ववदेव ताननुतिष्ठेत् । अत्रोपनयने साविञ्युपदेशकाले महानाम्नीऋचः सामानि चोपदिशति । श्रावणकर्मणि महानाम्नीपर्व श्रावयेत् । तत्र च चत्वारि सामानि सन्ति । अध्यापनकाले गुर्वन्तेवासिनौ पुरस्तादुदकपात्रे निधाय तत्र पाणी मज्ज-यित्वाध्यापनाध्ययने कुरुतः[2] । एकैकं साम पुरीषपदैस्सहैकस्मिन्नहन्यध्यापयीत । एवं दिनत्रयेणैतत्पर्वाध्येयं भवति । उत्सर्जनानन्तरं मन्त्रब्राह्मणाध्ययनार्थं उपनिषद्व्रतं भवति । सर्वेषु व्रतेषूपनयनं विद्यते । सर्वत्र व्रतोपदेशकालेऽध्येतव्यभागस्या-द्यन्तमन्त्रावुपदिशेत् । प्रकृतकर्मणि "देव सवितः प्रसुव यज्ञम्" "आगामनागास-दिति वषिष्ट" इत्यन्तम्, "ओमित्येतदक्षरमुद्गीथमुपासीत" इति "न स पुनरावर्तते" इत्यन्तं चोपदिशति गुरुः । नात्र श्रावणकर्मास्ति । संवत्सरान्ते मन्त्रब्राह्मणं सोपनिषद-मधीते बटुः । यथोक्तप्रकारेण व्रतं समाप्य त्रयाणां ज्येष्ठसाम्नामध्ययनार्थं ज्येष्ठसामव्रत-मनुतिष्ठति । व्रतोपदेशकाले च्छन्दसंहितान्तर्गतानामारण्यकगानस्थानां ज्येष्ठसाम्ना-मुपदेशः । नात्र "मूर्धानं दिवः" इति ऋच उपदेशः । पूर्वार्चिके तस्या अधीतत्वात् उपदेश आद्योच्चारणं भवतीति नात्र तस्याः पाठः । अस्य व्रतस्योत्सर्जनानन्तरं पञ्चानुगानमित्यादिमध्येतव्यम् । तदर्थं भौतिकव्रतमाचरेत् । उपदेशकाले पञ्चानु-गानं साम भवति । श्रावणकर्मणि तच्छ्रावयित्वाध्यापयीत । उत्सर्जनकर्म अनु-प्रवचनीयकर्मेति छन्दोगा व्यवहरन्तीति पूर्वमेवोक्तम् ।

अत्र प्रसङ्गागतमन्यन्निरूप्यते—

"गोदानव्रातिकादित्यमहानाम्नीव्रतानि तु ।
वेदव्रतानि चत्वारि तत्रादित्यव्रतं यदि ॥
न कुर्यात्संहितात्वेन कुर्वीतोपनिषद्व्रतम् ।

इति वामनाचार्यैः कारिकायां प्रतिपादितम् । अस्यायमर्थः—"चत्वारि वेदव्रतानि" इति गौतमधर्मसूत्रमस्ति । अयं च ग्रन्थस्सामवेदीय इति प्रसिद्धिरपि जागर्ति । तद्वचनानुसारेण सामवेदे नाष्टौ व्रतानि, परं चत्वार्येवेति प्रतिपादिते केषामनुष्ठानम् केषामुत्सर्ग इति सन्देहो जायते स्वभावतः । तत्रानुष्ठेयानि व्रतानि प्रतिपादयति वामनाचार्यः संहिताध्ययनार्थमिमानि व्रतानि प्रशस्तानि । गानभागः "अग्न आयाहि" इत्यारभ्य "एवाहि देवाः" इत्यन्तो भवति । प्राक्केभ्यः केचन । अपरे अरण्येगेयाः सामसन्ता भवन्ति । व्रतियापर्यन्तमासेगेयाध्ययनाय गोदानव्रतमाचरेत्-कम् । तथैवारण्यकपर्वाध्ययनार्थं व्रातिकव्रतम् । शुक्रियमहानाम्नीपर्वणोरध्ययनकाले ते

[1] कृष्णवस्त्रः, कृष्णभक्षः, आचार्याधीनः, तिष्ठेद्दिवा, आसीत नक्तम् । खा० गृ० सू० २.५.२२–२७.

[2] उपोषिताय परिणद्धायानुगापयेत् । खा० गृ० सू० २.५.२९.
निदानसूत्रे विशेषाः प्रतिपादिताः—तासां खलु [illegible] ब्रह्मचर्यं चरेत् । कृष्णवस्त्रः कृष्णभक्ष आचार्याधीनवृत्ती तिष्ठेद्दिवासीत नक्तम् । [illegible] सर्वभूतानां [illegible] शरणं नातियात् । नित्यं त्रिरुदकस्पर्शी चरेत् । उदकान्तरो हि महानाम्न्य इति । एवं खलु चरतः कामवर्षी पर्जन्यो भवति । नि० सू० प्रपाठकः ४ खण्ड ३ ।

| | | | | | | |
|---|---|---|---|---|---|---|
| १४ | आजिगम् | स्वादिष्ठयामदिष्ठया | १२ | २ | १४ | २ |
| १५ | आतीषादीयम् | सोमः पुनानः | १७ | १ | ३१ | १ |
| १६ | आत्रेयम् आर्त्तवान्द ६२६ | बृहद्वयोहि | २ | २ | २८ | २ |
| १७ | आनिधनंत्वाष्ट्री | सुतासोमधु | १६ | १ | १९ | १ |
| १८ | आनूपंबाभ्रवम् | अश्वीरथी | ७ | २ | २३ | ४ |
| १९ | आन्धीगवम् | पुरोजितीवः | १६ | १ | १२ | १ |
| २० | आभीकम् | उच्चातेजातम् | १२ | २ | ४ | २ |
| २१ | आभीशवाद्यम् | परीतोषिञ्चत | १४ | २ | ५ | १ |
| २२ | आभीशवोत्तरम् | " | १४ | २ | ६ | ४ |
| २३ | आमहीयवम् | उच्चातेजातम् | १२ | २ | १३ | ७ |
| २४ | आर्षभम् | अभित्वावृषभा | ५ | १ | ३ | १ |
| २५ | आशुभार्गवम् | वृषापवस्वधारया | १२ | २ | २५ | ५ |
| २६ | आश्वम् | यस्तेनूनम् | ३ | २ | ५ | २ |
| २७ | आश्वसूक्तम् | यदिन्द्राहम् | ३ | २ | १९ | ५ |
| २८ | आसिताद्यम् | रायेअग्ने महे | ३ | १ | ३ | ५ |
| २९ | आसितोत्तरम् | " " " | ३ | १ | ४ | १ |
| ३० | आष्कारणिधनंकाण्वम् | वयंघत्वा | ७ | १ | २८ | ५ |
| ३१ | आष्टादंष्ट्रपूर्वम् | इन्द्रंविश्वाअवीवृधन् | ९ | १ | २० | २ |
| ३२ | आष्टादंष्ट्रोत्तरम् | इन्द्रंविश्वाअवीवृधन् | ९ | १ | २१ | ४ |
| ३३ | इडानांसंक्षारः | तमिन्द्रंवाजयामसि | ३ | २ | १३ | ४ |
| ३४ | इदावासिष्ठम् | वयमेनमिदा | ७ | २ | १६ | २ |
| ३५ | इन्द्रस्य यशः | त्वमिन्द्रयशाः | ६ | २ | ३१ | १ |
| ३६ | इन्द्रस्यापामीयम् | इन्द्रायसोम | १६ | २ | २५ | १ |
| ३७ | इषोवृधीयम् | इन्द्रायेन्दो | १३ | १ | १३ | १ |
| ३८ | इहवद्दैवोदासम् | अयंतइन्द्र | ४ | २ | ३२ | १ |
| ३९ | इहवद्वामदेव्यम् | अग्निस्तिग्मेन | १ | २ | ६ | २ |
| ४० | ईनिधनभार्गीयवम् | तद्वोगायसुते | ३ | २ | ४ | १ |
| ४१ | उक्थ्यामहीयवम् | एवाह्यसिवीरयुः | ६ | १ | २५ | २ |
| ४२ | उत्सेधः | प्रसोमदेववीतये | १४ | २ | २३ | ७ |
| ४३ | उभयतस्तोमंगौतमम् | त्वमित्सप्रथाअसि | ९ | १ | १ | २ |
| ४४ | उद्वत्प्राजापत्यम् | पुनानस्सोमधारया | १४ | १ | २७ | १ |
| ४५ | उद्वद्भार्गवम् | अचोदसोनोधन्वन्तु | १६ | २ | ७ | २ |
| ४६ | उद्वंशपुत्रम् | प्रवइन्द्राय | १२ | १ | ९ | १ |
| ४७ | उद्वंशीयम् | गायन्तित्वागायत्रिणः | ९ | १ | १६ | ३ |
| ४८ | ऊर्ध्वेडंत्वाष्ट्री | सुतासोमधुमत्तमाः | १६ | १ | १७ | ३ |
| ४९ | ऋषभः पवमानः | उच्चातेजातमन्धसः | १२ | २ | ३ | ४ |



| | | | | | | |
|---|---|---|---|---|---|---|
| ५० | ऐडतम् | गावउपवदावटे | ३ | २ | ६ | ३ |
| ५१ | ऐडंकावम् | अभिप्रियाणिपवते | १६ | २ | २ | १ |
| ५२ | ऐडंकौत्सम् | यदिन्द्रचमसेष्वा | ५ | १ | ४ | ५ |
| ५३ | ऐडंक्रौञ्चम् | सोमाः पवन्त इन्दवः | १६ | १ | २५ | १ |
| ५४ | ऐडमायास्यम् | पुनानस्सोमधारया | १४ | १ | २५ | ४ |
| ५५ | ऐडमौक्षोरन्ध्रम् | मृज्यमानस्सुहस्त्या | १५ | १ | १२ | १ |
| ५६ | ऐडंताण्डवम् | परीतोषिञ्चतासुतम् | १४ | २ | १२ | १ |
| ५७ | ऐडंयामम् | वृषामतीनांपवते | १६ | २ | २१ | २ |
| ५८ | ऐडंसौपर्णम् | उदुत्येदभिश्रुतामघम् | ३ | २ | २४ | ५ |
| ५९ | ऐडमराहम् | आयायेअग्निमिन्धते | ४ | १ | ११,१२ | १ |
| ६० | ऐषिरम् | अधाहीन्द्रगिर्वणः | ११ | १ | १० | १ |
| ६१ | औकोनिधनम् | तमुअभिप्रगायत | १० | १ | २९ | २ |
| ६२ | औक्ष्णोरन्ध्रम् | मृज्यमानः सुहस्त्या | १५ | १ | ६ | १ |
| ६३ | औवलम् | सुरूपकृत्नुमूतये | ४ | २ | ३६ | ४ |
| ६४ | औपगवम् | अपादुशिप्र्यन्धसः | ४ | २ | १ | १ |
| ६५ | औपनयम् | अवर्धयत्समसृजः | ८ | २ | ४ | १ |
| ६६ | और्णायवाद्यम् | परिप्रियादिवः कविः | १३ | १ | ३७ | १ |
| ६७ | और्णायवोत्तरम् | " | १३ | १ | ३८ | १ |
| ६८ | औष्यंतपनम् | पुरोजितीवोअन्धसः | १६ | २ | १० | १ |
| ६९ | औशनम् | प्रतुद्रवपरि, प्रेष्ठंवः | १५ | १ | १२;१.१.९ | १ |
| ७० | कण्वबृहती | अश्वासहस्रया | ६ | २ | २४ | १ |
| ७१ | कण्वरथन्तरम् | पुनानस्सोमधारया | १४ | १ | २९ | १० |
| ७२ | काक्षीवतम् | सोमानांस्वरणम् | ४ | १ | २० | २ |
| ७३ | काण्वम् | वयमुत्वातदिदर्थाः | ४ | २ | २६ | १ |
| ७४ | कार्णश्रवसम् | तंवस्सखायोमदाय | १७ | १ | १६ | १ |
| ७५ | कार्तयशम् | पुरोजितीवोअन्धसः | १६ | १ | ९ | २ |
| ७६ | कालेयम् | तरोभिर्वोविदद्वसुम् | ६ | २ | ७ | १८ |
| ७७ | कावम् | अभिप्रियाणिपवते | १६ | २ | ६ | १० |
| ७८ | कावीतम् | शंनोदेवीरभिष्टये | १ | २ | १८ | २ |
| ७९ | कुत्सस्याधिरथीयम् | प्रसेनानीः शूरोअग्रे | १५ | २ | १६ | १ |
| ८० | कौल्मलबर्हिषम् | त्वंह्येहिचेरवेविदा | ६ | २ | १५ | १ |
| ८१ | कौत्सम् | इन्द्रसुतेषुसोमेषु | १० | १ | २६ | १ |
| ८२ | क्रतुवार्कितम् | इन्द्रक्रतुन्नआभर | ७ | १ | २४ | १ |
| ८३ | क्रोशम् | इन्द्रसुतेषुसोमेषु | १० | १ | २४ | २ |
| ८४ | क्रौञ्चम् | इदंह्यन्वोजसा | ५ | १ | ११ | १ |
| ८५ | क्रौञ्चाद्यम् | अयंपूषारयिर्भगः | १६ | १ | १३ | १ |

| | | | | | | |
|---|---|---|---|---|---|---|
| ८६ | क्षुल्लककालेयम् | नरोभिर्यो विददसुम् | ६ | २ | ४ | १ |
| ८७ | क्षुल्लकवैष्टम्भम् | तिस्रोवाचउदीरते | १३ | १ | ११ | ३ |
| ८८ | गतनिधनवाभ्रवम् | उच्चातेजातमन्धसः | १२ | २ | ६ | १ |
| ८९ | गायत्रपार्श्वम् | एषस्यधारयासुत | १७ | २ | ३१ | ३ |
| ९० | गारम् | इदंवसोसुतमन्धः | ३ | २ | २३ | १ |
| ९१ | गूर्दम् | अग्नेस्त्वंनोअन्तम | १२ | १ | १२ | १ |
| ९२ | गौराङ्गीरसम् | कस्यनूनंपरीणसि | १ | २ | २१ | १ |
| ९३ | गौक्षुल्कम् | त्वमङ्गप्रशंसिषः | ६ | २ | ३० | ५ |
| ९४ | गौतमम् | इममिन्द्रसुतंपिब | ९ | १ | २५ | ४ |
| ९५ | गौतमस्यमनाज्यम् | ययागौरोअपाकृतम् | ७ | १ | ८ | १ |
| ९६ | गौरीवितम् | अभिप्रगोपतिंगिरा | ५ | १ | २२ | २२ |
| ९७ | गौश्रृङ्गम् | तरणिरित्सिषासति | ६ | २ | ११ | १ |
| ९८ | गौषूक्तम् | यदिन्द्राहंयथात्वम् | ३ | २ | १८ | ६ |
| ९९ | घृतश्चुन्निधनम् | इदंह्यन्वोजसा | ५ | १ | १२ | १ |
| १०० | च्यावनम् | अलाय्यंशुर्मदाय | १३ | १ | २८ | २ |
| १०१ | जनित्रम् | सोमः पवतेजनिता | १५ | २ | ८ | १ |
| १०२ | जनित्राद्यम् | नहि्वश्चरमञ्चन | ६ | २ | १७ | ५ |
| १०३ | जनित्रोत्तरम् | " " | ६ | २ | १८ | २ |
| १०४ | जमदग्नेरभीवर्तः | पिबासुतस्यरसिनः | ६ | २ | १४ | १ |
| १०५ | जराबोधीयम् | जराबोधतद्विविड्ढि | १ | १ | २६ | १६ |
| १०६ | जागतंवारुणम् | घृतवतीभुवनानाम् | १० | १ | २० | १ |
| १०७ | तृतीयंक्रौञ्चम् | अयंपूषारयिर्भगः | १६ | १ | १५ | २ |
| १०८ | तैरश्चम् | श्रुधीहवंतिरश्च्या | ९ | २ | २ | १ |
| १०९ | त्रासदस्यवम् | अच्छानइन्द्रंमतयः | १० | १ | १७ | २ |
| ११० | त्रिणिधनमायास्यम् | पुनानस्सोमधारया | १४ | १ | २८ | २ |
| १११ | त्रिष्टुप्श्यावाश्वम् | आजुहोताहविषा | २ | १ | ३४ | १ |
| ११२ | त्रैककुभम् | यएकइद्विदयते | १० | २ | १४ | २ |
| ११३ | त्रैतम् | यत्सोममिन्द्रविष्णवि | १० | २ | १ | २ |
| ११४ | त्रैशोकम् | विश्वाः पृतनाअभि | ९ | २ | ३५ | १ |
| ११५ | त्वष्टुस्त्वाष्ट्री | सुतासोमधुमत्तम | १६ | १ | १६ | २ |
| ११६ | त्वाष्ट्री | ईङ्खयन्तीरपस्युवः | ५ | १ | ३२ | १ |
| ११७ | दक्षनिधनमौक्षम् | अयानोदेवसवितः | ४ | १ | २४ | २ |
| ११८ | दाढर्चच्युतम् | अर्षासोममद्युमत्तमः | १४ | १ | १० | १ |
| ११९ | दावसुनिधनम् | तमिन्द्रंवाजयामसि | ३ | २ | ११ | ३ |
| १२० | दाशस्पत्यम् | इन्दुर्वाजीपवते | १५ | २ | २९ | १ |
| १२१ | दीर्घम् | समुन्येयोवसूनाम् | १७ | २ | २२ | १ |



| | | | | | | |
|---|---|---|---|---|---|---|
| १२२ | दैर्घश्रवसम् | ऊर्ध्वस्त्वादयस्तेवसु | २ | १ | ६ | ८ |
| १२३ | दैवातिथम् | आत्वेतानिषीदत | ५ | १ | १ | १ |
| १२४ | दैवोदासम् | दस्यस्यगान्धरम् | १० | २ | २१ | ३ |
| १२५ | दैवोदासोत्तरम् | " " | १० | २ | २४ | १ |
| १२६ | द्यौतानम् | बृहस्यस्वाद्यमसवात् | ८ | २ | २२ | २ |
| १२७ | द्वितीयंक्रौञ्चम् | अयंपूषारयिर्भगः | १६ | १ | १४ | १ |
| १२८ | हिरण्यासंत्वाष्ट्री | सुतासोमधुमत्तमः | १६ | १ | २२ | ४ |
| १२९ | हिरण्यासंलोशम् | प्रोअयासीदिन्दुः | १६ | २ | १५ | २ |
| १३० | हिरण्यासमाकूपारम् | परिप्रियंहर्यतम् | १६ | १ | ३० | २ |
| १३१ | द्विहिङ्कारं वामदेव्यम् | पवोमदेवकोतये | १४ | २ | २२ | ५ |
| १३२ | द्वैगतम् | उपकाक्षिपरावति | ७ | २ | १ | ५ |
| १३३ | धर्म | पवस्वसोममहान् | ११ | २ | २० | १ |
| १३४ | धुरासाकमश्वम् | त्वावतः पुरूवसो | ५ | २ | १९ | ४ |
| १३५ | नानदम् | प्रत्यस्मैपिपीषते | ९ | २ | १३ | २ |
| १३६ | नार्मेधम् | पाहिनोअग्नएकया | १ | २ | २७ | २ |
| १३७ | निधनकामम् | अहमिद्धिपितु परि | ४ | २ | १३ | १ |
| १३८ | निषेधः | प्रसोमदेववीतये | १४ | २ | २४ | ८ |
| १३९ | निहवम् | असाविदेवं गोऋजीकम् | ८ | १ | ३६ | २ |
| १४० | नैपातिथम् | यदिन्द्रप्रागपागुदक् | ७ | २ | २७ | ४ |
| १४१ | नौधसम् | तंवोदस्ममृतीषहम् | ६ | १ | ३७ | १० |
| १४२ | पक्षम् | पवाकवाजसोयुवे | ८ | १ | ७ | १ |
| १४३ | पदनिधनशुक्रामुक्षीयम् | एतोन्विन्द्रंस्तवाम | ९ | २ | ७ | ७ |
| १४४ | पार्थम् | मुच्वापानङ्गन्ध | ८ | २ | ६ | ७ |
| १४५ | पाष्ठौहम् | तिस्रोवाचउदीरते | १२ | १ | १२ | १ |
| १४६ | पुरुवामम् | अग्नेमृळमहांअसि | १ | २ | ७ | १ |
| १४७ | पुरुषारवस्तीयम् | अश्वंनत्वावारवन्तम् | १ | १ | २८ | १ |
| १४८ | पुरुवारणिष्ठम् | अस्यप्रेषाहेमना | १५ | २ | ४ | ३ |
| १४९ | पृष्ठम् | पिबासुतस्यरसिनः | ६ | २ | १२ | १ |
| १५० | पौरुमद्गम् | अग्नेजरितर्विश्पतिः | १ | २ | ३२ | २ |
| १५१ | पौष्कलम् | अग्निर्मूर्धादिवःककुत् | २ | १ | १६ | १ |
| १५२ | पौरुहन्मनम् | पौरानपार्वंपरीणाम् | ७ | २ | १७ | ५ |
| १५३ | पौष्कलम् | इन्द्रमच्छसुताइमे | १७ | १ | ५ | ८ |
| १५४ | प्रतीचीनेडंकाशीतम् | कासआपानुभेषजम् | ५ | २ | ८ | ४ |
| १५५ | प्रमोदम् | परीतोषिञ्चतासुतम् | १४ | २ | १४ | १ |
| १५६ | प्रवद्भार्गवम् | प्रवंहिष्ठायगायत | २ | १ | २६ | १ |
| १५७ | प्रवद्भार्गवम् | प्रोअयासीदिन्दुः | १६ | २ | १६ | २ |

| | | | | | | |
|---|---|---|---|---|---|---|
| १५८ | प्लवः | पुनानस्सोमधारया | १४ | १ | ३४ | २ |
| १५९ | बार्हद्दुक्थम् | नत्वावृहन्तोअद्रयः | ८ | १ | १७ | ४ |
| १६० | बृहत्कम् | आगन्तामारिषण्यत | ११ | १ | १ | १ |
| १६१ | बृहदाग्नेयम् | त्वंहिक्षैतवद्यशः | २ | २ | २३ | २ |
| १६२ | बृहद्भारद्वाजम् | अग्निंदूतंवृणीमहे | १ | १ | ५ | १ |
| १६३ | भरद्वाजस्यपृश्नि | बृहद्भिरग्नेअर्चिभिः | १ | २ | २९ | ७ |
| १६४ | भारद्वाजम् | आत्वासहस्रमाशतम् | ६ | २ | २२ | ३ |
| १६५ | भासम् | यस्तेमदोवरेण्यः | १३ | १ | ५ | ३ |
| १६६ | मधुश्चुन्निधनम् | सपूर्व्योमहोनाम् | ९ | २ | १७ | ३ |
| १६७ | मरायम् | अग्निनरोदीधितिभिः | २ | २ | ९ | ५ |
| १६८ | मरुतांधेनु | त्रिरस्मैसप्तधेनवः | १६ | २ | २४ | २ |
| १६९ | महावैश्वामित्रम् | इन्द्रंविश्वाअवीवृधन् | ९ | १ | २२ | ३ |
| १७० | महावैष्टम्भम् | वयंघत्वासुतावन्तः | ७ | १ | ३१ | ७ |
| १७१ | माण्डवम् | अग्नेविवस्वदुषसः | १ | २ | ३४ | १ |
| १७२ | माधुच्छन्दसम् | त्वामिदाह्योनरः | ८ | १ | २३ | ३ |
| १७३ | मानवाद्यम् | नित्वामग्नेमनुर्दधे | २ | १ | २२ | ४ |
| १७४ | मानवोत्तरम् | प्रोअयासीदिन्दुरिन्द्रस्य | २ | १ | २३ | ४ |
| १७५ | मारुतम् | पुरांभिन्दुर्युवाकविः | ९ | २ | २१ | १ |
| १७६ | मार्गीयवम् | तद्वोगायसुतेसचा | ३ | २ | १ | ८ |
| १७७ | मैधातिथम् | माचिदन्यद्विशंसत | ६ | २ | १९ | ३ |
| १७८ | यज्ञसारथि | इमंस्तोममर्हतेजातवेदसे | २ | १ | ३८ | १ |
| १७९ | यज्ञायज्ञीयम् [illegible] | यज्ञायज्ञावोअग्नये | १ | २ | २५ | २४ |
| १८० | यद्वाहिष्ठीयोत्तरम् | यद्वाहिष्ठंतदग्नये | २ | २ | २६ | ३ |
| १८१ | यामम् | प्रोअयासीदिन्दुरिन्द्रस्य | १६ | २ | १८ | १ |
| १८२ | यामोत्तरम् | अग्नेमृडमहाँअसि | १ | २ | ८ | १ |
| १८३ | यौधाजयम् | इन्द्रमिद्देवतातये | ७ | १ | १ | २ |
| १८४ | यौक्ताश्वाद्यम् | वृषापवस्वधारया | १२ | २ | ३० | १ |
| १८५ | यौक्ताश्वोत्तरम् | „ „ | १२ | २ | ३१ | १ |
| १८६ | यौधाजयम् | पुनानस्सोमधारया | १४ | १ | ३६ | १० |
| १८७ | रयिष्ठम् | परीतोषिञ्चतासुतम् | १४ | २ | २ | ३ |
| १८८ | रौहितकूलीयाद्यम् | एन्द्रसानसिंरयिम् | ४ | १ | १ | ४ |
| १८९ | रौहितकूलीयोत्तरम् | „ „ | ४ | १ | २ | १ |
| १९० | रौरवम् | पुनानस्सोमधारया | १४ | १ | ३५ | ५ |
| १९१ | लौशाद्यम् | प्रोअयासीदिन्दुरिन्द्रस्य | १६ | २ | १४ | २ |
| १९२ | वरुणसाम | प्रमित्रायप्रार्यम्णे | ७ | १ | १८ | ३ |
| १९३ | वसिष्ठप्रियम् | इममिन्द्रसुतंपिब | ९ | १ | २७ | २ |



| | | | | | | |
|---|---|---|---|---|---|---|
| १९४ | वषट्कारणिधनम् | अभित्वापूर्वपीतये | ७ | १ | १९ | ५ |
| १९५ | वाजिनधनंकौत्सम् | अभीनोवाजसातमम् | १६ | १ | २९ | ४ |
| १९६ | वाजिनधनंसौहविषम् | परिप्रधन्वेन्द्राय | ११ | २ | १५ | १ |
| १९७ | वाचस्साम | आसोतापरिषिञ्चत | १७ | २ | १५ | ३ |
| १९८ | वाजजित् | अभिप्रियाणिपवते | १६ | २ | ५ | २ |
| १९९ | वाजजित्पूर्वम् | मृज्यमानः सुहस्त्या | १५ | १ | १३ | १ |
| २०० | वाजदावर्यः | रेवतीर्नस्सधमादे | ४ | २ | १४ | २ |
| २०१ | वात्सम् | आतेवत्सोमनोयमत् | १ | १ | १६ | १ |
| २०२ | वात्सप्रम् | अगुप्रातेदक्षिणंहरतम् | ८ | २ | १० | २ |
| २०३ | वात्सप्राद्यम् | „ „ „ | ८ | २ | ११ | १ |
| २०४ | वामदेव्यम् | कयानश्चित्रआभुवत् | ५ | १ | २५ | १२ |
| २०५ | वारुणम् | मसीमदेवआपः | ७ | २ | ६ | ३ |
| २०६ | वायोरभिक्रन्दम् | इन्द्रायसोमसुषुतः | १५ | २ | २६ | १ |
| २०७ | वारवन्तीयम् | अश्वंनत्वावारवन्तम् | १ | १ | ३० | २३ |
| २०८ | वाराहम् | प्रकाव्यमुशनेव ब्रुवाणः | १५ | १ | ३६ | २ |
| २०९ | वार्त्रतुरम् | यज्ञामहद्रन्द्रम् | ९ | १ | ४ | १ |
| २१० | वार्षम् | आतेदक्षंमयोभुवम् | १४ | १ | २ | २ |
| २११ | वासम् | कईंवेदसुतेसचा | ९ | १ | १८ | ३ |
| २१२ | वासिष्ठमाद्यम् | अस्यप्रेषाहेमनाः | १५ | २ | ५ | ३ |
| २१३ | वासिष्ठमासितम् | प्रवंहिष्ठायगायत | २ | १ | २८ | २ |
| २१४ | वासिष्ठोत्तरम् | अस्यप्रेषाहेमना | १५ | २ | ६ | ४ |
| २१५ | विकर्णमाद्यम् | एन्दुमिन्द्रायसिञ्चत | १० | २ | ७ | १ |
| २१६ | विधर्म | पवस्वसोममहे | ११ | २ | २१ | १ |
| २१७ | विलम्बसौपर्णम् | उद्वेदभिश्रुतामघम् | ३ | २ | २६ | ३ |
| २१८ | विशोविशीयम् | विशोविशोवोअतिथिम् | २ | २ | २७ | ४ |
| २१९ | वीङ्कम् | यदिन्द्रचित्रमेहह | ९ | १ | ३१ | १ |
| २२० | वैखनसोमसाम | अभित्वंमेषंपुरुहूतम् | १० | १ | १८ | १ |
| २२१ | वैखानसम् | नकिष्टंकर्मणानशत् | ६ | २ | २० | २ |
| २२२ | वैतहव्यम् | पान्तमावोअन्धसः | ४ | २ | १८ | २ |
| २२३ | वैरूपचतुर्थम् | परित्याद्योमिनिश्रिष्ठाः | १३ | १ | ३४ | १ |
| २२४ | वैरूपतृतीयम् | „ „ „ | १३ | १ | ३३ | १ |
| २२५ | वैरूपद्यम् | „ „ „ | १३ | १ | ३१ | १ |
| २२६ | वैश्वामित्रम् | एषप्रकोशेमधुमान् | १६ | २ | १२ | १ |
| २२७ | वैयश्वम् | उभयंशृणवच्चनः | ८ | १ | १० | ३ |
| २२८ | वैशम् | अस्यमौअद्रिभिस्सुतम् | १४ | १ | ५ | ३ |
| २२९ | वैश्वज्योतिषमध्यमम् | प्रकाव्यमुशनेवं | १५ | २ | २० | १ |

| | | | | | | |
|---|---|---|---|---|---|---|
| २३० | वैश्वज्योतिषमुत्तरम् | प्रहिन्वानोजनिता | १५ | २ | ३१ | १ |
| २३१ | वैश्वज्योतिषाद्यम् | प्रतेधारामधुमतीः | १५ | १ | १९ | १ |
| २३२ | वैश्वमनसम् | एतोन्विन्द्रंस्तवाम | १० | २ | ८ | १ |
| २३३ | वैश्वामित्रम् | असाविसोमइन्द्रते | ९ | २ | ३ | १ |
| २३४ | वैष्णवाद्यम् | तवाहंसोमरारण | १० | १ | १ | १ |
| २३५ | वैष्णवोत्तरम् | " " | १० | १ | २ | १ |
| २३६ | शङ्कु | एतमुत्यंमदच्युतम् | १७ | २ | १८ | ४ |
| २३७ | शाकलम् | यदद्यकच्चवृत्रहन् | ३ | २ | २७ | २ |
| २३८ | शाक्त्यम् | प्रवइन्द्रायमादनम् | ४ | २ | १९ | १ |
| २३९ | शाक्वरवर्णम् आर्ष ६.२६ | सुरूपकृत्नुमूतये | ४ | २ | ३३ | २ |
| २४० | शाम्मदम् | पवस्वदेवआयुषक् | १३ | २ | १३ | ३ |
| २४१ | शार्करम् | योनइदमिदंपुरा | १० | २ | ३५ | १ |
| २४२ | शार्ङ्गम् | अञ्जतेव्यञ्जतेसमञ्जते | १६ | २ | ३३ | १ |
| २४३ | शुद्धाशुद्धीयम् | एतोन्विन्द्रंस्तवाम | ९ | २ | ७ | २ |
| २४४ | शैखण्डिनम् | असृक्षतप्रवाजिनः | १० | १ | १ | १ |
| २४५ | शैशवम् | उच्चातेजातमन्धसः | १२ | २ | ८ | २ |
| २४६ | श्रीवतम् | सखायआनिषीदत | १७ | १ | १५ | २ |
| २४७ | श्नौष्ठम् | अयापवापवस्वेना | १६ | १ | १ | १ |
| २४८ | श्यावाश्वम् | पुरोजितीवोअन्धसः | १६ | १ | ११ | १० |
| २४९ | श्येनः | यमेवविन्द्ररोदसी | १० | १ | २२ | १ |
| २५० | श्यैतम् | अभिप्रवः सुराधसम् | ६ | १ | २२ | ९ |
| २५१ | श्रायन्तीयम् | श्रायन्तइवसूर्यम् | ७ | २ | ५ | ३ |
| २५२ | श्रुध्यम् | अग्नेवाजस्यगोमतः | ३ | १ | १५ | १७ |
| २५३ | श्रौतकक्षम् | इन्द्रायमद्वनेसुतम् | ४ | २ | २९ | २ |
| २५४ | सत्रासाहीयम् | त्यमुवस्सत्रासाहम् | ५ | १ | २७ | १४ |
| २५५ | सदोविशीयम् | पुनानस्सोमधारया | १४ | १ | ३१ | ३ |
| २५६ | सन्तनि | एवस्यधारयासुतः | १७ | २ | ३२ | ८ |
| २५७ | सफम् | पवस्वमधुमत्तम | १७ | २ | ५ | ८ |
| २५८ | सफन्तम् | त्वमग्नेगृहपतिः | २ | १ | २० | ८ |
| २५९ | सञ्जयम् | आतेअग्नइधीमहि | ११ | २ | २ | १ |
| २६० | सभा | अग्निन्निपृष्ठंवृषभम् | १५ | २ | १० | २ |
| २६१ | संहितम् | स्वादिष्ठयामदिष्ठया | १२ | २ | २२ | ८ |
| २६२ | सहोर्दैर्घतमसम् | पिबासोममिन्द्र | १० | २ | ३२ | ४ |
| २६३ | साकमश्वम् | एह्यूषुब्रवाणि | १ | १ | १४ | ३ |
| २६४ | साध्यम् | यजिष्ठंत्वाववृमहे | ३ | १ | १७ | १ |
| २६५ | साध्रम् | त्वमिन्द्रयशाअसि | ६ | २ | ३२ | ५ |



| | | | | | | |
|---|---|---|---|---|---|---|
| २६६ | सान्तिकमाधवाद्यम् | पुनानस्सोमधारया | १४ | १ | ३० | २ |
| २६७ | सामराजम् | अभीनवन्तेअद्रुहः | १६ | २ | ९ | २ |
| २६८ | सामराजस्योत्तरम् | " " | १६ | २ | ११ | १ |
| २६९ | संवर्तम् | एन्द्रनोगधिप्रिय | १० | २ | २६ | १ |
| २७० | सिमानांनिधेयः | अभीनवन्तेअद्रुहः | १६ | २ | १२ | १ |
| २७१ | सुज्ञानम् | सोमः पुनानऊर्मिणा | १७ | १ | २६ | ८ |
| २७२ | सुरूपाद्यम् | स्वादिष्ठयामदिष्ठया | १२ | २ | १५ | २ |
| २७३ | सुरूपोत्तरम् | " " | १२ | २ | १६ | ६ |
| २७४ | सैन्धुक्षितम् | अग्निर्वोवृधन्तम् | १ | २ | १ | २ |
| २७५ | सैन्धुक्षितमैडम् | " " | १ | २ | ३ | ४ |
| २७६ | सोमसाम | यस्तेमदोवरेण्यः | १३ | १ | २ | २ |
| २७७ | सोमसाम सदसन्दानम् | पुनानस्सोमधारया | १४ | १ | २७ | २ |
| २७८ | सौम्मतम् | आतेअग्न इधीमहि | ११ | २ | १ | १ |
| २७९ | सौभरम् | तमूर्धन्या स्वर्णरम् | ३ | १ | ३१ | ७ |
| २८० | सौमित्रम् | इन्द्रइद्धे ददातुनः | ५ | २ | २६ | ४ |
| २८१ | " | इन्द्रायसामगायत | १० | २ | ११ | १ |
| २८२ | सौमेधम् | योगेयोगेतवस्तरम् | ५ | १ | ८ | १ |
| २८३ | सौश्रवसम् | अपादुशिप्र्यन्धसः | ४ | २ | २ | २ |
| २८४ | सौहविषम् | परिप्रधन्वेन्द्राय | ११ | २ | ११ | १ |
| २८५ | स्वः पृष्ठम् | अग्निर्वोक्षासजायत | १५ | १ | १८ | २ |
| २८६ | स्वर्निधनं सौहविषम् | परिप्रधन्वेन्द्राय | ११ | २ | १३ | १ |
| २८७ | स्वारंकौत्सम् | यदिन्द्रचक्रसेष्वा | ५ | १ | ५ | १ |
| २८८ | स्वारंबाष्कुर्री | सुतासोमधुमत्तमः | १६ | १ | २१ | २ |
| १८९ | स्वारंसौपर्णम् | उद्धेदभिश्रुतामघम् | ३ | २ | २५ | ५ |
| २९० | हरिश्रीनिधनम् | गिर्वणःपाहिनस्सुतम् | ५ | २ | २१ | २ |
| २९१ | हारायणम् | सत्यमुपुत्रपीति | ७ | १ | ११ | ३ |
| २९२ | हारिवर्णम् | तंतेमदंगृणीमसि | १० | १ | ३४ | १ |
| २९३ | हाविष्कृतम् | देवानामिदवोमहत् | ४ | १ | २० | ३ |
| २९४ | हाविष्मतम् | " " | ४ | १ | १९ | ४ |

एतेनेदमपि ज्ञातम् — अष्टनवत्युत्तरैकशतोत्तरसहस्रसंख्याकेषु ग्रामेगेयगानेषु साम्नसु केवलं चतुर्नवत्युत्तरद्विशततमान्येवार्षेयाणां भागः कल्पित इति। तत्रापि पञ्चविंशे द्वे बहूनि सामानि गीतया २३६ मन्त्रानाश्रयन्ति। तत्रैव भागस्य विनियोगं सप्रमाणकम् भगवान्मशको गार्ग्यः स्वकीये आर्षेयकल्पसूत्रे। क्षुद्रसूत्रकारश्च क्षुद्रसूत्रकल्पसूत्रे।

# अथोह्यगीतीनां योनिगीतिपट्टिका

| | | | आरण्यकगाने स्थलनिर्देशः | | | |
|---|---|---|---|---|---|---|
| | | | प्रपाठकः | अर्द्धः | साम- | |
| १ | अग्नेरर्कः | अग्निर्मूर्धादिवः | १ | २ | ७ | ३ |
| २ | अग्नेर्व्रतम् | ” | ६ | १ | १ | १ |
| ३ | अञ्जोविंशपम् | यद्यावइन्द्रते | १ | १ | १ | १ |
| ४ | अतिषङ्गम् | पुरोजितीवः | १ | २ | २२ | ३ |
| ५ | अन्तरिक्षम् | पिबासुतस्य | १ | १ | ९ | ६ |
| ६ | अपत्यम् | उच्चातेजातम् | ३ | १ | १२ | १ |
| ७ | अपांव्रतम् | समन्यायन्त्युप | ४ | २ | ३,४ | २ |
| ८ | अरिष्टम् | पवित्रंते विततम् | १ | १ | ११ | २ |
| ९ | अश्विनोव्रतम् | इमाउवां दिविष्टये | ४ | १ | १५,१६ | २ |
| १० | अष्टेडपदस्तोभम् | धर्तादिवः पवते | १ | २ | २५ | २ |
| ११ | आज्यदोहानि | मूर्द्धानंदिवोअरतिम् | १ | २ | १८,१७,१६ | ३ |
| १२ | आथर्वणम् | शन्नोदेवीरभिष्टये | १ | १ | २३ | ९ |
| १३ | आभ्राजम् | अग्निमूर्द्धा | ६ | १ | ६ | १ |
| १४ | इलान्दम् | अग्निरस्मिजन्मना | ५ | १ | १ | १ |
| १५ | ईनिधनवार्कजम्भोत्तरम् | प्रवइन्द्रायबृहते | ३ | १ | २८ | २ |
| १६ | उद्भित् | उपत्वाजामयोगिरः | २ | २ | ९ | १ |
| १७ | ऋषभशाक्वरः | स्वादोरित्थाविषूवतः | १ | २ | २१ | १ |
| १८ | ऋषभरैवतः | सुरूपकृत्नुमूतये | १ | २ | १९ | १ |
| १९ | ऋषभो वैराजः | पिबासोममिन्द्र | १ | २ | २० | ५ |
| २० | एकवृषम् | यएकइद्विदयते | २ | १ | १४ | १ |
| २१ | गवांव्रतम् | तेमन्वतप्रथमम् | ४ | १ | १७ | १ |
| २२ | ” | अग्निमीळेपुरोहितम् | ४ | १ | १८ | १ |
| २३ | चतुरिडपदस्तोभम् | धर्तादिवः पवते | १ | २ | २७ | १ |
| २४ | चतुर्थस्वरम् | यज्जायथाअपूर्व्य | ३ | २ | १२ | २ |
| २५ | तृतीयस्वरम् | ” | ३ | २ | ११ | २ |
| २६ | तौरश्रवसम् | यदिन्द्रशासो | ३ | १ | ५ | १ |
| २७ | तौरश्रवोत्तरम् | ” | ३ | १ | ६ | १ |
| २८ | दीर्घतमसोऽर्कः | धर्तादिवः पवते | १ | २ | ४ | ८ |
| २९ | देवस्थानम् | पिबासुतस्यरसिनः | १ | १ | १५ | ३ |
| ३० | द्वितीयस्वरम् | यज्जायथाअपूर्व्य | ३ | २ | १० | २ |
| ३१ | द्विरिडपदस्तोभम् | धर्तादिवः पवते | १ | २ | २८ | १ |
| ३२ | नित्यवत्सम् | अयांरुचाहरिण्यापुनानः | २ | १ | ३० | ६ |
| ३३ | पञ्चनिधनंवामदेव्यम् | कयानश्चित्रआभुवत् | २ | १ | ३० | १ |
| ३४ | पञ्चनिधनंवैरूपम् | यद्यावइन्द्रतेशतम् | १ | १ | २ | ३ |
| ३५ | पयः | अग्नेर्युक्ष्वाहियेतव | ३ | १ | ८ | १ |
| ३६ | पार्थुरश्मम् | स्वादोरित्थाविषूवतः | ३ | १ | १८ | २ |
| ३७ | प्रथमस्वरम् | यज्जायथाअपूर्व्य | ३ | २ | ९ | २ |
| ३८ | प्रसर्पम् | चर्षणीधृतंमघवानम् | २ | १ | २ | १ |
| ३९ | बलभित् | उपत्वाजामयोगिरः | २ | २ | १० | १ |
| ४० | बार्हद्गिरम् | इन्द्रोमदायवावृधे | ३ | १ | १६ | १ |
| ४१ | बृहत् | त्वामिद्धिहवामहे | १ | १ | २७ | २४ |
| ४२ | भद्रम् | इमानुकंभुवना | ३ | १ | २१ | १ |
| ४३ | भर्गः | बृहदिन्द्रायगायत | २ | २ | ११ | ४ |
| ४४ | भासम् | प्रकाव्यमुशनेवब्रुवाणो | ६ | १ | ८ | २ |
| ४५ | भ्राजम् | अग्नआयूंषिपवसे | ६ | १ | ५ | १ |
| ४६ | मरुतांसंस्तोभम् | प्रवइन्द्रायबृहते | १ | २ | ६ | २ |
| ४७ | महादिवाकीर्त्यम् | विभ्राड्बृहत्पिबतु | ६ | १ | १५ | ५ |
| ४८ | महावैराजम् | पिबासोममिन्द्र | २ | १ | ३१ | ३ |
| ४९ | महासाम | प्रवश्चक्रमराज्ये | २ | १ | २६,२७ | २ |
| ५० | यामम् | इन्द्रमिद्गाथिनोबृहत् | ३ | १ | ११ | १ |
| ५१ | यशः | तमेविन्द्रायगंवसु | २ | २ | १२ | २ |
| ५२ | यामम् | अग्निमीळेपुरोहितम् | ४ | १ | १३ | १ |
| ५३ | रथन्तरम् | अभित्वाशूरनोनुमः | २ | १ | २१ | २२ |
| ५४ | राजनम् | इन्द्रंनरोनेमधिता | ४ | २ | १९ | १ |
| ५५ | रायोवाजीयम् | स्वादोरित्थाविषूवतः | ३ | १ | १४ | ५ |
| ५६ | रैवती | रेवतीर्नः सधमादे | २ | १ | १७ | २ |
| ५७ | वार्कजम्भासम् | प्रवइन्द्रायबृहते | ३ | १ | २७ | ६ |
| ५८ | वार्षाहरे | त्वमेतदधारयः | २ | २ | २०,२१ | २ |
| ५९ | विकर्णम् | विभ्राड्बृहत्पिबतु | ६ | १ | ७ | ३ |
| ६० | वृषिण | सोमइद्धमिवंधुरा | २ | १ | १५ | १ |
| ६१ | शाक्वरवर्णम् | उच्चातेजातमन्धसः | २ | १ | १९ | १ |
| ६२ | श्येनः | उभेयदिन्द्ररोदसी | ३ | १ | १९ | १ |
| ६३ | श्रेयः | इमानुकंभुवना | ३ | १ | २२ | १ |
| ६४ | षडिडपदस्तोभम् | धर्तादिवः पवते | १ | २ | २६ | १ |
| ६५ | सत्कृति | स्वादोरित्थाविषूवतः | ३ | १ | १७ | ३ |
| ६६ | सत्पहम् | त्वामिद्धिहवामहे | २ | १ | २२ | २ |
| ६७ | संसर्पाद्यम् | चर्षणीधृतंमघवानम् | २ | १ | १ | १ |
| ६८ | संसर्पोत्तरम् | ” ” | २ | १ | ३ | १ |
| ६९ | सिमाः | विदामघवन्विदाः | महानाम्न्यः | | | २ |

| | | | | | | |
|---|---|---|---|---|---|---|
| ७० | स्वाशिरावर्हः | स्वादिष्ठयामदिष्ठया | १ | २ | ३ | ६ |
| ७१ | हस्वावैरूपम् | यद्यावइन्द्रतेशतम्' | १ | १ | २ | ४ |

तदेतत्सर्वमपरे व्युत्थापयन्ति समाश्रयन्ति चानयोरपि भागयोरपौरुषेयत्वम्। तथाहि—"पुरुषविद्यानित्यत्वात्कर्मसम्पत्तिर्वेदे" इति यास्कः सर्वेषां वेदानामपौरुषेयत्वं प्रतिपादयति। तत्र कर्मसम्पत्तिर्मन्त्राणां प्रयोजनम्। कर्मणः सम्पत्तिः कर्मसम्पत्तिः। मन्त्राननुच्चारयन्तस्तदवगमितार्था यदि यज्ञमनुतिष्ठेम तदानीमेव तत्फलं लभेमहि। पुरुषवाक्येषु विद्याया अनित्यत्वात् मन्त्रेषु तदसंभवान्मन्त्रा आम्नाता इति प्रघट्टार्थः। "ऋचो यजूंषि सामानि" इति मन्त्रवर्णादिमे मन्त्रास्त्रिविधाः। यथा होत्रध्वर्यू स्वकीयमपौरुषेयं मन्त्रभागमुच्चार्य यज्ञं समृद्धं कुरुतस्तथैवोद्गातापि भागाभ्यामाभ्यां स्तुतिं संपादयन्यज्ञं समर्द्धयति इति स्थितम्। यद्ययं भागः पौरुषेयः तर्हि इकारस्य क्वचिदाइभावः क्वचिच्च ओइ—भावः क्वचिदन्यथा क्वचित्ततोऽन्यथा च दृश्यते इति विश्वासाभावादस्माकं सन्देहो भवेदूहगाने। पुरुषापराधाच्च यज्ञो नश्यन्यजमानं नाशयेत्। अतोऽवश्यं पुरुषभिन्नापरिहारार्थं मन्त्रत्वसामान्यादपौरुषेयत्वं स्वीकर्तव्यमेवेति।

पूर्वपक्षोक्तान्हेतूनपि खण्डयन्ति स्म। यदपि मीमांसकमतेन पौरुषेयत्वमनयोः स्थापितं तदपि न चमत्कृतिमावहति। यैरेव कारणैर्वेयारण्यकगानयोरपौरुषेयत्वं समर्थितं भट्टपादैः कल्पसूत्राधिकरणे—

> सामवेदे यदोग्नाइप्रभृतीनां प्रयुज्यते।
> रूपं तत्रापि पौंस्नत्वे नाभिप्रायोऽस्ति कश्चन॥

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामृगक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्न इत्यस्य पदस्याकारमोकारेण प्लुतेन विकुर्यात्।

> तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम्।
> तच्छब्दस्य च तोशब्दं येशब्दस्यायिरूपताम्।
> को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति।
> तेन वेदत्वतन्त्रत्वं रूपादेवावगम्यते॥

इत्यादि, तेषां हेतूनामत्रापि सद्भावात्। तथाहि "एवाह्यसिवीरयुः" इत्यत्र हिपदं सौभरे साम्नि गानकाले हो भवति—"एवाऽ२ हो ऽ२ असिवीरयोवा" इति। हो असि इति गाने न कश्चन शब्दार्थो भवति। ऋक्पाठे यथोऽवगतः। कथं वा इकारस्यौकारः कर्तव्य इति ज्ञातः प्रयुक्तश्च। ननु "आइप्राप्तमोइ भवति" इति पुष्पसूत्रवचनादवगत्य तथा प्रयुक्तमिति। हन्त विचारयतु भवान् सिद्धेषु वेदेष्वसंमोहायाध्येतॄणां लक्षणग्रन्थान्प्राणयन् महर्षयः। न तु महर्षिवाक्यानि पूर्वमभूवन्।

[1] यद्युर्नवत्युत्तरद्विशतसंख्याकेषु साम्सु साम्नामेकसप्ततिं गायन्ति। यद्यपि वेदे तु बहूनि इति २०९ सामानि गीतानि। भूरादिपञ्च व्याहृतिसामानि स्तोभेषु भवन्ति। अथवात्र प्रकृतरहस्यग्रन्थे योनिसाम नास्ति। शाखान्तरीयं साम दृष्ट्वा गीतम्।



हिशब्दस्य ओइभावो भवतु "तालव्यमाइ यदुक्तम्" इति सूत्रेण आइभावे कृते तथैवोच्चारणं मास्तु इति ओइभावार्थं सूत्रं प्राणयन्। सुहृद्भूत्वोपदिशन्ति लक्षणशास्त्रम्। न तु लक्षणानुरोधेन लक्ष्यसिद्धिः। पौरुषेयेषु सर्वं भवितुं शक्यते। एवं द्युम्नानि मानुषाणाम् इति द्वे पदेऽर्थाभिधानपरायणे को नाम बुद्धिपूर्वकारी द्युम्नोनाऽ१इमाऽ२। नुषाऽ२३ णाम् इति द्युम्नानिमा, नुषाणाम्-एवं छेदं कृत्वाऽनर्थकतामापादयेत्।

किञ्च सर्वतत्त्ववेत्ता भट्टपादः बह्वभिप्रायमुक्तं संक्षिप्तं शाबरवाक्यं विवृण्वन्संभाविताम् दोषान् यथावदुद्घाट्य पूर्वापरविरोधाभावेन समर्थयामास। स्वेनैव स्थापितानां वेदापौरुषेयत्वकारणानां प्रकृतगानयोः प्राप्तिं सम्भाव्य किमर्थं न निवारयामास "सामानि मन्त्रम्" इत्यधिकरणे।

अपि च कल्पसूत्रकारान्मशकाश्वलायनादीनिवानयोर्गायो कर्तॄन् स्मरन्ति शिष्टाः। एतेन कर्तृस्मरणं तु चिरकालव्यवधानादुपपन्नमिति यदुपवर्णयन्ति सन्नातीव मनोहरम्। पश्यन्तु प्रामाणिकानां वैदिकमूर्धन्यानां वचांसि वेदानामपौरुषेयत्वसाधने—"अतोऽवश्यं स्मर्तव्यानां पुरुषधौरेयाणां वेदकर्तॄणां कदापि यदा विस्मरणसंशये वा पूर्वतने वा नासीत्तदास्य वेदराशेरस्त्येव कर्तेति निश्चय एव स्याधीयात्। कर्तुरुच्छेदो हि कश्चिद्देशस्यैवोच्छेदेन वा अध्येतृपुरुषाणां सर्वनाशेन वा भवितुमर्हति। न तदुभयमत्र सम्भाव्यते" इत्यादि। येन न्यायेन वेदानां साधिताऽनादिता पुरा स सर्वोऽप्यत्र आगर्ति भागयोरपौरुषेयत्वे।

यदपि "यद्योन्यां तदुत्तरयोर्गायति" इति विधिवाक्यबलादनयोः पौरुषेयत्वं साधितं तदप्यपौरुषेयवादिनामनुकूलमेव। तथा हि—योनिपदस्य द्विविधोऽर्थः सम्पादनीयः। एकस्तावत् योन्यां यस्यामृचि सामोत्पन्नम् यथा वा—रथन्तरं साम बृहत्त्वामभिनोनुम इत्यस्यामुत्पन्नमिति सा ऋक् अभिस्वा योनिः भवति। तत्र यत्साम रथन्तरं यथागीतं तदेव तत्सूक्तस्थयोरुत्तरयो ऋचोर्गेयम् इति। द्वितीयस्तु—वृषापवस्वेति सूचेऽस्यामहीयवं गीयते। तत्र पूर्वोक्तोऽर्थोऽनुपपन्नः। आमहीयवसाम च "उच्चातेजातमन्धसः" इत्यस्यामृच्युत्पन्नं न तु वृषापवायाम्। अतः सूक्ते या प्रथमा ऋक् साऽपि योनिशब्देन व्यवहर्तव्या। तत्र यत्साम गीतं तदेवोत्तरयोरपि भवेत् इति। एतादृशो द्विविधोऽप्यर्थः पौरुषेयतासम्पादनाय न प्रभवति। त्रिष्वपि मन्त्रेषु पूर्वमेव गानं सिद्धम्। तदवलोक्य कस्यचन सन्देहो भवेत् छन्दोनामके ग्रन्थे सर्वाणि सामान्येकस्यामेवर्चि दृष्टानि। तथात्रापि भवितव्यम् न तु बह्वीष्वृक्ष्वेकमेव साम इति। तदभ्योत्तरसाम्नोर्गानाभावः स्यात्। तस्य सन्देहमपनुदति शास्त्रे "यद्योन्यां तदुत्तरयोर्गायति" इत्यपि वक्तुं शक्यते। तथाज्ञातार्थं ज्ञापयन्निवविधिरनुकूलो भविष्यति। श्रुतिषु स्मृतिषु वा पौरुषेयत्वमनयोर्नोपदिष्टम्। अतस्तन्मूला शिष्टोक्तिरपि प्रामाण्यस्वीकारोतुं शक्नोति।

यद्यप्यार्षेयब्राह्मणमुल्लिख्य पौरुषेयत्वं साधितं तदप्यपेक्ष्यम्। अत्रत्यानां

साम्नां यथाक्रमसृषिसंज्ञे भागान्तरे विवृतमिति पिष्टपेषणं माभूदित्युपेक्षितं आर्षेयब्राह्मणे। अस्ति ताण्ड्यब्राह्मणं प्रौढब्राह्मणं पञ्चविंशब्राह्मणमित्यनेकधा व्यवह्रियमाणमार्षं ब्राह्मणं छन्दोगानाम्। येन क्रमेणाग्नेयीव्रादीनि सामानि गीयन्ते तेनैव क्रमेण तेषां ऋषीन् संज्ञाः प्रयोगं च निर्दिशति तत्। न हि कश्चिद्श्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते।

यदपि व्रताभावादनयोः पौरुषेयत्वं प्रतिष्ठापयति पूर्वपक्षी तत्रोच्यते यान्वेदभागान्व्रतं विनैवाध्यापयन्ति शिष्टास्तेषां किं पौरुषेयत्वम्, किंतु तादृशीनामृचामाहोस्वित्तादृशानां साम्नामिति पृष्टो भवान्प्रथमं कल्पं न स्वीकरोति। यतोहि व्रतं विनैव ताण्ड्यब्राह्मणादीन् सप्त वेदभागानध्यापयन्ति। तेषां पौरुषेयता स्यात्। एषां ब्राह्मणानामपौरुषेयत्वं वार्तिककारः कण्ठतः स्थापयामास। तथा हि—"न असन्नियमात्"इति जैमिनिसूत्रं व्याख्यातं भाष्यकारैः "नैतदेवम्। असन्नियमात्। नैतत्सम्यङ्निबन्धनम्। स्वराभावात्" इति। स्वराभावात्पौरुषेयत्वं स्थापितमसङ्गतमिति मन्यमानो वार्तिककार आह "यत्तु भाष्यकारेण स्वराभावादित्यनियमार्थं व्याख्यानम् कृतम्—

तन्मन्त्रेष्वप्यवेदत्वं कल्पाधीतेषु साधयेत्।
तथा गृह्योपदिष्टेषु, छान्दोग्यब्राह्मणेषु च।
ब्राह्मणान्यपि यान्यष्टौ सरहस्यान्यधीयते।
छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतस्वरः॥
तेन तेष्वप्यवेदत्वं स्वराभावात्प्रसज्यते।
तस्मादुक्तस्वसंवेद्यरूपाभावोऽत्र कारणम्॥ इति।

स्वराभावात्पौरुषेयत्वमिति यदि वर्ण्यते तर्हि छान्दोग्यब्राह्मणेषु स्वराभावात्पौरुषेयत्वमापतेत्। अपौरुषेयाणीमानि छन्दोगब्राह्मणानि, इति वार्तिकाशयः।

द्वितीयः पक्षोऽपि न। द्वितीयं पक्षं स्वीकुर्वन् भवान्—

नन्वेवं तुरगारूढस्तुरङ्गं विस्मृतो भवान्।
वेदप्रामाण्यसिध्यर्थमुत्थितस्तत्प्रहीणवान्॥

इति मिश्रशालिकनाथवाक्यं स्मारयति। तथाहि समग्रा सामवेदसंहिता ऋग्रूपा अनादिनिधना इति भवतां सिद्धान्तः। पूर्वार्चिकसंहिताध्ययनार्थमेव व्रतान्युपदिष्टानि। उत्तरार्चिकाध्ययनस्य किमपि व्रतं न हि विहितम् न वा श्रुतम्। व्रताभावात्पौरुषेयता भवेदस्य भागस्य। ततश्च सिद्धान्तहानिः।

तर्हिस्तु तृतीयः कल्प इति चेत् सोऽप्ययुक्त इति भाति। तथाहि "उद्वयं तमसस्परि"इत्यस्यामृचि उद्वयाम इति साम प्रकृतिग्रन्थे महानाम्न्यनन्तरं पठ्यते। अपौरुषेयत्वादिदं सामाधीयते। न चेदं वेदान्तर्गतं वक्तुं शक्यते। अस्य साम्नोऽत्र तत्रापौरुषेयैस्सामान्तरैस्सह विनियोगात् "वेदादिवेदान्तानि त्रीण्याज्यदोहान्यादित्यस्तस्यरेतस उद्वयन्तमसस्पर्युन्नयामि" इत्यपरसूत्रे। "या रौहिणी पौषी वा पौर्णमासी स्यात्तदुद्वयन्तमादित्यमुपतिष्ठेतोद्वयं तमसस्परीत्येतेन" इति जरासृत्युप्रयोगे साम-



विधानब्राह्मणे, "उद्वयं तमसस्परीति वा सर्वेषाम्" इत्येकमनुष्यवशीकरणप्रकरणे तत्रैव ब्राह्मणे। अस्य साम्नोऽध्ययनार्थं व्रतमुपदिष्टं न पश्यामो न वा स्मरामः। ततश्च व्रतं विनैवाधीतानां वेदभागानां पौरुषेयता यथा नास्ति तथैवात्रापि भवितुमर्हतीति।

एतयोरपौरुषेयत्वस्वीकारे को लाभ इति चेत्, पौरुषेयत्वे ह्यनयोर्भागयोरध्ययनविध्यभावात् सर्वेऽप्यत्राध्ययने न प्रवर्तेरन्। ततश्च साष्टब्राह्मणग्रामेगेयारण्यकगानाध्ययनानन्तरं समाप्तता भवेयुः। अतस्त्वे पूर्वोक्तभागं यो नाधीते न तं समग्रवेदाध्यायिनं मन्यन्ते शिष्टाः। यावद्रहस्यभागपर्यन्तं नाधीतं तावत्समग्रैका शाखा नाधीतेति मन्यन्ते। तदध्ययनार्थं वाक्यं नावलोकयामः। वेदत्वे तु स्वाध्यायविधिना संगृहीतत्वात्समग्रशाखाध्ययनसिद्धिः। ततश्चैकदेशाध्ययने पूर्वोक्तशिष्टाचारोऽनुगृहीतो भवति।

यदपि आचार्यनियमात् इत्यादिवाक्यनिगुरम्भैः पौरुषेयत्वमुक्तं तदप्युच्यते। "संहिताकारपदकारसूत्रकारब्राह्मणकाराणां तृप्तिरस्तु" इति छन्दोगा अध्यायोत्सर्जनकर्मणि तर्पयन्ति। संहिता नित्यमिह ब्राह्मणं च नित्यम्। नित्यानां कर्तारः कथं भवेयुः। तत्र या गतिस्सैवात्राप्यूहकारवाक्ये भवति।

नन्वत्र इतरं प्रमाणं न पश्यामः। युक्त्या ह्यपौरुषेयता साधिता। सा च कश्चिद्व्यभिचरेदेवेति चेत् प्रमाणमुपस्थापयामि—"सामवेदेनौद्गात्रम्" इत्यापस्तम्बवाक्यं वर्तते। औद्गात्रं केन वेदेन कर्तव्यमिति प्रश्ने सामवेदेनेत्युच्यते। न हि ग्रामेगेयारण्येगेयैस्सामभिरौद्गात्रं सिध्यति। तत्र पठितानां स्तुतिष्वविनियुक्तत्वात्। अत्र पठितानां गीतीनां स्तुतिसाधनत्वात्। यद्येतासां गीतीनां वेदत्वं न स्यात् तर्हि सामवेदेनेति कथनमयुक्तं स्यात्। मन्त्रवर्णोऽप्यत्र भवति "उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि" इति। उद्गाता हि प्रकृतगानानि गायन् सवनानि यथावत्सम्पादयति न तु ग्रामेगेयगानं अरण्येगेयगानं वा। ननु प्रस्तोतृप्रतिहर्तारावपि गायतः। तदपि कुतो न निर्दिष्टमिति चेन् तत्र प्राधान्यमुद्गीथस्यैव। उद्गीथप्रवर्तकः प्रधान उद्गातैव निर्दिष्टः। स्तोत्रेषु ग्रामेगेयगानस्थस्य मन्त्रस्य न विनियोगः। तेनागुप्तारयिता प्रस्तोता दीक्षणीयादिष्विषु।

अपि च पौरुषेयत्वं स्वीकुर्वद्भिरयमप्यपरं देयम्। येन स्वरेण यथावत् ग्रामेगेये गीतानि सामानि तेनैव स्वरेणात्रापि भवितव्यम्। परन्तु योनिग्रन्थे केषुचित्सामसु केवलं स्वराः अन्यापरे। तथाहि—अस्ति सहोमाय इत्यस्यामृच्युत्पन्नं साम गानीयम्। योनिग्रन्थे पाठक्रमः सहोहोवा इति। तदेव साम्नात्र सहोहोवा इति। प्रथमे मन्त्रे पञ्चमचतुर्थपञ्चमस्वराः। अत्र द्वितीयप्रथमद्वितीयस्वराः। साममन्त्राणामुच्चारणमदृष्टार्थम्। यद्यपि मन्त्रस्य संस्कारो जायते तथापि दृष्टं फलं न भवति। अदृष्टार्थेषु कथं प्रयोक्तव्यमिति नरा न जानते। अत एतदपि साममन्त्रेषु योनिवत्स्वरैर्भवितव्यम्। नास्ति च। न केवलमस्मिन्नेव साममन्त्रे, अराङ्गीयादिषु योनिस्वराद्भिन्नः स्वर उपलभ्यते। किं च सामवेदोपलब्धानि कथानाम् औऽरहो हाइ इति। तन्नैवाभीगुणयां औऽर२ होहाइ। इति तदेतत्सर्वमपौरुषेयत्वमनुमापयति।

यद्येवं ऊह इति भागस्यास्य नामधेयप्रतिलम्भः किंमूलकः। पौरुषेयत्वे मनुष्यैरूहः कृत इत्युपपद्यत इति चेत्, अत्रापि बहुभिः कारणैरूहत्वं समर्थयामः। इमानि सामानि नैकेनर्त्विजा प्रयुज्यन्ते परन्तु त्रिभिरुद्गातृपुरुषैः। तेऽपि न सर्वं गायन्ति किन्तु स्वकीयं स्वकीयं भागमेव। तत्र कियानात्मीयो भाग इति विचार्य प्रयोक्तव्यः। ततश्चोहत्वं सम्पद्यते। यद्वा बहिर्निधनसामस्वध्ययनकाले सामान्तेऽधीतं निधनभागं प्रयोगकाले प्रथमसाम्नि द्वितीयसाम्नि च प्रयुञ्जीरन् इत्यप्यूहः। आहोस्वित् रथन्तरसाम यथाधीतं न तथा प्रयोगकाले प्रयुज्यते। उद्गीथभक्त्युच्चारणकाले अकारैर्गेयम्। सोऽयमूहः। अथवा "परिस्वानोगिरिष्ठाः" इत्यृचे "मदेषु सर्वधा असि" इति वारत्रयमागतम्। गाने तु तृतीये साम्नि। प्रयोगकाले सर्वेषु सामसु योज्यम्। एतावतापौरुषेयत्वं नापैति। एवं स्वादोरित्था त्रिकद्रुकेषु इत्यादिसूक्तेषु।

तर्हि पट्टिकायां प्रदर्शितस्य योनिगानस्य का गतिः। अत्रोच्यते त्रिकद्रुकायां पञ्चनिधनं साम दृश्यते। तत्रैकमेव निधनमधीतम्। चतुर्णां निधनानामावश्यकतास्ति। अन्यथा नामनिर्देशो व्यर्थतामियात्। यत ऋक्त्रयेऽपि निधनचतुष्टयमपेक्ष्यते। नामसाहाय्यात् कथानायां दृष्टानि निधनान्यत्रानीयन्ते। एवमेव सामोच्चारणकाले पूर्वग्रन्थयोस्साम्नामध्ययने ये धर्मास्तेऽत्रापि भवेयुरित्यत्र पट्टिकाया उपयोग इति गृहाण।

ननूहभागस्य मन्त्रत्वं नास्तीति

महाकुले जातोऽपि त्यक्त्वा जनं निजमपास्य यो विकृतः।
न ब्राह्मणस्स भगवन् हि मन्त्रो मन्त्रमध्यगोऽप्यूहः॥

इति मीमांसकमूर्धन्यैः श्रीमदप्पय्यदीक्षितेन्द्रैर्मीमांसकमर्यादा शिवमहिमकलिकास्तुतौ प्रतिपादितेति चेत् अत्र "देवस्यत्वा" इत्यादिनिर्वापमन्त्रे सूर्यदेवत्ययागे सूर्यायत्वेति च ऊहस्स एवाभिप्रेतः। न तु प्रकृताः साममन्त्राः। एतदपि तदधिकरणे सिद्धम् ऊहप्रवरादीनां मन्त्रत्वं पूर्वपक्षयित्वा सस्वरमिमानि प्रयोक्तव्यानीति फले प्रदर्शिते नास्त्येषां मन्त्रत्वम्। ततश्च स्वररहिता अपि प्रकृतमर्थं प्रतिपादयेयुः इति सिद्धान्तितम्। एषु सामसु स्वरलोपे यजमानस्य नाशो भविष्यतीति षड्विंशब्राह्मणे प्रतिपादितम्। किञ्च प्रयोगकाले छन्दोगाः साम्नां ऋषिच्छन्दोदेवताविनियोगं स्मरन्ति। मन्त्रेष्वेव तत्परिज्ञानं विहितम्। ततोऽप्यपौरुषेयोऽयं भागो भवेदिति।

अन्यच्च पदपाठः पौरुषेय इति सर्वसम्मतः। सामवेदोत्तरार्चिकपदपाठे विशेषोऽप्युपलभ्यते—पूर्वार्चिकाधीतानां ऋचां गणान्तपाठः। व्यर्थतया कालयापनमध्ययनाध्यापनयोर्मा भूदिति स पाठ आदृतः। एवमेवेमावपि भागौ यदि पौरुषेयौ भवेतां तर्हि यस्याप्यपि छन्दोनामके ग्रन्थे यत्सामाधीतं तस्यैव साम्न ऊहोह्यगानयोः किमयं गणान्तपाठेन निर्देशो न कृतः। अपौरुषेयत्वादत्र गणान्तपाठो न कृत इत्यपि स्वसम्मतं साधयन्ति[1] इत्यलम्।

[1] "एवमपौरुषेयत्वमास्थितैः एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति ताण्ड्यश्रुतेरानुकूल्यं सम्पादनीयम्। तां श्रुति-

अथ क्रमप्राप्तं सामवेदस्वरस्वरूपमुपवर्णयामि। प्रत्यपादयं मदीयसामतन्त्रभूमिकायां सामवेदानां पाठभेदाः परिभाषापाठः, स्वरसङ्केतपाठः, राणायनीयपाठः इति। मद्रप्रान्ते पञ्चाशद्वर्षेभ्यः पूर्वं परिभाषानियममवलम्ब्य वेदस्याध्यापनमध्ययनं चाभवत्। ततः कलिकातानगरवास्तव्यैः सामश्रमिसत्यव्रतशर्मभिर्बहूनां मातृकाग्रन्थानां सहायेन प्रथमवारं समग्रः सामवेदः सम्पाद्य प्राकाश्यत। तदनुसन्धानतत्परैः तिरुवैय्यार् (पञ्चनदक्षेत्रम्) नगरमधिस्थितैः ब्रह्मश्रीकृष्णश्रौतिभिः प्रथमवारं दक्षिणदेशे ग्रन्थाक्षरैस्स एव मुद्राप्य प्रकाशपदवीमारोपितः। तस्य च प्रचारार्थं तत्र-तत्र सभाः कारयामास श्रौतिवर्यः। तालपत्रेषु दाक्षिणात्येषु मया परिभाषापाठ एव प्रत्यक्षीकृतः। अक्षराणामुपरि पश्चाद्वा स्वरनिर्दिष्टः पाठः सोत्सुकस्य मम दृष्टिपथं न प्राप्तः। काशीमागतस्य मम दैववशादत्रत्यवैदिकवरैः परिचयो लब्धः। तेषां प्राचीनहस्तलिखितग्रन्थेभ्यः प्रथमद्वितीयादिस्वरचिह्नाङ्कितः पाठोऽपि समधिगतः। बहोः कालादुत्तरभारते वङ्गदेशे च स एव पाठः प्रचलति स्म। परिभाषापाठमाश्रित्य यथा सामगाः सामानि गायन्ति तथैव काशीस्थाः सामगा अपि। परन्तुत्तरत्र स्वरनिर्देशा अङ्गुलीषु निहिताः। प्रथमपाठे तथा न। अङ्गुलीनिर्देशं विनैव परिभाषापाठः उपनीयस्तया प्रावर्तिष्ट। क्रमेण स्वरसङ्केतपाठेऽध्यापनाध्ययनसौकर्यमवलोक्य समस्ते दक्षिणप्रान्ते प्रवर्तितस्य कारिचत्सुगमः। अस्य नवीनपाठ इति प्राक् संज्ञाप्यासीत्। नेदानीं परिभाषाविदो वर्तन्ते।

स्वरनिर्देशप्रकारस्य सामतन्त्रभूमिकायामुक्तोऽपि पुनरनूद्यते। तर्जन्या उपरि द्वियवान्तरोऽङ्गुष्ठः क्रुष्टस्य, तादृश एवैकयवान्तरः प्रथमस्य, तर्जनीमध्यरेखामाश्रितो द्वितीयस्य, मध्यमानामिकाकनिष्ठिकामध्यरेखाश्रितः क्रमेण तृतीयचतुर्थपञ्चमानाम्, कनिष्ठिकामूलरेखागतोऽतिस्वार्यस्य बोधकः। अयमेव क्रमः साम्प्रतमाश्रितः। तथाह इत्युच्चारणकाले तर्जन्या उपरि यवान्तरेऽङ्गुष्ठः स्थापनीयः। गिरा अस्य पर्वणः पाठसमये तर्जनीमध्यरेखायाम्, इ अस्य पर्वणोऽध्ययनकाले मध्यमामध्यरेखायाम्, श्रोमताइ इत्युच्चारणकालेऽनामिकामध्यरेखायाम्, ओम्निन्द्रुताम् इति पर्वपाठकाले कनिष्ठिकामध्यरेखायां च निहत्यङ्गुष्ठः। तथाचोक्तं नारदशिक्षायाम्—

अङ्गुष्ठस्योत्तमे क्रुष्टोऽङ्गुष्ठे तु प्रथमः स्वरः।
प्रदेशिन्यां तु गान्धार ऋषभस्तदनन्तरम्॥

मयकल्पा विस्तरे प्रकान्ते पूर्वपक्षिणा "त्रिवृदग्निष्टुदग्निष्टोमः" पूर्ववाक्येन इति प्राप्तेऽग्निष्टुदाग्नेयक्रतौ पशुकामाय रेवतीषु वारवन्तीयसामाभिधाग्निष्टोमसाम गुणो विधीयते इति वक्तुं 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति वार्तिकप्रमाणेन वाक्यभेदः सिद्धान्तिना प्रदर्शितः। अपूर्वं च कर्म स्वीकृतम्। तत्र वारवन्तीयं साम "अश्वन्नत्वा" इत्यस्यां गीतम्। "रेवतीर्नः" इत्यस्यामनयनेनेति सिद्धम्।

अनामिकायां षड्जस्तु कनिष्ठायां च धैवतः ।
तस्याधस्तात्तु योऽन्यास्तु निषादं तत्र विन्यसेत्""इति ।[१]
अङ्गुष्ठाग्रेन तानित्थं मध्यमे पर्वणि स्पृशेत्
स्वरान्मध्यमपर्वसु सुनिविष्टान्निवेशयेत् इति च ॥

एवमेवानेकस्वरवतां पर्वणामध्ययनकाले यस्य वर्णस्य यः स्वरस्तं पाणिना प्रतिपादयेत् ॥ परिभाषापाठस्वरप्रदर्शनपुस्तके वररुचिनैवं प्रोक्तमवलोक्यते—

सप्तस्वराणां प्राधान्यात् तेषां स्थानानि—अङ्गुष्ठादिकनिष्ठान्तानि अङ्गुष्ठमध्य-कनिष्ठिकानामग्रमध्यमूलानि कुष्टतृतीयातिस्वार्याणां स्थानानि । तर्जन्यनामिकयोर्द्वे द्वे प्रथम-द्वितीय-चतुर्थ-मन्द्राणां स्थानानि । अङ्गुष्ठाग्रश्च कुष्टस्य । तर्जन्या मूलमध्य-रेखा (मध्यमूलरेखे ?) प्रथमद्वितीययोः । मध्यमामध्यरेखा तृतीयस्य । अनामिकामध्य-मूलरेखे चतुर्थमन्द्रयोः । कनिष्ठिकामूलरेखातिस्वार्यस्य । एवं स्थानानि सप्तस्वराणाम् ॥

नारदशिक्षोक्तप्रकारेणैवाद्यतना अध्यापयन्ति । वररुचिप्रदर्शितं मार्गं नाश्रयन्ते । जैमिनीयशाखादिषु वाररुचस्स्वरनिर्देशप्रकारःस्यादिति सम्भावयामि । परिभाषापाठ-कालेऽपि नायं पन्थाः स्वीकृतः ।

'चि(नि)वेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् ।
समनुचारयेद्वाक्यं हस्तेन च मुखेन च ।
यथैवोच्चारयेद्वर्णांस्तथैवैतान्समापयेत्[२] इति च नारदः ।
स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ ।
यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥
यथा धनुष्याविततै शरे क्षिप्ते पुनर्गुणः ।
स्वस्थानं प्रतिपद्येत तद्वद्धस्तगतः स्वरः ॥[३] इति चान्यत्र

एवं स्वरनिर्देशपूर्वकमधीतं साम गुरुशिष्यौ स्वाभीष्टफलेन संयोज[४]यति । विपक्षे च महद्दुःखं आपयतीति शिक्षावाक्यानि श्रूयते—

हस्तहीनं तु योऽधीते मन्त्रं वेदविदो विदुः ।
न साधयेद्याजुं पाणि भुक्तमव्यञ्जनं यथा ॥
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुस्सामभिर्दग्धो वियोनिमधिगच्छति ।[५] इति

अस्मिन्प्रचलिते पाठे व्यामोहो नैव विद्यते । परिभाषापाठे सोऽवलोक्यते । तथाहि-गृणानोइ इति पर्वणि चत्वार्यक्षराणि सन्ति । प्रथमद्वितीयस्वरौ च प्रयोक्तव्यौ । तत्र

[१] नारदशिक्षा १. ७. ३, ४. [२] नारदशिक्षा १. ६. १३.
[३] याज्ञवल्क्यशिक्षा (अध्ययनविध्यधिकारे) ४७, ४८.
[४] साम्नां वा रहस्यानां च सर्वपापैः प्रमुच्यते । शि. २. ३१.
वेदाभ्यासरतं शान्तं पञ्चयज्ञक्रियान्वितम् । न स्पृशन्तीह पापानि महापातकजान्यपि. याज्ञ. स्मृ. ३१.
[५] वेदोपलब्धम् [६] याज्ञवल्क्यशिक्षा २. ३९, ४१.



स्वेच्छयापि एकमक्षरं प्रथमेन शिष्टमक्षरसङ्घातं द्वितीयस्वरेणाऽपि समभ्येतुं शक्यते । अत एव परिभाषापाठमाश्रित्याध्ययनं कुर्वन्तः काञ्चीमण्डलवासिनश्छन्दोगाः स्वपरं-परागतामन्यामेव सामगीतिं कुर्वन्ति । ज्ञायत एवैतत् "लुप्तप्रायाध्ययनसंप्रदायेऽ-स्मिन्समये प्रतिग्रामं प्रतिपुरुषम्, किं बहुना प्रतिनिमेषं च अन्यथाऽन्यथा नवनवा-परिष्कारेण गानानि गीयन्ते, स्वरान् श्रुतीश्च पर्वाणि च स्वच्छन्दमन्यथयन्ति" इति ग्रामेगेयोपोद्घाते ब्रह्मश्री नारायणस्वामिदीक्षितवाक्यात् । स्वरनिर्देशपाठे नायं दोषस्समापततीति महान्गुणः ।

परिभाषापाठक्रमेण प्रथमसाम्नत्र निर्दिशामि-

उच्चातांइणजातमन्धसाः । दि छू वाइसादृभूमे । मि कः चद्दाइ । उग्रे-शर्मा । मकः हाइश्रवाउ । वा च ॥ एवमुत्तरे सामनी । पर्वसु द्वितीयो वर्ण स्वरबोधकः । तदनन्तरं ये वर्णा क्वचि न सन्ति पर्वणां मध्ये लिख्यन्ते तेऽपि स्वर-बोधकाः । तथा ताइण इत्यत्रणकारः प्रणतस्वरबोधकः । एवम् छू स्वरः—रेवात्वाऽ१वाऽ२३ । परमत्र प्रे लेखनानुदूभूऽ२३ इति पर्वरूपं न; किन्तुभूऽ२ इतिवत् । एवमादिपरिभाषापाठः सांप्रतं कथं गीयत इति पद्धिकया बोध्यते । कवर्गः क च कवर्णाश्चप्रथमस्वरोपक्रमवतां पर्वणां ज्ञापकाः ।

क च ट त पा पञ्च वर्णाः क्रमेण प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां स्वराणां निर्देशका भवन्ति । लकारवकारककाराः कवर्गशेषा भवन्ति । श-ष-स-ळ-र-क्षमवर्गस्य शेषाः । यकारस्टवर्गशेषः । हकारस्तवर्गशेषः । प्रथमस्वरेणोपक्रान्तानां नानास्वरवतां पर्वणां काकिइत्येवमादिभिर्वर्णाक्षरैः लकारादिभिश्च निर्देशो दृश्यते । तथाहि क तयाइ = तयाइ । का गृणानोइ = गृणानोइ । कि-समाये = समायेऽ२ । की-साम् = साऽ२३४म् ॥ कु ओइ = ओऽ२३४५इ । कू हाइओहाइ = हाऽ२३४इओऽ६हाइ ॥ के आता-इयात् = आताऽ२३४५ इयाऽ६५६त् ॥ कै-समिद्धश्शुक्रया = समिद्धश्शुक्रया । को उपाहोइ = उपाऽ२होइ ॥ कौ नाकेसुपार्णमुपयात्पमूलन्ताम् = नाकेसुपार्णमुपयात्प-तन्ताम् ॥ कम् पादक्षसाइ = पाऽ२दक्षसाइ । कः गृणानोहव्यदातायाइ = गृणानोहव्य-दाताऽ२३याइ ॥ ख-ओऽ२३४ऽ२ । खा = कुऽ२३४ वश्वाऽ५र्षणोसुपा ॥ खि- वार्ता-मृहाइ-वाऽ२वोऽ२५हाइ । खी पणवाऽ२३ ॥ खु = दाइवंमयाउ ॥ खू दाइवा न वा = दाइवाऽ२३वाऽ२ ॥ खे-औ न होवा = औऽ२होऽ२वा ॥ खै = औ न होवा औऽ२-होऽ२वाऽ२ ॥ खो-औ न होइ = औऽ२होऽ२३४इ ॥ खौ माहान्त वा = माहाऽ२-वाऽ२३४२ ॥ खम् ओनहाय = औऽ२हाऽ२३ऽ३४ ॥ खः स्वा न आओवा = स्वाऽ२आ-ओऽ२३४वा ॥ ग-द्रविणाऽ२३४स्युः ॥ गा = इहाऽ२३४५ ॥ गि = औऽ२होऽ

रोपयन्ति । साम्नि येषामक्षराणामुपरि 'र' वर्तते तान्यक्षराणि द्विमात्रायुक्तानि । दीर्घाक्षराणीति संज्ञा । येषां दीर्घाक्षराणामुपरि 'र' नास्ति तानि त्रिमात्रायुक्तानि वृद्धसंज्ञां लभन्ते । क्वचित् दीर्घाक्षरस्य त्रिमात्रतायां वृद्धम्, ह्रस्वाक्षरस्य त्रिमात्रतायां प्लुतमित्यपि सङ्केतः । परमिदानीमुभयोरपि वृद्धमित्येव व्यवहारः । तदतिरिक्तान्यक्षराण्येकमात्रकाणि भवन्ति । तदेवं ज्ञात्वा साममन्त्राः प्रयोक्तव्याः । छलप्रक्रियेति कश्चन ग्रन्थो वर्तते । एकैकस्य साम्न एकं छलाक्षरं प्रत्यपादि । तस्य ज्ञानेन व्यामोहो नैव भविता । रौरवसाम्नः पुनानायां "वौ" इति छलाक्षरम् । तेनाक्षरेण दीर्घम्-उदात्तः मात्रा एतत्त्रयं ज्ञायते । द्वितीयस्वरात् प्रथमस्वरो यदा भवति तदा उदात्तः इति संज्ञा । सोऽपि स्वरो यदि पर्वादौ भवेत् तदैवैतां संज्ञां प्राप्नोति । पर्वमध्ये कर्षणेन यः तथाभूतस्तां संज्ञां नोपाप्नोति । मात्रालक्षणग्रन्थे मात्राः प्रतिपादिताः तदेतत्सर्वं वौ इत्यनेन जानीमः । तत्र वर्णो योऽच् स मात्राबोधकः । औकारश्च दशमः ऋकारलृकारौ वर्जयित्वा । ततश्च दशविंशति-त्रिंशत्संख्यां वा बोधयति सः । प्रकृतसाम्नि त्रिंशत्यक्षराणां मात्रा भवति । वर्गतृतीयाक्षरं व । तस्मात् त्रीणि उदात्तपर्वाणि । यत्राष्टौ त्रयोदश वा भवन्ति तत्र सर्वत्र वर्गतृतीयमक्षरं ज्ञेयम् । एवं पवर्गः पञ्चमः पञ्चसंख्योपेतान्यक्षराणि दीर्घाणि । शिष्टानि दीर्घाक्षराणि वृद्धानि । नेदं स्मर्तव्यं रौरवसाम्नि सर्वत्रैवमेव भवेदिति । पश्यन्तु तरणिरौरवम् । तस्य साम्नः छलाक्षरं जी भवति । सर्वत्रोदात्तस्समानः । शिष्टमन्यदेव । पुनानायां यदन्यत्साम परापतति तत्रापि छलाक्षरमन्यदेव । अभीवर्तसाम्नि पुनानायां भौ इति । अतस्तत्तत्सामान्ते छलाक्षरसन्निवेश आदर्शपुस्तकोल्लिखितस्संयोजितः । पवमानिकग्रन्थस्य पदपाठस्य च छलाक्षराणि सन्ति ।

"एकं साम तृचे क्रियते स्तोत्रीयम्" इति वाक्येनैकं साम ऋक्षु तिसृषु गेयं भवति । प्रकृतग्रन्थे चैकर्चदृष्टानि बहूनि सामान्यवलोक्यन्ते । कथमेतत्साधु भवेत् । बाढम् । महाब्राह्मणकल्पसूत्रेषु त्रिवृत्पञ्चदशः सप्तदशः एकविंशः त्रिणवः त्रयस्त्रिंशः चतुर्विंशः चतुश्चत्वारिंशः अष्टाचत्वारिंशः चतुष्टोमः षोडशः इत्येवमादीनि पदान्यसकृत्पठ्यन्ते । तानीमानि पदानि बहिष्पवमानादिस्तोत्रेषु ऋक्संख्यां प्रतिपादयन्ति । त्रिवृद्बहिष्पवमानमित्यस्यायमर्थः बहिष्पवमानस्तोत्रं छन्दोगैर्नवसु ऋक्षु सम्पादनीयमिति[1] । स्तोत्राणि द्विविधानि – अनेकतृचसाध्यानि एकतृचसाध्यानीति । त्रीण्यपि पवमानस्तोत्राणि प्रथमां कोटिमाश्रयन्ते । एकस्य तृचस्य वारत्रयमावृत्त्यापि

[1] वेदभाष्यकर्ता श्रीसायणाचार्यः "त्रिवृद्बहिष्पवमानम्" इति वाक्यस्यार्थमेवं व्याचष्टे त्रयाणां तृचानां प्रथमवारं प्रथमामृचं गीत्वा द्वितीयामपि तथैव द्वितीयामृचम्, तृतीयमपि तृतीयामृच गायेत् इति । [illegible] इति [illegible] विहितत्वात् [illegible] पुनरनुपूर्वमस्तावीदिति । एवं तृच प्रथमवारमुक्त्वा तस्यैवावर्तने पर्यायच्छन्दः प्रयुज्यते । तत्र सायणमते पठितानां मन्त्राणां पुनरावर्तनं नो भवति । यदि चैकस्मिन्तृचे तिस्र ऋचो निर्दिष्टैकमर्थं प्रतिपादयन्ति । तदेवं सति तासामृचामन्यतोऽन्वारम्भे प्रकृतो विवक्षितोऽर्थः साकल्येन न सिध्यति । सायणमतेन साम्प्रतमुद्गातारो नानुतिष्ठन्ति । यत्र कुत्रापि विष्टुतेरावृत्त्या समन्वयः कर्तव्य इति कृत्वा चिन्तया व्याचख्याविति ज्ञेयम् ॥



बहिष्पवमानस्य त्रिवृत्त्वं सम्पादयितुं शक्यते, परं "पराग्बहिष्पवमानेन स्तुवन्ति" इति श्रुत्याऽऽवृत्तेर्निषेधात् नवसु ऋक्षु सम्पादनीयम् । अतोऽत्यत्र त्रयाणां तृचानामावश्यकता । एकं च गायत्रं साम तेषु तृचेषु विहितम् । माध्यन्दिनपवमानमध्ये तत्तृचसाध्यं भवति । "पञ्चदशो माध्यन्दिनः पवमानः" इति शास्त्रेण पञ्चदशसु ऋक्षु सम्पादनीयं स्तोत्रं तत् । ताश्च ऋचः पञ्चभिस्तृचैरपि सम्भवेयुः समानच्छन्दस्कैश्च । तत्सर्वं न युक्तम् । "त्रिच्छन्दो माध्यन्दिनः पवमानः" इति श्रुत्या गायत्रीबृहतीत्रिष्टुभो भवन्ति । तच्छन्दस्का मन्त्रा अपि "उच्चा पुना प्रतु" इति प्रतीकेन गृहीताः । तत्र गेयानि सामानि गायत्रामहीयवरौरवयौधाजयौशनानि पञ्च भवन्ति । तेनैतेन विवरणेन "एतावता वाव माध्यन्दिनं सवनं पुपुचे त्रिभिश्छन्दोभिः पञ्चभिश्च सामभिः" इति ताण्ड्यमहाब्राह्मणवाक्याशयः स्पष्टीकृतः । त्रिषु तृचेषु पञ्चानां साम्नां क्लृप्तिमाह षड्विंशब्राह्मणम् "द्वे गायत्र्यां सामनी द्वे बृहत्यामेकं त्रिष्टुभि" इति । एवमिदं स्तोत्रमनेकतृचसाध्यम् । एवमार्भवपवमानमपि । आज्यपृष्ठाग्निष्टोमोक्थ्यषोडशिरात्रिपर्यायस्तोत्राणि द्वितीयां कोटिमवलम्बन्ते । तत्र सर्वत्रैक एव तृचः । तस्मिंश्चैकमेव साम गीयते न तु माध्यन्दिनार्भवपवमानयोरिव बहूनि सामानि । एकस्य तृचस्य त्रिवृदादिस्तोमसम्पादनं सामान्तरभेदं बहुधा प्रदर्शितस्ताण्ड्यस्य द्वितीयतृतीयाध्यायौ । इत्थं स्थितिः प्रकृतियागे ।

एषु स्तोत्रेषु स्तोमानां ह्रासवृद्धी भवतो विकृतियागेषु । तत्र प्राकृतसंख्याया न्यूनसंख्याकस्तोमो उत्तरयोः पवमानयोः भवति । यथा वा दशरात्रक्रतोः प्रथमे

[1] तत्र त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः-उद्यती परिवर्तिनी कुलायिनीति । सर्वस्तोमेष्वाद्या विष्टुतिर्नित्या । अन्याः काम्याः । आद्यापि संयोगपृथक्त्वन्यायेन नित्या काम्यापि भवति । तासां प्रतिष्ठा वृष्टिः प्रजापशवः क्रमेण फलानि । सर्वेषु तथाऽन्येषु कुलायिनी नित्या । एवमेव पञ्चदशस्तोमस्य पञ्चपञ्चिनी उद्यता चेति द्वे विष्टुती । तत्र प्रथमा द्विप्रकारा । तासां प्रतिष्ठा तेजोब्रह्मवर्चसं स्वर्गश्च फलम् । सप्तदशस्तोमस्य पञ्च विष्टुतयः दशसप्ता सप्तास्थिता [illegible] चेति । तासु पवमाना द्वौ भेदौ द्वितीयायाः त्रयः भेदा इति सप्त भवन्ति । प्रतिष्ठा प्रजाः अन्नं प्रजापशवः तेजोब्रह्मवर्चसं स्वर्गः [illegible] फलम् । एकविंशस्तोमस्य सप्तसप्तिनी उद्यती प्रतिष्ठिता [illegible] चेति [illegible] प्रतिष्ठायै [illegible] इति फलवत्यो विष्टुतयः । त्रिणवस्तोमस्य प्रतिष्ठिता उद्यती चेति द्वे विष्टुती । तयोश्च प्रतिष्ठा स्वर्गः फलम् । त्रयस्त्रिंशस्तोमस्य पञ्च विष्टुतयः [illegible] उद्यती [illegible] । अन्या द्विप्रकारेति पूर्वोक्तविभागो ज्ञेयः । तासां च प्रतिष्ठा [illegible] स्वर्गः [illegible] प्रतिष्ठा चेति फलम् । चतुर्विंशस्तोमस्यैकैव विष्टुतिः । चतुश्चत्वारिंशस्तोमस्य प्रतिष्ठिता [illegible] [illegible] चेति तिस्रो विष्टुतयः । प्रतिष्ठा [illegible] [illegible] इति फलानि । अष्टाचत्वारिंशस्तोमस्य द्वे विष्टुती । प्रतिष्ठिता [illegible] चेति । प्रतिष्ठा [illegible] फलं तयोः । [illegible] । एवं नवप्रकारेषु स्तोमेषु सङ्कलनया [illegible] विष्टुतयः ।

रथन्तरपृष्ठ्येऽहनि सर्वेषु स्तोत्रेषु त्रिवृत्त्वं प्रतिपादितम्। तत एव माध्यन्दिन आर्भवे च पवमाने त्रिवृत्त्वमायातम्। माध्यन्दिनपवमाने त्रीणिच्छन्दांसि भवन्तीत्युपवर्णितम्। तत्रैव त्रिवृत्त्वं सम्पादनीयम्। तत्प्रकारमुपदिशति ब्राह्मणं गायत्रं तृचमुपक्रम्य "एकस्यां गायत्रं भवति, आश्वं भवति, सोमसाम भवति" इति। ततो ब्राह्मणनिर्दिष्टे बार्हततृचे यौधाजयम् प्राकृते त्रैष्टुभे औशनमन्त्यमिति त्रिवृत्स्तोमसम्पत्तिः। एवमेव तत्रैव क्रतौ तृतीये वैरूपपृष्ठ्येऽहनि पूर्ववत्स्तोत्रेषु प्राकृतसंख्यां बाधित्वा साप्तदश्यं विधीयते। माध्यन्दिनपवमाने उच्चा अभि तिस्र इति गायत्रीबृहतीत्रिष्टुभो भवन्ति। गायत्रतृचे गायत्रत्रैष्टुभे बार्हततृचे प्रथमायामृचि पौरुमद्गं तृचे गौतमान्तरिक्षे, अभ्यासयायामाष्कारणिधनं काण्वं त्रैष्टुभे तृचेनक्रिरसां संक्रोश इति साप्तदश्यं भवति।

तत्र साप्तदश्यं पृष्ठस्तोत्रादिषु ब्राह्मणप्रतिपादितदिशा पर्यायत्रयेण सम्पादयितुं शक्यते न पवमानस्तोत्रेषु। तेषु आवृत्तेर्निषेधात्। पञ्चसु तृचेषु पाञ्चदश्यम्, षट्सु तृचेष्वाष्टादश्यं स्यात्। अत एकस्यामृचि गानं द्वयोर्वा भवेत्। कुत्रापि सूक्ते द्वयोः ऋचोर्गानं नास्ति। परिशेषात्साप्तदश्यार्थमेकैकस्यामपि ऋचि गानं भवत्येव। एतेनेदमपि ज्ञायते यत्र वृद्धिर्ह्रासो वा माध्यन्दिनार्भवपवमानयोस्तत्र त्रैष्टुभस्य जागतस्य वा तृचस्य नावृत्तिः। गायत्रबार्हतयोरेवावृत्तिं विधाय भिन्नानि सामानि गायन्ति माध्यन्दिने। आर्भवे गायत्रानुष्टुभयोरावृत्तिः। इममेवार्थमाविष्करोति "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। अत्र ह्येवावपन्ति। अतएवोद्वपन्ति" इति। स्तोमवृद्धौ साम्नामावापः एतास्वेवर्क्षु भवेत्। स्तोमह्रासे आभ्य ऋग्भ्यः साम्नामुद्धारः इत्यावपन्त्युद्वपन्तिपदयोरर्थः।

अत्रेयमन्या शङ्कोदेष्यति-दशरात्रादिपर्वसु बार्हतप्रगाथस्य द्वितीयायां तृतीयायां वा स्तोत्रीयायां बहूनि सामानि विद्यन्ते। तेषां च माध्यन्दिनपवमानादिषु विनियोगः। स्तोत्रात्पूर्वं यत्साम गीयते तस्याधारभूतऋचामाम्नानं शाखतः सिद्धम्। तत्र कथमेषामाधारभूता ऋचो जपेयुः। न हि "मन्द्रया याति धारया मन्द्रया याति धारया। अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः" इति ऋक् भवति सापेक्षत्वादनन्वितत्वादभ्यस्तत्वाच्चेति। अत्रेदं समाधानम्—सत्यं भूयिष्ठानि सामानि पूर्वप्रतिपादितरीत्योपलभ्यन्ते। परं स्तोत्रकाले यावन्ति सामान्येकस्मिन्तृचे गीयन्ते तावतां साम्नामाधारभूतस्तृच एकवारमेव पठनीयः। न तु प्रतिसाम। यत्र द्वितीयायां तृतीयायां वा स्तोत्रीयायां साम गेयं भवेत् तत्र प्रथमापि स्तोत्रीया समग्रस्तृचो वा विनियुक्तो भवेत्। तथाचोपक्रमे तृचपाठसिद्धेः पूर्वोक्ताक्षेपानवसरः। न कुत्रापि स्तोत्रे प्रगाथेषु द्वितीयायां तृतीयायां वोत्पन्नस्य साम्न एव विनियोगो जागर्ति। एवमेवाभ्यासयायामपि समाधानं वेदितव्यम्।

"एकं साम तृचे क्रियते स्तोत्रीयम्" इति वाक्यमाज्यपृष्ठादिस्तोत्रपरम्। तेषु ह्येकं साम भवति। बृहत्यादिस्तोत्रेषु साम्न एकत्वात्कति स्तोमास्संजाता इति न ज्ञायन्ते। तद्भेदनार्थमौदुम्बरनिर्मिताः कुशाः प्रस्तावभक्तिसमनन्तरं स्तोत्रकाले वैष्टुत-



यज्ञस्योपरि प्रस्तोता निक्षिपति। तत्र च त्रयः पर्याया इति निरूपितम्। पर्यायस्य त्रेधा विभक्तस्यैकैको भागो विष्टावसंज्ञां लभते। एकविंशविष्टावे तिस्रः पञ्च इत्येवं स्तोत्रीया भवेयुः। कुशानिक्षेपणप्रकारो बहुधा छन्दोगसूत्रग्रन्थेषु प्रतिपादितस्सन् गृहीतश्च यज्ञतत्त्वालोकादिषु ग्रन्थेष्वित्ति नेह प्रतन्यते।

इदमपरं प्रतिपादयामि-योनौ यस्मिश्छन्दसि सामोत्पन्नं तस्मिन्नेव छन्दसि तत्साम गेयमुतान्यस्मिन्नपीति। यद्यपि पुरस्तात् सर्वेषां साममन्त्राणां नित्यत्वं प्रतिपादितम्, कृतकत्वे शेष विचारः स्थानं लभेत। परं मीमांसकानां दृष्ट्या कतिपयानां सामगाचार्याणां मतेन चास्त्यवसरोऽस्य विषयस्य। ते हि मन्यन्ते पूर्वार्चिकदृष्टानि सामान्यत्र गीयन्ते इति। निदानसूत्रे च शाण्डिल्यायनो मेने "एकर्चि दृष्टानि सामानि" इति। अतस्तन्मतपरिज्ञानमनुपयुक्तं नो भवति। सामानि तदाधारभूता ऋचश्च प्रयोगमनुसृत्य द्वेधा विभक्तानि। सप्तानां ग्रामेगेयमरण्येगेयमित्येको भागः, ऊहरहस्यात्मकोऽन्यः। तथा ऋचः पूर्वार्चिकमुत्तरार्चिकमिति। प्रथमे भागे स्थितानि सामानि बहुलं प्रयोगकाले प्रस्तोता पठति यथासूत्रं दीक्षणीयादिष्विष्टिषु। प्रस्तोत्रा पठितव्यानां साम्नां परिसामानीति वैदिकी समाख्या। "सर्वत्रानादेशे परिसामानि प्रस्तोता गायेरन्स्वाध्यायवत्स्वासु" इति। सामविधानब्राह्मणे यानि विनियुक्तानि तेषां स्वाध्यायमधिकुरुते करोति। एकस्यामृचि एकं द्वे बहूनि वा सामानि भवन्ति।

अग्निष्टोमादिक्रतुषु स्तोत्रत्वेन विहितानि सामानि द्वितीये भागे वर्तन्ते। तेषामुच्चारयितारः त्रयस्सामगाः प्रस्तोतृउद्गातृप्रतिहर्तारः। ते च सहैव न पठन्ति। स्वकीयां भक्तिमेकैको गायति। सामानीमानि पूर्वार्चिके यस्मिश्छन्दस्युत्पन्नानि तस्मिन्नेव छन्दसि गेयान्याहोस्विदत्र कुत्रापीति भवति विचिकित्सा। तत्रानियमः। नियमकारिणः प्रमाणस्यादर्शनात्। अत एव अभित्वाशूरबृहत्युत्पन्नं रथन्तरं साम कवतीयां चोदितं सङ्गच्छते "कवतीषु रथन्तरं गायति" इति। कवती च गायत्रीछन्दः। नियमसत्वे गायत्र्यां गानविधानं प्रमाणपदवीमारोढुं न क्षमत इति पूर्वपक्षे सिद्धान्तः—यत्रापि नियामकं वाक्यं शरलेशभिया "समासु गेयम्" इति। अस्यार्थः शरो हिंसा। हिंसाकर्मणः शृणातेः पचाद्यचि शरपदनिष्पत्तेः। तज्जन्यः हिंसाभिया समास्वेव गानं कर्तव्यम्। षट्त्रिंशदक्षरेषु रथन्तरं साम निष्पन्नम्। तस्य चतुर्विंशत्यक्षरवत्यां गायत्र्यां कवानायामन्यत्रवोहे पूर्वोक्ताक्षरसंख्याभावात् पीडा भवेत्। एवं गायत्र्यामुत्पन्नमामहीयवं साम यदि बृहत्यामन्यत्र वा गीयेत तदाक्षराणां चतुर्विंशत्या गाने निष्पन्ने शिष्टेष्वक्षरेषु गानकृतसंस्काराभावः प्रसज्येत। तदा क्लेश इति दोषः। "क्लिश अलीभावे" इत्यस्मात्तद्रूपसिद्धेः। तस्माद् द्विविधदोषपरिहाराय समास्वेव गेयमिति।

यत्र तु विशेषवाक्यं भवति तदा प्रत्यक्षेण वाक्येनानुमानिकं समासु गेयमिति बाध्यते। विषमच्छन्दस्यपि गानं भवतीत्यर्थः। विषमच्छन्दसि गानं प्रत्यक्षश्रुत्या लिङ्गेन चेति प्रकारद्वयेन भवति। प्रत्यक्षश्रुत्या च विषमच्छन्दसि गानं द्विविधम्-विषमच्छन्दसि, समविषमच्छन्दसीति। बृहत्यामुत्पन्नं रथन्तरं गायत्र्यामुत्पन्नं वामदेव्यं वा "कवतीषु रथन्तरं भवति" "विराट्सु वामदेव्यमग्निष्टोमसाम भवति" इति प्रत्यक्षया श्रुत्या विषमच्छन्दसि गीयते। गवामयनीये प्रायणीयेऽहनि माध्य-

न्दिनपवमानप्रकरण एवमम्नायते-"पुनानस्सोमधारयेति समन्तं तिसृषु समन्त-मेकस्यां प्लव एकस्यां दैर्घश्रवसमेकस्यां वा रथन्तरं तिसृषु" इति। बृहत्यामुत्पन्नं रथन्तरं पुनाप्रगाथे विधीयतेऽनेन वाक्येन। पुनाप्रगाथश्च बृहतीच्छन्दस्कः। अत्र द्वयोर्ऋचोः बृहतीसम्पादनार्थं प्रग्रथने सम्प्राप्ते "न वै बृहन्न रथन्तरमेकच्छन्दो-ऽयच्छत्ततः ककुभावुत्तरे उपादधुस्तस्माद्बृहती प्रथमा ककुभावुत्तरे। तस्माद्बृहद्रथ-न्तरे एकर्चे न कुर्वन्ति न हि ते एकच्छन्दोऽयच्छत्" इति श्रुत्या ककुबुत्तरायां बृहति गानं विधीयते। ततश्च रथन्तरस्य प्रथमा स्तोत्रीया बृहती शिष्टे स्तोत्रीये ककुभौ। तत्रोत्तरयोस्स्तोत्रीययोः बृहत्यामुत्पन्नं रथन्तरं ककुभ्यन्यच्छन्दसि गीयते इति समे विषमे च छन्दसि गानं सिद्धं भवति रथन्तरस्य।

ननु "तस्माद्बृहद्रथन्तरे एकर्चे न कुर्वन्ति" इति वाक्येन रथन्तरसाम्नि सर्वत्र ककुबुत्तरत्वे सिद्धे क्षुद्रपर्वणि पुनानायां बृहतीष्वेव रथन्तरगानमनुपपन्नमिति चेत्, बाढम्। सामान्योऽयं नियमः। सति विशेषवाक्ये सामान्यनियमस्य बाध इति सर्वतन्त्रसिद्धान्तः। प्रकृते चोभयसामानः केचन सवाः प्रतिपादिताः। तेषु बृहती पृष्ठस्तोत्रे माध्यन्दिनपवमाने रथन्तरमिति। "पुनानस्सोमधारयेति रौरवं याधाजयं दैर्घश्रवसमुद्वंशा प्राजापत्यं त एकर्चाः रथन्तरं तिसृषु सर्वासु बृहतीषु" इति विशेष-वाक्यात् क्षुद्रपर्वस्थपुनारथन्तरगाने दोषं न पश्यामः।

लिङ्गाद्विषमच्छन्दसि गानं यथा—

ज्योतिष्टोमेऽग्निष्टोमस्तोत्रे यज्ञायज्ञीयं साम भवति। तच्च योनिग्रन्थे "यज्ञा यज्ञा वः" इति बृहत्यामुत्पन्नम्। प्रकृतस्तोत्रे बार्हतप्रगाथे चातिदिष्टम्। प्रगाथे पूर्वा ऋक् बृहती, द्वितीया सतोबृहती। प्रग्रथनेन न बृहतीप्रकारं कुर्वन्ति। पूर्वा बृहती उत्तरे ककुभौ। नात्र रथन्तरवदुत्तरयोः ककुप्करणे प्रत्यक्षं वाक्यमस्ति। किन्तु लिङ्गमेव। तथाहि—तृतीयसवनमधिकृत्य चतुर्विंशतिर्जगत्यस्तृतीयसवने एका च ककुप्" इति श्रूयते। अस्यायमर्थः—तृतीयसवने आर्भवपवमानस्तोत्रम्, अग्निष्टोमस्तोत्रमिति द्वे स्तोत्रे नित्ये स्तः। आर्भवपवमानस्सप्तदशस्तोमकः, अग्निष्टोमस्य त्वेकविंशस्तोमः। आर्भवपवमानप्रकरणे "पञ्च छन्दा आर्भवः पवमानः सप्तसामा गायत्रसंहिते गायत्रे तृचे भवतः, उष्णिहि सफम्, ककुभि पौष्कलम्, श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः काममन्त्यम्" इति श्रुतम्। पञ्चभिः छन्दोभिः गायत्र्युष्णिक्ककुबनुष्टुब्जगतीभिः गायत्रसंहितसफपौष्कलश्यावाश्वान्धीगवकावैः सप्तभिस्सामभिरार्भवः पवमानसम्पाद्य इति श्रुतेस्तात्पर्यार्थः। गायत्रतृचयोः षट्स्तोत्रीयाः उष्णिह्येका, एका च ककुभि, अनुष्टुभि षट्स्तोत्रीयाः जगत्यां तिस्र इति सप्तदशस्तोमोऽस्मिन्स्तोत्रे भवति। षण्णां गायत्रीणामक्षराणि १४४, ककुभः २८, उष्णिहः २८, षण्णामनुष्टुभां १९२, जगतीनां १४४ इति सर्वसङ्कलनया षट्त्रिंशदुत्तरपञ्चशतमक्षराणि भवन्ति।

अथाग्निष्टोमस्तोत्रम्। एकविंशः स्तोमोऽत्र भवेत्। यज्ञायज्ञप्रगाथे चैकविंश-स्तोमक्लृप्तिरेवमाम्नायते-"सप्तभ्यो हिंकरोति स तिसृभिस्स तिसृभिस्स एकया। सप्त-भ्यो हिंकरोति स एकया स तिसृभिस्स तिसृभिः। सप्तभ्यो हिंकरोति स तिसृभिस्स



एकया स तिसृभिः। सप्तसप्तिन्येकविंशस्य विष्टुतिः" इति अत्रैकविंशतौ मन्त्रेषु साम गीयते। "साम्ने साम्ने हिङ्कुर्युः" इति प्रमाणवाक्येन प्रतिसाम हिङ्कारोच्चा-रणप्राप्तौ पर्यायारम्भ एव हिङ्कर्तव्यं न प्रतिसाम; अथवा पवमानव्यतिरिक्तस्तोत्रे-ष्वेकमेव साम विधीयते। तथैवावृत्त्या तत्रतत्रोपदिष्टाः स्तोमास्सम्पादनीयाः। अत्र सामैकत्वात्सकृदेव हिङ्कारप्राप्तौ पर्यायारम्भेषु हिङ्कारः कर्तव्य इति नियम्यते। तत्र प्रथमे पर्याये प्रथमां बृहतीं वारत्रयं द्वितीयां ककुभं वारत्रयमुत्तमां ककुभमेकवारं गीत्वा सप्त स्तोमास्सम्पादनीयाः। द्वितीयपर्यायार्थं पुनर्हिकृत्य प्रथमां बृहतीमेकवारं ककुभौ वारत्रयं गीत्वा पूर्ववत्स्तोमाः सम्पादनीयाः। तृतीयपर्यायार्थं सकृद्धिकृत्य प्रथमां बृहतीं वारत्रयं द्वितीयां ककुभं वारमेकमुत्तमां ककुभं वारत्रयं गायेत्। एवं संपन्नस्य एक-विंशस्तोमस्य सप्तसप्तिनी विष्टुतिरिति संज्ञा। एवमनुष्ठीयमानेऽस्मिन्स्तोत्रे सप्त बृहत्यः चतुर्दश ककुभश्च भवन्ति। बृहतीनामक्षराणि २५२, ककुभामक्षराणि ३९२। आहत्य संकलनेऽग्निष्टोमस्तोत्रेऽक्षराणि ६४४ भवन्ति। पूर्वस्तोत्रगताक्षरैस्सङ्कलने ११८० अक्षराणि। "जागतं तृतीयसवनम्" इति श्रुत्याक्षराणामेषां जगतीसम्पादने कृते अर्थात् अष्टाचत्वारिंशता पूर्वोक्ताक्षराणां भागे भागफलं २४ शेषः २८। तदेव "चतुर्विंशतिर्जगत्यः तृतीयसवने एका च ककुप्" इति। यद्यत्रापि बृहतीत्वं सम्पाद्येत्-विंशः स्तोमो भवेत्तदोक्तिरियं पीड्येत। आनुमानिकं "समासु गेयम्" इत्येतत् लिङ्गेन बाध्यते। बृहत्यामुत्पन्नस्य यज्ञायज्ञीयस्य ककुभि गानं लिङ्गात्सिद्धं भवति। एवं योनिच्छन्दसो भिन्नच्छन्दस्सु गीयमानानां साम्नां विच्छन्दः शब्देन संज्ञां चकार भगवान्पुष्पसूत्रकारः पुष्पयशाः।

विशेषवाक्याभावे यस्मिंश्छन्दसि सामोत्पन्नं तत्रैवोत्तरग्रन्थेऽपि गानं कर्त-व्यम्, विशेषविधौ नानाछन्दस्सु इति सिद्धम्। गायत्रीच्छन्दस्युत्पन्नस्य साम्नः त्रिष्टु-बादिषु प्रसक्तावुद्गीथभक्तावक्षराणां समावेशः कर्तव्यः। एवं बृहत्यामुत्पन्नस्य गायत्र्यां गाने उद्गीथभक्त्यक्षराणां न्यूनता। रथन्तरस्तोत्रयोः स्तोत्रीययोः द्वे अक्षरे प्रस्तावभक्तौ भवत इत्येवमादिकं छन्दोगब्राह्मणेभ्योऽवगन्तव्यम्॥ न्यूनाधिकच्छन्द-स्सूत्पन्नानां वाराहार्कपुष्पादीनां साम्नां प्रतिपाद्यं गीतिः योनिवत्कर्तव्या। न तत्रोद्गीथ-भक्त्यक्षराणां वृद्धिर्ह्रासो वा।

अहर्गणयागयोः दशरात्र-संवत्सरै-काह-हीन-सत्र-प्रायश्चित्त-क्षुद्रपर्वाणीति सप्त पर्वाणि भवन्ति। ताण्ड्यमहाब्राह्मणमवलम्ब्यायं क्रम आदृतोऽत्र। तत्र ब्राह्मणं यथाक्रमं निरूपयितुं प्रवृत्तम्। एकसंवत्सरसाध्योऽयं गवामयनयागस्तावं भवेत्। अयं च यागो द्वादशाहस्य विकृतिभूतः। द्वादशाहस्य बहुभिः दशभिरहोभिस्सम्पन्नो भवति। प्रकृतिभूतस्य द्वादशाहस्यानुष्ठानप्रकारानभिज्ञेनायं यागः कर्तुं न शक्यत इति प्रथ-मतो द्वादशाहक्रतुर्निरूपितः। द्वादशाहयागे प्रथमोत्तमे अहनी ज्योतिष्टोमातिरात्र-संस्थाके भवतः। तत्रोपयुक्तानां साम्नामपि प्रकृतौ कृतः। अवशिष्टानामह्नां द्वितीया-द्येकादशान्तानां ये मन्त्रास्तेऽत्र प्राधान्येन सङ्गृहीताः। अतोऽस्य दशरात्रपर्वेत्यभिख्या। दशानामह्नां छन्दोभिरेवमाम्नायते "पृष्ठ्यः षडहः त्र्यहच्छन्दोमाः अविवाक्यमुपान्त्यमहः" इति। तत्र षडहस्त्रिविधा भवन्ति पृष्ठ्यः षडहः अभिप्लवः षडहः अत्यासन्न्यः

षडहश्चेति। ज्योतिष्टोमे माध्यन्दिनसवने "पृष्ठैस्स्तुवते" इति पृष्ठस्तोत्रं विहितम्। तत्र च "रथन्तरं पृष्ठं भवति" "बृहत्पृष्ठं भवति" इति श्रुत्या विकल्पेन बृहद्रथन्तरे सामनी भवतः। प्रथमप्रयोगे रथन्तरमेव पृष्ठं भवति। द्वितीयादिषु विकल्पः। यदि रथन्तरं पृष्ठं भवति तर्हि ब्रह्मसाम नौधसम्। अथ बृहत्तर्हि श्यैतमिति। षडहकर्तौ पृष्ठस्तोत्रं षड्भिस्सामभिर्भवति। तानि च रथन्तरं बृहत् वैरूपं वैराजं शाक्वरं रैवतम् इति। क्रमेणेमानि सामानि यत्र पृष्ठस्तोत्रे क्रियन्ते स पृष्ठ्यः षडहो भवति। तत्र सर्वेषु स्तोत्रेषु त्रिवृत्पञ्चदश-सप्तदश-एकविंश-त्रिणव-त्रयस्त्रिंशस्तोमा भवेयुः। ज्योतिः गौः आयुः गौः आयुः ज्योतिः इति यागानां क्रमेणानुष्ठानेऽभिप्लवः षडहो भवति।

अथाभ्यासङ्ग्यः षडहः-प्रथमेऽहनि माध्यन्दिनसवनपर्यन्तं सर्वस्तोत्रेषु त्रिवृत्स्तोमः। तृतीयसवने तथा द्वितीयस्याह्नो माध्यन्दिनसवनपर्यन्ते स्तोत्रे पञ्चदशः स्तोमः। एवं तृतीयदिने माध्यन्दिनपर्यन्ते सर्वेषु सप्तदशः स्तोमः। शिष्टेषु स्तोत्रेषु चतुर्थाहस्य पृष्ठस्तोत्रान्ते एकविंशस्तोमः। तस्यैवाह्नः तृतीयसवनीयस्तोत्रेषु पञ्चमस्य दिनस्य बहिष्पवमानाख्यमाध्यन्दिन पवमानपृष्ठस्तोत्रेषु च त्रिणवः स्तोमः। तत्रैव स्तोत्रान्तरेषु त्रयस्त्रिंशः षष्ठेऽहनि विश्वजिदतिरात्रो भवति। अयमर्थः एकस्मिन्नहनि द्वौ स्तोमौ क्रमेण स्याताम्। माध्यन्दिनसवनपर्यन्तमेकः, अन्यत्रेतरः। तौ च त्रिवृदादिक्रमेणानुष्ठेयौ। येन स्तोमेन पूर्वमहस्समाप्तिमियाय तेनैवोत्तरस्याह्न उपक्रमः कर्तव्यः। प्रथमेऽहनि अग्निष्टोमयागः। द्वितीयतृतीयतुरीयाहस्सु उक्थ्ययागः। शिष्टयोरतिरात्रयागः। दशरात्रे पृष्ठ्यषडहस्यैवानुष्ठानम्। ततस्त्रयः छन्दोमाः। छन्दोमा इति चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशानां स्तोमानां नामानि। छन्दोभिर्मीयन्ते इति छन्दोमाः। गायत्र्यामक्षराणि चतुर्विंशतिः त्रिष्टुभि चतुश्चत्वारिंशत्, जगत्यामष्टाचत्वारिंशदिति संख्यासामान्यान्नामानि भवन्ति। दशममहरविवाक्यम्। एष्वेव विनियुक्तानि सामानि प्रथमे दशरात्रपर्वणि समाम्नायन्ते।

यद्यपि दशरात्रस्य प्रथमेऽहनि "प्रसोमासो विपश्चितः" इति सूक्ते द्वितीये मन्त्रे गीतसाम्नसाम निरूपणीयं तथापि ताण्ड्यमहाब्राह्मणे षष्ठाध्यायस्य तृतीयादिषु खण्डेषु यानि सामानि विहितानि तेषां पृथक्पर्वाभावादत्रैव प्रतिपादितानि। तानि च सामानि अग्निष्टोमोक्थ्यषोडश्यतिरात्रेषु विनियुज्यन्ते। अपि चार्भवपवमाने सप्तदशस्तोमो भवति। कश्चिदेकविंशोऽपि भवतीति मत्वा सफपौष्कले तृचयोर्गीयेते। विधायकब्राह्मणमप्येवम् "तासु सफम्" 'अथैतत्पौष्कलम्' इति। ज्योतिष्टोमे पुनरेकर्चे सामनी। एवं प्रथमेन पर्वणा सत्राहीनानां प्रकृतिभूते दशरात्रे प्रतिपादिते संवत्सरसाध्यं गवामयनं द्वितीयं स्थानं लभते। तदुद्देशेनैवास्य ब्राह्मणस्य प्रवृत्तिरभवत्[1]। गवामयनमादित्यानामयनमङ्गिरसामयनं दृतिवातवतोरयनं कुण्डपायिनामयनं तपश्चितामयनमिति षड् यागाः संवत्सरसाध्याः। तत्र गवामयनं प्रकृतिः। एषु यागेषु विनियुक्तानि सामानि पठ्यन्त इति तत्प्रकरणं संवत्सरमिति व्यपदिशन्ति। प्रधानविषयनिरूपणानन्तरं काम्यानामेकाहादीनसत्राणां महाब्राह्मणस्य षोडशाध्यायप्रभृतिपञ्चविंशपर्यन्ते स्थानैः प्रतिपादितानां क्रतूनामुपयुक्तानि सामानि क्रमेण एकाहपर्व-अहीनपर्व-सत्रपर्वसु पठ्यन्ते। एवं समग्रे महाब्राह्मणविषये प्रतिपादिते मध्ये सम्भावितानां द्रोणकलशविदारणसोमातिरेकादिनिमित्तानां दोषाणां निर्हरणाय यज्ञसमृद्धितये च नैमित्तिकानि स्तोत्रसामानि प्रायश्चित्तपर्वणि पठ्यन्ते। ऋग्वेदादिब्राह्मणैः प्रतिपादितानामनुक्तानां सोमयागानां स्तोत्रक्लृप्ति क्षुद्रफलप्रदानां वा सोमयागानां स्तोत्रक्लृप्तिं क्षुद्रश्रौतसूत्रं प्रतिपादयति। तदनुसृत्यापूर्वाणि सामानि क्षुद्रपर्वणि पठ्यन्ते।

तत्र ग्रामेगेयगानतो धर्मा येषु सामस्वपेक्ष्यन्ते तानि सामानि "ऊहगानम्" यानि च सामान्यारण्यकगेयगानतो धर्ममपेक्षन्ते तानि सामानि "ऊह्यगानम्" "रहस्यगानम्" इति वा संज्ञां लभन्ते।

सोमयागे ज्योतिष्टोमाग्निगाये बहिष्पवमानाख्यस्तोत्रमाध्यन्दिनपवमानपृष्ठस्तोत्रार्भवपवमानाग्निष्टोमस्तोत्रोक्थस्तोत्रषोडशिस्तोत्रपर्यायस्तोत्रसन्धिस्तोत्राणि भवन्ति। त्रयाणां पवमानस्तोत्राणां पवमानस्सोमो देवता। आज्यस्तोत्रेषु प्रथमस्याग्निः द्वितीयस्य मित्रावरुणौ तृतीयस्येन्द्रः तुरीयस्येन्द्राग्नी देवता भवन्ति। प्रातस्सवनीयस्तोत्राणि बहिष्पवमानाख्यानि गायत्रसाम्ना विहितानि। गायत्रगानस्योहस्सर्वत्रापेक्षितः।

उत्तरयोस्सवनयोरारम्भे गायत्रं साम भवेत्। ननु वेयगानं "ओग्नाइ" इत्युपक्रम्य "एषस्यधारयाहाउ" इति, आरण्यकगानं च "वयावइ" इत्यारभ्य पञ्चपुरीषपर्यन्तं गीयेते। न तत्र कुत्रापि गायत्रसाम गीतम्। तत्कथमस्य वेदत्वं कथं वा प्रकृतिभावः। सन्ति गायत्रगानानि बहुलं ब्राह्मणग्रन्थेषु। तत्र दैवतब्राह्मणे तत्सवितुरिति सावित्र्यां गायत्रमुत्पन्नम्। एवं छान्दोग्योपनिषदि वामदेव्यग्रादित्य-वैश्वदेवसामानि गायत्रसाम्ना इत्यन्त इति त्रय्यामन्तर्भावः प्रकृतित्वं चास्य गायत्रगानस्य। चतुर्णां पृष्ठस्तोत्राणां षोडशिस्तोत्रस्य द्वादशपर्यायस्तोत्राणां चैन्द्रो देवता। अग्निष्टोमस्तोत्रस्य प्रथमोक्थस्तोत्रस्य चाग्निर्देवता। उक्थयोरुत्तरयोस्स्तोत्रयोः इन्द्रः। सन्धिस्तोत्रस्य अग्निः उषा अश्विनौ देवताः। अतोऽत्र ग्रन्थे एता एव देवता अधिकृत्य सामानि दृश्यन्ते। सोमयागे इन्द्रः प्रधानदेवता। क्वचिदाग्नेयोऽपि क्रतुर्भवति। तस्मिन्यागे स्तोत्रादिषु अनाग्नेयी ऋच उद्धृत्य तत्स्थाने आग्नेयी ऋच आवपन्ति। न केवलमत्रैव यत्रेन्द्रपदं वर्तते तत्राप्याग्नेयाः शब्दाः प्रयोक्तव्याः। अत एव द्राह्यायणादयः सुब्रह्मण्यानिगदे आग्नेयक्रतावग्निदेवताकं सगुणं निगदं प्रतिपादयन्ति। मीमांसकाः पुनस्तत्राप्यनूहेनैव निगदं समर्थयन्ते। अग्निष्टोमेऽप्याहृतक्रतुषु सुब्रह्मण्यानिगदे इन्द्रस्थाने शक्रमाभनन्ति कल्पकाराः।

सामवेदे समाम्नातानि सामानि द्विविधानि भवन्ति। ग्रामगाने वेयगानारण्यगानभिन्नि। स्तोभैर्युक्तानि गीतानि सामानि प्रजापतेर्व्रतादीनि प्रथमां कोटिमारोहन्ति। एतादृशानि सामानि वेयगाने एकम्, आरण्यकगाने चतुर्विंशतिः, ऊह्यगाने पञ्च च सन्ति। स्तोभाक्षरैस्सह ऋक्षु गीतानि द्वितीयां श्रेणिं लभन्ते। अल्पेन महता वा स्तोभेन युक्तानि बहूनि सामानि। स्तोभाक्षरहीनान्यृगाश्रितानि सामानि तृतीयां

---

[1] तथा च सायणाचार्यः—"अस्मिन्ब्राह्मणे प्राधान्येन गवामयनं प्रतिपाद्यते" इति ताण्ड्यमहाब्राह्मणस्य द्वितीयाध्यायोपक्रमे।

विधामारोहन्ति। यथा वा-अग्ने मृड इति पूर्वयामम्। यौधाजयौशनादीन्यत्रैवान्तर्भवन्ति। एतादृशान्यपि परिमितान्येव। तदयं विभागः—

ऋग्विहीनं छन्नगानं लेशं स्तोभमृचा सह।
आविर्गानं स्तोभहीनमेवं गानत्रयं विदुः।

इति वाञ्छिनाथेन प्रकटीकृतः॥

पुनरप्यन्तर्निधनं बहिर्निधनमिति सामानि द्विविधानि। यस्य साम्नः ऋगक्षराण्येव निधनभक्त्युच्चार्यन्ते तान्यन्तर्निधनानि। यथा यौधाजयम्। तत्र हिरण्ययः, सदत्, क्षण इत्येभिस्त्रिसामानि समाप्तानि। एतादृशानां साम्नां निधनानि साम्नामन्ते यथास्थानं गीतानि। ऋगक्षराद्बहिर्भूतान्यक्षराणि निधने यदि भवेयुस्तर्हि तानि सामानि बहिर्निधनानि। यथा आमहीयवम्। तत्र स्तौपे इति निधनम्। नैतत्पदं ऋचि दृष्टम्। अवः त्वच, वनामहे इत्येवं ऋगन्ताः। एतादृशानां बहिर्निधनानां साम्नामन्ते निर्दिष्टं निधनम्। प्रयोगकाले प्रतिसाम तन्निधनं निर्देष्टव्यम्। क्वचिदृगक्षरैस्सहैव निधनभक्तिस्संयुक्ता वर्तते। यथा वामदेव्यसाम्नि प्रथमः पादः प्रस्तावः। कयासदावृधस्सखा कयाशचि उद्गीथः। ष्ठया प्रतिहारः। वृताइत्युपद्रवेण हाइ इति निधनं योजयित्वा वाऽ[१]र्तोऽ३४[२]हाइ इति पठन्ति। एवमादिहाइप्रभृतीनां बहिर्निधनानां प्रतिसाम पाठः कृतोऽत्र ग्रन्थे। यत्र समानबहिर्निधनवन्ति सामानि क्रमेणागच्छन्ति तत्रान्तिमे साम्नि तस्य निधनस्य निर्देशः कृतः। यथा ऊहगानारम्भे रथन्तरसामसु चतुर्थे साम्नि "अस्" इति निधनमवलोक्यते। एतत्सर्वं लक्षणग्रन्थेषु स्पष्टीकृतमपि सुबोधार्थमत्र सङ्गृहीतम्।

एकस्मिन्साम्नि पञ्च भक्तयो विराजन्ते—प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः निधनं चेति। स्तोतारश्च त्रयः प्रस्तोता उद्गाता प्रतिहर्ता चेति। निधनं सर्वे समेत्योपेयुः। उद्गीथभक्तिमुपद्रवभक्तिं चोद्गाता गायति। शिष्टे प्रस्तोतृप्रतिहर्तारौ क्रमेण गायतः। प्रतिभक्ति बहूनि पर्वाणि भवेयुः। छन्दोगा यत्र विरम्य विरम्य पठन्ति तस्य पर्व इति नाम गेण्य' इति च। तत्र विरामकाले कश्चित्क्षणो गानहीनो भविष्यति। एवमेकः स्वकीयभक्तिमुच्चारयति। तदनन्तरमन्यो द्वितीयां भक्तिं यदोपक्रमते गातुं तत्रापि कश्चन क्षणो गानहीनः। निराकर्तुमशक्यस्यास्य परिपूर्त्यै केचन लौकिकाः पुरुषा एषां स्तोतॄणां पश्चादुपविश्य होइति मन्द्रस्वरेण शब्दायन्ते। पुरुषाणामेषां न वरणं विद्यते। एषामेषोपगातार इति समाख्या। उपगातारः स्तोत्रारम्भप्रभृतिसमाप्तिपर्यन्तं पूर्वप्रतिपादितदिशा शब्दायन्ते। शब्दस्य तस्य न स्तोत्रत्वम्। प्रयोगकाले साम्नामादौ हिङ्कारः

---

[१] तस्य गेष्णौ पर्वणी इति कल्पतरुकारः। यद्यपि प्रस्तावादिसामभक्तयवयवभूतानां पर्वत्वेन प्रसिद्धे साम्नामवच्छेदे गेष्णाख्या तेषां प्रसिद्धा, औपियत्वात्वे सामपर्वलक्षणग्रन्थेऽपि तथैव व्यवहारः इत्येवमादि छन्दोगशिरोमणयः परिमककारवादाः।



कर्तव्यः। "साम्नेसाम्ने हिंकुर्युः" इति विधिवाक्ये बहुवचनस्य विवक्षितार्थत्वात्सर्वे स्तोतारो हिंकारमुच्चारयेयुः। अयं हिङ्कारोऽपि भक्तिः। उद्गीथाद्यं प्रणवमुच्चारयति स्तोत्रकाले उद्गाता। अतस्सोऽपि भक्तिरिति सप्त भक्तयः साम्नि भवन्तीति प्रवादः। रथन्तरादीनां साम्नां प्रयोगकाले यथाशक्ति छान्दोग्योपनिषत्प्रतिपादितदिशा भक्त्युपासनां समामनन्ति स्तोतारः।

रथन्तरसाम्नि कश्चन विशेषः प्रतिपादितो ब्राह्मणग्रन्थे। तथाहि—उद्गीथभक्त्युपक्रमात्पूर्वं प्रणवोच्चारणानन्तरं वाक् इति पदं मध्ये संयोज्यानन्तरमुद्गीथोपक्रम इति। रथन्तरसाम्न्येव वाक्शब्दस्योच्चारणादन्यसामस्वप्रयोगान्नास्य हिङ्कारप्रणववद्भक्तित्वं सम्भवति। उद्गीथभक्तौ द्वे पर्वणी स्तः। तत्र प्रथमं पर्व प्रथमद्वितीयस्वरोपेतम्। द्वितीयं प्रथमद्वितीयतृतीयद्वितीयस्वरोपेतम्। प्रथमपर्वणि व्यञ्जनानां स्थाने मकारं प्रतिनिधायोन्मीलितनेत्रो गायेदुद्गाता। निदर्शनपूर्वकं प्रतिपादयामि—ज्योतिष्टोमाग्निष्टोमे पृष्ठस्तोत्रे अभिव्रावीं रथन्तरं भवति। हिम्। आभित्वाशूरनोनुमोवा इति प्रस्तावं प्रस्तौति प्रस्तोता। तदनूद्गाता ओं वाक् इत्युक्त्वा अदुग्धाइव धेनवईशानमस्य जगतः इति ऋगवयवे उद्गीथं मकारैस्संयोज्य मामुमामिमभेमभभीमाभभमभमभ इत्युद्गायति। द्वितीयं पर्व यथास्वाध्यायम्। एषा रीतिस्सर्वत्र रथन्तरसामसु।

एषां साम्नामाधारभूता ऋचो यत्र पठ्यन्ते तदिदं "उत्तरार्चिकम्" भवति। अध्यायप्रपाठकभेदेन विभजन्त्येतां सामवेदसंहिताम्। एकविंशतिरध्यायाः। प्रपाठकाः पुनर्नवैव। प्रपाठकस्य द्राववान्तरभेदौ स्तः, प्रथमोऽर्धः, द्वितीयोऽर्ध इति। कुत्रचित्तृतीयः। एकोऽर्धः एकोऽध्यायो भवति। उभयत्र खण्डात्मना विभागः। अत्रत्यानां येषामृङ्मन्त्राणां "गानं न विद्यते" इति औन्धप्रदेशमुद्रितग्रन्थस्य ऋगनुक्रमणिकायां निर्दिष्टं तत्र सर्वत्र गायत्रं गीयते। प्रायस्तेषां प्रातस्सवने विनियोगः। अन्तिमस्त्वध्यायः "अप्रतिरथसूक्तम्" भवति। यदि सामवेदीयो ब्रह्मत्वं करिष्यति तदाग्निचयने ब्रह्मणा पठनीयेऽप्रतिरथसूक्ते विनियुक्तोऽयमध्यायः। शिष्टा अध्यायास्सोमयागे विनियुक्ताः। खण्डानां तृचात्मना प्रगाथात्मना च विभागः। समग्रसूक्तसंख्या ४०२ वर्तते येन क्रमेण कतवो निरूपितास्तं क्रममनुसृत्य तत्रोपयुक्तानामृङ्मन्त्राणां क्रम आश्रितः। आसामृचां पवमानस्सोमः अग्निः मित्रावरुणौ इन्द्राग्नी इन्द्रः अश्विनौ उषाः देवताः। मन्त्रेषु गायत्र्यादिछन्दसां संख्या ग्रन्थान्तरतोऽवगन्तव्या।

पुष्पसूत्रादिग्रन्थेषु विशतिना भावैरनेनान्यूहोह्यगानयोस्सामानि भवन्तीति। ते च भावाः श्लोकैस्संगृहीताः तद्यथा—

आयिरवं प्रकृतिं चैव वृद्धं चाप्यृक्रमेव च।
गतागतं च स्तोभानामुपगीत्वं तथैव च॥
सन्धिबलमवद्गानमत्वमाभाव एव च।
प्रश्लेषात्याय विश्लेषा ऊहेरेवं निबोधत॥
संकृष्टं च विकृष्टं च व्यञ्जनं कुमनामतत्परम्।
आभावांश्च विकारांश्च भावानूहेऽभिलक्षयेत्॥
एतैर्भावैस्तु गायन्ति सर्वाः शाखाः पृथक्पृथक्॥इति॥

आइत्वम्—गानकाले वृद्धिं प्राप्तानां तालव्याचामूर्धस्थानां आइ इति गानम्। यथा "दिवि" इति पदे दिवाइ इति आइभाव आसहीयये।

प्रकृतिभावः—वृद्धं प्राप्तानां तेषामक्षराणां त्रिमात्राकालेनोच्चारणम्। आइभावेन न गानमिति यावत्। यौधाजये द्वितीयस्तोत्रीयायाः प्रस्तावे देवशब्दः दे ऽ ३ वो इत्येकारेणैव वर्तते।

वृद्धम्—क्वचि ह्रस्वं दीर्घं वाक्षरं गाने त्रिमात्रतां प्राप्नोति। तस्य वृद्धमिति संज्ञा। कुत्रचिद्ध्रस्वस्य वृद्धत्वे प्लुतेनापि व्यवहारः। अत्र वृद्धपदेनैव। यौधाजये चतुर्थमक्षरं वृद्धं भवति। तेन नाऽ३स्सो। अत्र दीर्घ ओकारो वृद्धः।

अवृद्धः—सर्वत्र यौधाजयादिषु तुरीयाक्षरस्य वृद्धप्राप्तस्य क्वचिद्वृद्धाभावः। श्यावाश्वे च इत्यनेनश्यावाश्वसाम्नि चतुर्थाक्षरे वृद्धे प्राप्ते "अयावास्यासोमया" इत्यनेन वृद्धाभावः। तेन प्रोऽ३याः इति।

गतम्—गतिशब्देनाप्यभिधीयते। हाइ, हाउ इति गानं गतिः।

अगतम्—गतस्य प्रमाणेन लोपः। यथा-राजादेवोहोऽऽक्रतंबृहान्। अत्र होइकारस्य गतेर्लोपः।

उच्चम्—क्वचि नीचस्वरस्य गाने उच्चस्वरता। आसहीयवद्वितीयायाः "वरिवोवित्" इत्यत्र वकारस्य क्वचि निघातस्य साम्नि वरिवोवाइत् इत्युच्चीभावः। अथवा उद्गीथादेर्नीचीभूतस्योच्चता।

नीचम्—नीचीभावः। योनावुच्चस्वरस्योद्गाने नीचीभावः। समन्ते समन्ते इत्यत्र चतुर्थस्वरानन्तरं पञ्चमः स्वरः। अर्थादुच्चादिः। पुना समन्ते द्वितीयस्वरानन्तरं प्रथमः स्वरः। ततश्चानुच्चम्।

सन्धिवत्—स्वराणां विसर्गादीनां च लक्षणेन सन्धिर्भवति। तद्वत् प्रमाणाभावेऽपि सन्धिं कृत्वा गानम्। पवस्वशक्रकुलाम्नि मदः इति समाप्तम्। उत्तरत्र यस्यते इति वर्तते। सन्धौ मदोयस्ते इति हि भवति। पदपाठे विसर्गान्तः। विसर्गान्तेनैव गानेन भवितव्यम्। परं मदो इति ओकारान्तं पदं। तस्यैव सन्धिवदिति संज्ञा।

पदवत्—क्वचि सन्धिशास्त्रेण विकारं प्राप्तस्य सन्ध्यभावः। हितो मा इत्यस्य सन्धिं प्राप्तस्य हिताः। इति पदवद्गानम्।

ह्रस्वम्—आकारो ह्रस्वो भवति। पावकः इत्यत्र पाकारः पकारो भवति गाने।

आर्भावः—वृद्धमक्षरस्य आर्भवति। छन्तः कृष्ण इत्यत्र ऋकारो वृद्धस्वर गाने छन्ताःकाऽ३र्ष्णाम् इत्यार्भवति।

प्रश्लेषः—लक्षणेन क्वचि पूर्वरूपं प्राप्तस्य गानेऽपि तथैव स्थितिः। यथावा पुनानोऽविभिःइत्यस्य संकृत्यादिषु तथैव गानम् नूनंपुनानोविभिः इति।



विश्लेषः—पूर्वरूपं प्राप्तमकारं विश्लिष्य गानम्। तत्रैव देवस्थाने नूनंपुनानोअविभिः इति।

संकृष्टः—संयुक्ताक्षराणां तथैव गानम् कावं सूर्यो इति रेफयकारयोस्तथैव गानम्।

विकृष्टः—संयुक्ताक्षरयोर्मध्येऽच्चोऽन्तर्भाव्य गानम्। सूर्यं इतीदं पदं वण्महाँसामनिषे सूरियाऽ३प् इति।

लोपः—वृत्रहान्नृभिः इत्यादौ विसर्गस्य लोपः इन्द्रो मदायवावृधेग्गिरे वृत्रहाऽऽनृभाइ इति। एवमकारादीनामपि।

अविकृतिः—अनुस्वारस्पर्शरेफाः स्तोभे प्रत्यये स्तोभमतीत्य रूपाक्षरेण सन्धीयन्ते। तंगूर्धयस्वर्णरं इत्यत्र स्वशब्दादनन्तरं स्तोभ आगते रेफाक्षरं परेण णकारेण सन्धीयते-तंगूर्धयास्वौ होणोराम् इति॥

आभावः—वृद्धं प्राप्तानां तालव्याचामन्तः पदिकानां हकारादिषु परेषु आभावः। तथा औहोवानां सर्वेषामक्षराणां आभावः। यथा नवाऽ३हाइ, प्राणाशिशार्याहाइ।

विकल्पः—तत्रैकस्मिन्नेव पादे द्विधा गानं दृश्यते। यथा–तरणिरिदे सेमिन्नषेवतुऽ२हाइ इति। सेमिन्नध्देवसाऽ२३हाइ इति। प्रयोगकाले यथेच्छमेकस्य पक्षस्य उच्चारणम्॥

इतोऽन्यदस्मत्सामतन्त्रभूमिकायामवलोकनीयम्॥

अथ ज्योतिष्टोमेऽग्निष्टोमे रथन्तरपृष्ठस्तोत्रस्य पद्धतिं निरूपयामि। माध्यन्दिनपवमानादूर्ध्वं चत्वारि पृष्ठस्तोत्राणि भवन्ति। होतुः पृष्ठम् मैत्रावरुणपृष्ठम् ब्रह्मसाम अच्छावाकपृष्ठमिति। तत्र सर्वाण्यमूनि सप्तदशस्तोमकानि। होतृपृष्ठविधिः—पूर्वं नाराशंसं भक्षयित्वाऽऽहवनीये प्रस्तोता पृष्ठहोमं जुहुयात्-रथन्तरं पिबतु सौम्यं मध्वायुर्दधद्यज्ञपतावविहृतमिमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहा रथन्तरायेदं न मम। स्वाहा प्रजापतय इदं न मम। यथेतं प्रत्याक्रम्य स्वस्थान उपविशेत्। प्रस्तोतृद्गातृप्रतिहर्तारः पुरस्ताज्जपेयुः

अभित्वाशूरनोनुमोऽदुग्धा इव धेनवः॥

ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥

नत्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।

अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे। इति

अध्वर्युणा प्रदत्तमुपाकरणतृणद्वयं प्रस्तोता गृहीत्वा "ब्रह्मन् स्तोष्यामः, प्रशास्तः" इत्युद्गात्रे दद्यात्। स्तोमयोगकाले तेन तृणद्वयेनोद्गाता स्वीयौ ऊरू स्पृशेत्। ऐरं वै बृहदैडं रथन्तरं मनो वै बृहद्वाग्रथन्तरं साम वै बृहद् ऋग्रथन्तरं प्राणो वै बृहदपानो रथन्तरं असौ वै लोको बृहदयं रथन्तरमित्युद्गाता मनसा ध्यायेत्-पशवे गोषु महिमा

यस्ते अप्सु रये वाते स्तनयित्नौ य उ ते यस्ते अग्नौ महिमा तेन सम्भव रथन्तर द्रविणवन्न एधि इति जपित्वा। दीक्षायै वर्णेन तपसो रूपेण मनसो महिम्ना वाचो विभूत्या प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय त्वेति स्तोमयोगः।

रथन्तरसाम्नो वसिष्ठ ऋषिः, ककुबुत्तराबृहतीच्छन्दः। इन्द्रो देवता। प्रजापतिरकामयत बहुस्यां प्रजायेयेति विधायकब्राह्मणम्। अभिमन्थति स हिंकार इत्युद्गीथोपासनम्। प्रस्तावस्य प्राणो देवता आदित्य उद्गीथस्य, अन्नं प्रतिहारस्य, हो इत्युपगातॄणाम्, ओमिति यजमानस्य, अग्नेरुद्गीथः अनिरुक्तः प्रजापतेः, निरुक्तस्सोमस्य, मृदुःश्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य, क्रौञ्चं बृहस्पतेः, अमृतत्वं देवेभ्य आगायानि, स्वधां पितृभ्य आगायानि, आशां मनुष्येभ्य आगायानि तृणोदकं पशुभ्य आगायानि, स्वर्गं लोकं यजमानायागायनि अन्नमात्मन आगायानि। क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वा आदित्यानां प्रथमः साध्यानां द्वितीयः अग्नेस्तृतीयः वायोश्चतुर्थस्सौमो मन्द्रः, मित्रावरुणयोरतिस्वार्यः।

हिम् (त्रयः।) आभित्वाशूरनोनुमोवा-इति प्रस्तावः प्रस्तोतुः। ओम् वाक् भाभुभाभिभभेभभभोभाभभभभभभ (एतावत्पर्यन्तं चक्षुस्सम्मीलनम्) सुवाऽ२३ ईशाम् इत्युद्गीथ उद्गातुः। आइशानमाऽ२३इन्द्राऽ३। इति प्रतिहारः प्रतिहर्तुः। सूस्थूऽ२३४पा। ओवाऽ६। हाउवा। इत्युपद्रव उद्गातुः। अस् इति निधनं त्रयाणाम्। एवं वारत्रयम्। इति तिस्रः स्तोत्रीयाः।

ईशोवा। इति प्रस्तावः प्रस्तोतुः। ओम् वाक् भाभिभभुभुभोभभाभाभभोभिभिभोः (एतावत्पर्यन्तं चक्षुस्सम्मीलनम्) नेपाऽ२३र्थिवाः इत्युद्गीथ उद्गातुः। नजातोनाऽ२३जाऽ३॥ इति प्रतिहारः प्रतिहर्तुः॥ नाइष्याऽ२३४ता। ओवाऽ६। हाउवा इत्युपद्रव उद्गातुः। अस् इति निधनं त्रयाणम्। इत्येका।

नजोवा इति प्रस्तावः प्रतिहर्तुः। ओम्वाक् भोभभंभिभभेभभाभभोभभभभि (एतावत्पर्यन्तं चक्षुस्संमीलनम्) द्रवाऽ२३ जिनाः इत्युद्गीथ उद्गातुः। गव्यन्तस्त्वाऽ२३ह्वाऽ३ इति प्रतिहारः प्रतिहर्तुः। वामाऽ२३४ह्वा। ओवाऽ६। हाउवा इत्युपद्रव उद्गातुः। अस् इति निधनं त्रयाणाम्। एवं प्रथमपर्याये पञ्च स्तोमाः।

पुनर्द्वितीयपर्यायार्थं हिंकृत्य पूर्वोक्तरीत्या प्रथमां स्तोत्रीयां सकृत्, द्वितीयां वारत्रयं तृतीयामेकवारं गीत्वा पञ्चस्तोमाः संपादनीयाः। ततस्तृतीयपर्यायार्थं हिंकृत्य प्रथमामेकवारं द्वितीयां वारत्रयं उत्तमां च वारत्रयं गीत्वा सप्तस्तोमाः सम्पादनीयाः। सप्तदशस्तोमस्य प्रस्तावं प्रस्तुत्य होतरेषा इति होतारं ब्रूयात्। स्तुत्वावरं चोदयेत्। तत्र द्वितीये कयान इति मैत्रावरुणपृष्ठे-सप्तदशस्तोमप्रस्तावान्ते प्रशास्तरेषा इति तृतीये तंवो-



दस्म इति ब्रह्मपृष्ठे-सप्तदशस्तोमस्य प्रस्तावान्ते ब्राह्मणाच्छंसिन् एषा इति, चतुर्थे तरोभिरिति अच्छावाकपृष्ठे सप्तदशस्तोमस्य प्रस्तावान्ते-अच्छावाक एषा इति तत्र-तत्र शंसिष्यन्तं ब्रूयात्। "स्तुवस्य स्तुतमस्यूर्जस्वत्पयस्वदा मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम्" इति यजमानं वाचयेत्। "अभित्वा शूर" इति पूर्ववज्जपो मन्त्रस्य। अयमेवोपरिष्टाज्जपः। शंसनान्ते स्तोमगणनार्थं निक्षिप्तानां कुशानाम् "ऋतस्य त्वा देव स्तोमपदे विष्णोर्धामनि विमुञ्चाम्येतत्त्वं देव स्तोमानवकरमगन्नशीमहि वयं प्रतिष्ठाम्" इति मन्त्रेणादानम्। एतदेव स्तोमविमोचनम्। "दीक्षायै वर्णेन" इति मन्त्रपाठ एव स्तोमयोगः। अस्य मन्त्रस्य पाठेऽपि बहवः पक्षाः वर्तन्ते।

रथन्तरं सामेन्द्रदेवताकं पृष्ठस्तोत्रे विनियुक्तम्। तत्रैव पूर्वोक्ता भकारादयो धर्मा भवेयुः। तदेव साम पवमानदेवताकं यदि माध्यन्दिनपवमाने आर्भवपवमाने वा, आग्नेयं स्यात् अग्निष्टोमस्तोत्रे वा, तदा नैते धर्मा भवेयुरिति लाट्यायनादीनां मतम्। तथा च सूत्रम्—तस्यापृष्ठस्य सतो निवर्तेरन्धर्मा इति। धानञ्जय्यमते भकारोऽनुवर्तते। इतरे निवर्तन्ते। शाण्डिल्यस्तु पवमानादतिरिक्ते अग्निष्टोमस्तोत्रे सन्धिस्तोत्रे च भकारानुवृत्ति मनुते। स्थविरगौतमस्तु अभित्वायां रथन्तरगाने पृष्ठापृष्ठगते सर्वत्र स्तोभानुवृत्तिमितरासु ऋक्षु गीयमाने रथन्तरे पृष्ठापृष्ठगते स्तोभानुवृत्तेरभावं च वर्णयति। ततश्च स्थविरगौतममते चतुर्वीराख्ये चतूरात्रे तृतीयेऽह्नि होतुः पृष्ठस्तोत्रे "अभित्वावृषभा" रथन्तरे यथासमाम्नातं साम भवति। न तत्रोद्गीथभक्तौ भकारप्रयोगः। सप्तदशस्तोमस्य सप्त विष्टुतयो भवन्ति। तत्र होतुः पृष्ठे या विष्टुतिराश्रिता सैवोत्तरत्रानुवर्तनीयासति विशेषविधिवाक्ये।

साम्नां काश्चन देवता अपि निश्चिता इति जानीमः। यथा रथन्तरस्यान्तरिक्षस्थान इन्द्रः, समन्तस्याग्निः पृथिवीस्थानः, रौरवस्य द्युस्थानः पवमानस्सोम इति। ननु रथन्तरादिशब्दैर्निषादादिस्वरघटिता गीतयो ज्ञायन्ते। गीतिस्थानां सप्तानां स्वराणां प्रजापतिप्रभृतयो देवता इति [1]सामविधानब्राह्मण-बृहद्देवतावाक्येभ्यो विदितमेव।

[1] क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वा आदित्यानां प्रथमः साध्यानां द्वितीयः, अग्नेस्तृतीयः वायोश्चतुर्थः सौमो मन्द्रः मित्रावरुणयोरतिस्वार्यं इति (सा. वि. ब्रा. १-१-२१)

वैश्वदेवः स्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशं समाश्रितः।
आश्विनस्तु तृतीयोऽत्र स्वरः कर्णौ समाश्रितः॥
चतुर्थस्त्वत्र वायव्यो नासिक्यः स्वर उच्यते।
पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्यदैवतः॥
यस्तु सामस्वरः षष्ठः स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य युक्तोऽतिस्वार्यं उच्यते॥
स मैत्रावरुणो ज्ञेयः मन्द्रस्थानसमाहितः (बृहद्देवता ८-११६-१२०)

अपिच परस्परमन्वितैः पदार्थैर्वाक्यार्थबोधो भवति। वाक्यार्थनिर्णयाच्च सन्दोष—निरुक्तेषु देवतावगमः कर्तुं शक्यते। गीतीनां न कश्चन विशिष्टः सांकेतिकोऽर्थोऽस्ति। ततश्च रथन्तरादिगीतिभ्यः कथं देवताया बोधः। यासु ऋक्षु सामान्युत्पन्नानि तासु विद्यमानैः पदैर्विशिष्टोऽर्थोऽवगतः। देवताज्ञानं च तत एव जातम्। सैव देवता निपादादिस्वरसमूहस्यैकस्य भवितुमर्हति। व्यस्तानां सप्तानां स्वराणां तत्र-तत्र देवतानिर्देशः कृतः। न तु समवेतानाम्। अतश्च न कश्चन विरोधः। ऋगाश्रितानि छन्दांस्येव साम्नाम्। सामसु बह्वक्षरतया भिन्नैश्छन्दोभिर्भवितव्यम्। तथापि गायत्रीच्छन्दसैव व्यवहारः। सावित्र्यां "तत्सवितुः" इत्यस्यामुत्पन्नं साम हिम् स्यिआऽर इत्यादिवर्णघटितमपि गायत्री इत्येव व्यवह्रियते। तदेव गानं इमे वै लोकाः गायत्रम् इत्यादिना ब्राह्मणग्रन्थेषु बहुधा स्तूयते। ततश्च देवतायाः छन्दसश्च निर्णयः ऋगाश्रित एव। यद्येवं ऋषिरपि सर्वत्र समान एव स्यादिति चेत्। सत्यम्। परन्तु "युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्यहरत्तस्मान्मन्त्रोऽपाक्रामत्स तपोऽतप्यत स एतदौक्ष्णपश्यत्तं मन्त्रमुपावर्तत"इति ब्राह्मणबलेन साम्नामन्ये ऋषयः, ऋचां चान्ये भवितुमर्हन्ति। तदेवं साम्नां देवता सिद्धा। यदैकं साम देवतान्तरघटितासु ऋक्षु गीयते तदा देवताभेदो भवति। अत एव अभित्वायामैन्द्र्यामुत्पन्नं रथन्तरं साम पावमान्यां पुनानायां गीतं सत् पवमानसोमदेवताकं भवति[1]।

साम्नां नामानि-कानिचिदृगाश्रितपदघटितानि यद्वाहिष्ठीयम्, यज्ञायज्ञीयम्, इति, कानिचिदपिनाम्ना निर्दिष्टानि रौरवम्, यौधाजयम् इति, कानिचिन्निधननाम्ना औकोनिधनम् ईनिधनमिति-कानिचित्पूर्वम् उत्तरमिति अर्कपुष्पोत्तरम् अष्टादंष्ट्रपूर्वम् इति। इतोऽप्यन्ये विषया अनुलोमगीत-प्रतिलोमगीतोभयविधगीत-प्रत्युक्तमगीत-कर्षण-विनत-नमन-प्रेङ्खादयो मद्दीयसामतन्त्रभूमिकातोऽवगन्तव्याः। ग्रन्थगौरवभिया नात्र निर्दिष्टाः।

इतः पूर्वं वङ्गदेशीयैः सामश्रमिसत्यव्रतशर्मभिरसंहितायाः पदपाठः प्रकाशितः। स इदानीं दुर्लभो जात इति तस्य प्रचारार्थं संयोजितोऽत्र। अस्य कर्ता भगवान् गार्ग्य इति सत्संप्रदायः। यथा ऋग्वेदादिषु क्रमपाठादिकं जागर्ति तथा नास्त्यत्र। केवलं पदान्तपाठ एव। स्वमनीषया लक्षणग्रन्थानुसारेणात्रापि सर्वा विकृतयः प्रकाशयितुं शक्यन्ते परमेतद्विकृत्युपोद्बलकं छन्दोगमहर्षिवाक्यं क्वापि नोल्लेखितमिति वैदिकास्तत्र विरतव्यापारा आसन्। पदपाठस्य प्रमाणं नारदशिक्षायाम्—

समासेऽवग्रहं कुर्यात्पदं चात्रानुसंहितम्।
यतोऽक्षरादिकरणं पदान्ते तस्य तं विदुः॥
सर्वत्र पुत्रमित्रसखिशब्दा अद्रिशतक्रतोरवग्राह्याः।
आदित्य विश्व जातवेदाश्च सप्ततिगोपतिवृत्रहासमुद्र[2]श्च। इति

अवग्रहसूत्रे च पदपाठपद्धतिर्निर्दिष्टा। तथा पूर्वार्चिकपदपाठस्योपोद्बलको हितवाक्यमिति कश्चन ग्रन्थो वर्तते। तत्र धर्मोपादानम् इति हितप्रतिपादनेन सह ग्रहशु अव-

[1] अस्य पट्टिकापि संगृहीता गौरवत्वादत्र नोद्धृता।

[2] ना. शि. २. ३. ९.



ग्रहपदानि निरूपितानि। अवग्रहे प्राय इतिकारो नास्ति। यथा—हव्यदातये हव्य। दातये न तु हव्यदातय इति हव्य दातये इति। प्रगृह्यान् परमितिकारो वर्तते इन्द्राग्नी इन्द्र अग्नी इति। "इवेन नित्यसमासः" इत्यस्य वाक्यस्य नास्मिन्वेदे प्रयोजनम्। मित्रावरुणा पदं व्यस्तमेव। मित्रेत्यत्रावग्रहः।

"यदिन्द्रचित्र" इत्यस्य मन्त्रस्य मेहनापदव्याख्यानावसरे निरुक्तकार आह—चायनीयं मंहनीयं धनमस्ति, यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि-इति। एवं मेहनापदस्य विवरणे यास्काभिप्रायमाह दुर्गाचार्यः— बह्वृचानां मेहना इत्येकं पदम्। छन्दोगानां त्रीण्येतानि पदानि-मे इह न-इति। तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ-इति। तदेतदपलोकयन्तस्सर्वे विमर्शकाः कौथुमशाखायां तादृशं पदपाठमननुभवन्तः शाखान्तरस्थं लुप्तशाखास्थं वा मन्यन्ते।

मम तु प्रतिभाति—ऋक्संहितायाः पदकर्तारौ द्वावास्ताम्। एकः शाकल्यः। अपरो गार्ग्यः। तयोरेवात्र पदपाठभेदः प्रदर्शितो यास्काचार्यैः। प्रमाणं चात्र भवति पदपाठविषये "तस्मादन्यदवसाने तृतीयं गार्ग्यः स्पर्शं प्रथमं शाकटायनः" इति शौनकोक्तं प्रातिशाख्यवाक्यम्। तस्य वाक्यस्यार्थमुपपादयामास उव्वटाचार्यः-तस्मादनुनासिकादन्त्यात्स्पर्शादन्यं पदावसाने वर्तमानं स्पर्शं गार्ग्य आचार्यः स्वं तृतीयं मन्यते। यथा वाग् षड् तद् ककुब्। तस्मादन्यमिति किम्? ताम् सम्। शाकटायन आचार्यः प्रथमं मन्यते यथा वाक् षट् तत् ककुप्"इति। एकस्यैव पदस्य वैरूप्यं मन्यमानाभ्यां ताभ्यामेव मेहनापदेऽपि तन्निरूपितं भवेत्। शाकटायनमतेन पदपाठस्समुपलब्धस्सांप्रतम्। इतराभ्यामप्रतिपादितो लुप्तः। अपि च प्रातिशाख्ये मतद्वयमवलोक्यैव "ऊष्मान्तस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यत्र विसर्जनीयात्" इति पदान्ताक्षराणि परिसंख्यातानि। अस्यायमाशयः अन्यत्र विसर्जनीयात् विसर्जनीयवर्जमूष्माणः—ह श ष स ᳲक ᳲप अं, अन्तस्थाः—य र ल व, ऋकारः, सोष्माणः ख घ छ झ ठ ढ थ ध फ भ,चवर्गः च ज ञ (द्वितीय चतुर्थौ पूर्वं सोष्माण इत्यत्र गृहीतौ) एते पदान्तं न गच्छन्ति। शिष्टा वर्णाः पदान्तमृच्छन्ति-इति। उव्वटभाष्ये चोदाहरणं दत्तम्। तत्र तृतीयाक्षरस्यापि पदान्तत्व एवैतद्वाक्यं सफलं भवेत्, शाकटायनमते हि वर्गतृतीयाक्षरस्य पदान्तता नास्ति। तथैव गार्ग्यमते वर्गप्रथमाक्षरस्य। ऊष्मान्तस्थेति प्रातिशाख्यभाष्ये ऊष्माणश्चान्तस्थाश्च ऋकारश्च सोष्माणश्च चकारवर्गश्च इत्येते सप्तविंशतिवर्णाः पदान्तं न गच्छन्ति—इति विवरणं दत्तम्। कथमेषां वर्णानां सप्तविंशतित्वमिति न जाने। ततश्च ऋग्वेदपदपाठे भेदमवलोक्य यास्काचार्यः प्रतिपादयति स्मार्थद्वयम्। अत एव ऋक्सामार्चिकमन्त्रयोस्सत्यपि पाठभेदे न तद्वर्णमपि प्रतिपादयामास निरुक्तकारः—शिपिविष्टपदविवरणप्रकरणे किमिते विष्णो परिचक्ष्यं भूत् प्रयत् इति ऋक्सामार्चिकमेवावर्णयत्। न तु परिचक्षि नाम इति छन्दोगमन्त्रपदम्। किन्तु समानसामानौ माननीयौ महर्षी गार्ग्यावास्ताम्। एको होतृवेदस्य, अपरः सामार्चिकस्य पदकर्ता—इति शिवम्॥

सप्तस्वरैः समस्तं यो जगदेतच्चराचरम् ।
[1]संजीवयति विश्वात्मा स मे विष्णुः प्रसीदतु ॥
अज्ञाततातवदनं सौभ्रात्रं दर्शयन्परम् ।
योऽध्यापयत्साममन्त्रान् पितृवत्परिपाल्य माम् ॥
श्रौतं स्मार्तं कुलाचारान् मार्गबन्धुं ममाग्रजम् ।
अप्पय्यदीक्षितेन्द्रस्य वंशे जातं नमामि तम् ॥
सामवेदस्थऋङ्मन्त्रस्वातन्त्र्यं नित्यता तथा ।
ऊहगानस्थगीतीनां परिभाषास्वरैः सह ॥
स्वरविन्यासनिर्देशः त्रिवृत्स्तोमादिवर्णनम् ।
शश्लेशस्वरूपं च पर्वणां विषयास्ततः ॥
साम्नां देवा विधा भक्तिरुत्तरार्चिकवर्णनम् ।
भावाः पृष्ठप्रयोगोऽथ साननामानुकीर्तनम् ॥
पदपाठाश्रिताः केचिद्विषया विवृता मया ।
गवेषकयशःप्रार्थी गतोऽहमुपहास्यताम् ॥
तथापि प्रार्थये विद्वान् लेखार्थपरिशीलनम् ।
कुर्वन्तु प्रथमं पूतदृष्ट्या सहजसिद्धया ॥
दोषान्मद्धृद्विजान्दूरीकुर्वन्तु प्रभवः सदा ।
विश्वेशो हृदधिष्ठाय प्रेरयामास लेखिनीम् ॥
विश्वेशकृपया पूर्णमासीद्ग्रन्थप्रकाशनम् ।
ग्रन्थं समर्पये शम्भोस्तस्य पादाम्बुजद्वये ॥

---

[1] स वा इदं विश्वं भूतमसृजत । तस्य सामोपजीवनं प्रायच्छत् । तथोऽसौ कृत्स्नम् इव साम्नः तं देवा उपजीवन्ति । योऽवरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसः यस्तृतीयस्तं पशवः यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते, यः पञ्चमस्तमसुररक्षांसि योऽन्त्यस्तमोषधयो यच्चान्यज्जगत्—इति सामविधानब्राह्मणे ।

## उत्तरार्चिकाध्यायसूची



## प्रपाठकसूची

## ऊहगानपर्वसूची



## ऊह्यगानपर्वसूची



---

॥ श्रीः ॥

॥ ॐ नमः सामवेदाय ॥

# अथोहगाने प्रथमं दशरात्रपर्व ॥

॥ श्रीगणेशाय नमः ॥

॥ ॐनमः सामवेदाय ॥

# सामवेदसंहितायामुत्तरार्चिकः ।

## प्रथमोऽध्यायः ।

### (प्रथमप्रपाठके प्रथमोऽर्धः)

१. असितः काश्यपो देवलो वा । गायत्री । पवमानः सोमः ।

१. उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ॥१॥

२. अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥२॥

३. स नः पवस्व शं गवे शं जनाय शमर्वते । शꣳ राजन्नोषधीभ्यः ॥३॥

धा. १४. उ. १. स्व. ४. ती ॥१॥

२. कश्यपो मारीचः । गायत्री । पवमानः सोमः ।

४. दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवाशिरः ॥१॥

५. हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥२॥

---

पदपाठः ।

१. उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे । अभि । देवान् । इयक्षते ॥ अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः । देवम् । देवाय । देवयु ॥ सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । शम् । राजन् । ओषधीभ्यः । ओष । धीभ्यः ॥

२. दविद्युतत्या । रुचा । परिष्टोभन्त्या । परि । स्तोभन्त्या । कृपा । सोमाः । शुक्राः । गवाशिरः । गो । आशिरः ॥ हिन्वानः । हेतृभिः । हितः । आ । वाजम् ।

६. ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे। पवस्व सूर्यो दृशे ॥३॥

धा. १२. उ. न. स्व. ३. चि ॥२॥

३. शतं वैखानसाः। गायत्री। पवमानः सोमः।

७. पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत। अर्वन्तो न श्रवस्यवः ॥१॥

८. अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये। अवावशन्त धीतयः ॥२॥

९. अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः। अग्मन्नृतस्य योनिमा ॥३॥

धा. ११. उ. १. स्व. न. कौ. ॥३॥

इति प्रथमः खण्डः

४. भरद्वाजो बार्हस्पत्यः। गायत्री। अग्निः।

१०. अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि ॥१॥

११. तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य ॥२॥

१२. स नः पृथु श्रवाय्यमच्छा देव विवाससि। बृहदग्ने सुवीर्यम् ॥३॥

धा. ९. उ. न. स्व. १. ल ॥४॥

---

वाजी। अक्रमीत्। सीदन्तः। वनुषः। यथा। ऋधक्। सोम। स्वस्तये। सु। अस्तये। संजग्मानः। सम्। जग्मानः। दिवा। कवे। पवस्व। सूर्यः। दृशे॥

३. पवमानस्य। ते। कवे। वाजिन्। सर्गाः। असृक्षत। अर्वन्तः। न। श्रवस्यवः। अच्छ। कोशम्। मधुश्चुतम्। मधु। श्चुतम्। असृग्रम्। वारे। अव्यये। अवावशन्त। धीतयः। अच्छ। समुद्रम्। सम्। उद्रम्। इन्दवः। अस्तम्। गावः। न। धेनवः। अग्मन्। ऋतस्य। योनिम्। आ॥

४. अग्ने। आ। याहि। वीतये। गृणानः। हव्यदातये। हव्य। दातये। नि। होता। सत्सि। बर्हिषि। तम्। त्वा। समिद्भिः। सम्। इद्भिः। अङ्गिरः। घृतेन। वर्धयामसि। बृहत्। शोच। यविष्ठ्य। सः। नः। पृथु। श्रवाय्यम्। अच्छ। देव। विवाससि। बृहत्। अग्ने। सुवीर्यम्। सु। वीर्यम्॥



५. विश्वामित्रो गाथिनः जमदग्निर्वा। गायत्री। मित्रावरुणौ।

१३. आ नो मित्रा वरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू ॥१॥

१४. उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिः शुचिव्रता ॥२॥

१५. गृणाना जमदग्निना योनावृतस्य सीदतम्। पातं सोममृतावृधा ॥३॥

धा. १२. उ. न. स्व. २. चि. ॥५॥

६. इरिम्बिठिः काण्वः। गायत्री। इन्द्रः।

१६. आयाहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिस्सदो मम ॥१॥

१७. आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नश्शृणु ॥२॥

१८. ब्रह्माणस्त्वा युजा वयं सोमपामिन्द्र सोमिनः। सुतावन्तो हवामहे ॥३॥

धा. १० उ २ स्व न फौ ॥६॥

---

५. आ। नः। मित्रा। मि। त्रा। वरुणा। घृतैः। गव्यूतिम्। गो। यूतिम्। उक्षतम्। मध्वा। रजांसि। सुक्रतू। सु। क्रतू इति॥ उरुशंसा। उरु। शंसा। नमोवृधा। नमः। वृधा। मह्ना। दक्षस्य। राजथः। द्राघिष्ठाभिः। शुचिव्रता। शुचि। व्रता॥ गृणाना। जमदग्निना। जमत्। अग्निना। योनौ। ऋतस्य। सीदतम्। पातम्। सोमम्। ऋतावृधा। ऋत। वृधा॥

६. आ। याहि। सुषुम। हि। ते। इन्द्र। सोमम्। पिब। इमम्। आ। इदम्। बर्हिः। सदः। मम॥ आ। त्वा। ब्रह्मयुजा। ब्रह्म। युजा। हरी इति। वहताम्। इन्द्र। केशिना। उप। ब्रह्माणि। नः। शृणु॥ ब्रह्माणः। त्वा। युजा। वयम्। सोमपाम्। सोम। पाम्। इन्द्र। सोमिनः। सुतावन्तः। हवामहे॥

७. विश्वामित्रो गाथिनः । गायत्री । इन्द्राग्नी ।

१९. इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥१॥

२०. इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमꣳ सुतम् ॥२॥

२१. इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ॥३॥

धा ९ उ १ स्व २ ता ॥७॥

इति द्वितीयः खण्डः

८. अमहीयुराङ्गिरसः । गायत्री । पवमानः सोमः ।

२२. उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे । उग्रꣳ शर्म महि श्रवः ॥१॥

२३. स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्परि स्रव ॥२॥

---

७. इन्द्राग्नी । इन्द्र । अग्नी इति ॥ आ । गतम् । सुतम् । गीर्भिः । नभः । वरेण्यम् । अस्य । पातम् । धिया । इषिता । इन्द्राग्नी । इन्द्र । अग्नी इति ॥ जरितुः । सचा । यज्ञः । जिगाति । चेतनः । अया । पातम् । इमम् । सुतम् । इन्द्रम् । अग्निम् । कविच्छदा । कवि । छदा । यज्ञस्य । जूत्या । वृणे । ता । सोमस्य । इह । तृम्पताम् ॥

८. उच्चा । उत् । चा । ते । जातम् । अन्धसः । दिवि । सत् । भूमि । आ । ददे । उग्रम् । शर्म । महि । श्रवः ॥ सः । नः । इन्द्राय । यज्यवे ।

---

गानपाठः ॥

उहगाने दशरात्रपर्व ।

१. आमहीयवम् । अमहीयुः । गायत्री । पवमानः सोमः ।

ओम् । उच्चाताऽ३इ जातमन्धसाः ॥ दिवाइसाऽ१द्भूऽ२ । मिया-ऽ२३ददाइ ॥ उग्रꣳशर्मा ॥ महाऽ२३इश्रवाउ । वाऽ३ ॥ ओः ॥ सनआऽ२-



२४. एनो विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥३॥

धा १३ उ २ स्व ४ ठी ॥८॥

९. सप्तर्षयः ( भरद्वाजो बार्हस्पत्यः; कश्यपो मारीचः; गोतमो राहूगणः; अत्रिर्भौमः; विश्वामित्रो गाथिनः; जमदग्निर्भार्गवः; वसिष्ठो मैत्रावरुणिः ) बृहती-सतोबृहत्यौ (प्रगाथः) । पवमानः सोमः ॥

२५. पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥१॥

---

वरुणाय । मरुद्भ्यः । वरिवोवित् । वरिवः । वित् । परि । स्रव ॥ एनो । विश्वानि । अर्यः । आ । द्युम्नानि । मानुषाणाम् । सिषासन्तः । वनामहे ॥

९. पुनानः । सोम । धारया । अपः । वसानः । अर्षसि । आ । रत्नधाः । रत्न । धाः । योनिम् । ऋतस्य । सीदसि । उत्सः । उत् । सः । देवः । हिरण्ययः ॥

---

इन्द्रायययज्यवाइ ॥ वरुणाऽ१याऽ२ । मरूऽ२३द्भियाः ॥ वरिवोवाइत ॥ पराऽ२३इस्रवाउ । वाऽ३ ॥ ओः ॥ एनावाऽ३इश्वानिअर्यआ ॥ द्युम्नानाऽ१-इमाऽ२ । नुषाऽ२३णाम् ॥ सिषासन्ताः । वनाऽ२३महाउ । वाऽ३ ॥ स्वोंपे ऽ३४५ ॥

दीर्घम्. ९. प्लुतम्, ५. मात्रा २१. न. (१)

२. रौरवम् । करः । बृहती । पवमानः सोमः ।

पुनानस्सोमाऽ२धाराऽ२३४ या ॥ आपोवसानोअर्षस्यारत्नधा-योनिमृतस्यसाऽ२इदसाइ । ओहाऽ२उवा ॥ उत्सोदेवोहिराऽ२३ण्याइ । ओहाऽ२उवा ॥ यययाः । औऽ३होवा । ओः ॥ उत्सोदेवोहाऽ३-इरण्याऽ२३४याः ॥ उत्सोदेवोहिरण्ययोदुहानऊधर्दिव्यम्मधूऽ२प्रियाम् । ओहाऽ२उवा ॥ प्रत्नꣳसधस्थमाऽ२३साइ । ओहाऽ२उवा । सदात ॥ औऽ२३-

२६. दुहान ऊधर्दिव्यं मधुप्रियं प्रत्नꣳ सधस्थमासदत् ।
आ पृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥२॥

धा. ९ उ. ना. स्व. ५. लु ॥९॥

दुहानः । ऊधः । दिव्यम् । मधु । प्रियम् । प्रत्नम् । सधस्थम् । सध । स्थम् । आ । असदत् । आपृच्छ्यम् । आ । पृच्छ्यम् । धरुणम् । वाजी । अर्षसि । नृभिः । धौतः । विचक्षणः । वि । चक्षणः ॥

होवा ॥ श्रीः ॥ प्रत्नꣳसधस्थाऽ३मासाऽ२३४दात् ॥ प्रत्नꣳसधस्थ-मासददापृच्छ्यन्धरुणंवाजियाऽ२र्षसाइ । ओहाऽ३उवा ॥ नृभिर्धौतो-विचाऽ२३हाइ । ओहाऽ३उवा ॥ क्षणा । औऽ३होवा । होऽ५इ ॥ डा ॥

दी. २५. उत् ३. मा. २०, यौ. (२)

३. यौधाजयम् ॥ युधाजित् । बृहती । पवमानः सोमः ।

पुनाऽ३१ । नाऽ३स्सो । म । धाराऽ२३४या ॥ आपोऽ३ । वसाऽ२ । नआऽ३४५ । षाऽ२३४सी । आरत्नधाः । यो । निमृताऽ२ । स्य-साऽ३४५इ । दाऽ२३४सी ॥ उत्साऽ२ः ॥ दाइवोऽ२ । हिराऽ३४५ । ण्या-ऽ२३४याः ॥ श्रीः ॥ उत्सोऽ३१ । देऽ३वो । हि । रण्याऽ२३४याः ॥ ऊत्सोऽ३ । दाइवोऽ२ । हिराऽ३४५ । ण्याऽ२३४याः । दुहानऊ । धः । दिवि याऽ२म् । मधूऽ३४५ । प्रीऽ२३४याम् ॥ प्रत्नऽ२म् ॥ साधाऽ२ । स्थमाऽ-३४५ ॥ साऽ२३४दात् ॥ श्रीः ॥ प्रत्नाऽ३१म् । साऽ३ध । स्थम् । आसा-ऽ२३४दात् ॥ प्रत्नाऽ३म् । सधाऽ२ । स्थमाऽ३४५ । साऽ२३४दात् । आपा-च्छियाम् । ध । रुणंवाऽ२ । जियाऽ३४५ । षाऽ२३४सी ॥ नृभाऽ२ इः ॥ धौतोऽ२ । विचाऽ३४५ ॥ क्षाऽ२३४णाः ॥ दी. २. उत्. ६. मा. २५. टो. (३)

१०. उशनाः काव्यः । त्रिष्टुप् । पवमानः सोमः ।

२७. प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥१॥

२८. स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः ।
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥२॥

२९. ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्य३ं गुह्यं नाम गोनाम् ॥३॥

धा २१. उ. न. स्व. ५. हु. ॥१०॥

इति तृतीयः खण्डः

१०. प्र । तु । द्रव । परि । कोशम् । नि । सीद । नृभिः । पुनानः । अभि । वाजम् । अर्ष । अश्वम् । न । त्वा । वाजिनम् । मर्जयन्तः । अच्छ । बर्हिः । रशनाभिः । नयन्ति ॥ स्वायुधः । सु । आयुधः । पवते । देवः । इन्दुः । अशस्तिहा । अशस्ति । हा । वृजना । रक्षमाणः । पिता । देवानाम् । जनिता । सुदक्षः । सु । दक्षः । विष्टम्भः । वि । स्तम्भः । दिवः । धरुणः । पृथिव्याः ॥ ऋषिः । विप्रः । वि । प्रः । पुरएता । पुरः । एता । जनानाम् । ऋभुः । ऋ । भुः । धीरः ।

४. औशनम् ॥ उशनाः । त्रिष्टुप् । पवमानः सोमः ।

प्रातु ॥ द्रवापरिकोशाम् । निषीऽ३दा । नृभाइꣳपुना । नोऽ२ अभि । वाजमर्षा । अश्वंनत्वावाजिनम्मा । जयाऽ२३न्ताः ॥ अच्छाबर्हाइः ॥ रशना । भाऽ३४३इः । नाऽ३याऽ५न्ताऽ६५६इ ॥ श्रीः ॥ स्वा ॥ युधाꣳपवतेदाइ । वाइऽ३न्दूः । अशास्तिहा । वृजना । रक्षमाणाः । पितादेवानांजनिता । सुदाऽ-२३क्षाः ॥ विष्टम्भोदाइ ॥ वोऽ३धरु । णाऽ२४३ः । पाऽ३र्थाऽ५इव्या ऽ६५६ः ॥

११. वसिष्ठो मैत्रावरुणिः । बृहतीसतोबृहत्यौ (प्रगाथः) । इन्द्रः ।

३०. अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥१॥

३१. न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥२॥

धा. २२. उ. न. ख. ४. सौ ॥११॥

१२. वामदेवो गौतमः । गायत्री । इन्द्रः ।

३२. कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥१॥

---

उशना । काव्येन । सः । चित् । विवेद । निहितम् । नि । हितम् । यत् । आसाम् । अपीच्यम् । गुह्यम् । नाम । गोनाम् ॥

११. अभि । त्वा । शूर । नोनुमः । अदुग्धाः । अ । दुग्धाः । इव । धेनवः । ईशानम् । अस्य । जगतः । स्वर्दृशम् । स्वः । दृशम् । ईशानम् । इन्द्र । तस्थुषः ॥ न । त्वावान् । अन्यः । अन् । यः ॥ दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते । अश्वायन्तः । मघवन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥

१२. कया । नः । चित्रः । आ । भुवत् । ऊती । सदावृधः । सदा । वृधः । सखा । स । खा । कया । शचिष्ठया । वृता ॥ कः । त्वा । सत्यः ।

---

श्रीः ॥ आर्षीः ॥ विप्राऽपुरएता । जनाऽ३नाम् । ऋभुर्धीराः । उशना । काविये्ना । सञ्चिद्धिवेदनिहिताम् । यदाऽ२३साम् ॥ अपाइचियाम् ॥ गुहियम् । नाऽ३४३ । मोऽ३गोऽ५"नाऽ६७६ म् ॥ दी. १६. उत्. १० मा २८ दे (४)

५. वामदेव्यम ॥ वामदेवः । गायत्री । इन्द्रः ।

काऽ४या । नश्चाऽ३इत्राऽ३आभुवात् ॥ ऊ । तीसदावृधस्स । खा ।

३३. कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥२॥

३४. अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥३॥

धा. १३. उ. १. स्व. २. टा. ॥१२॥

१३. नोधो गौतमः । बृहतीसतोबृहत्यौ (प्रगाथः) इन्द्रः ।

३५. तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभिवत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥१॥

---

मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः । दृढा । चित् । आरुजे । आ । रुजे । वसु ॥ अभि । सु । नः । सखीनाम् । स । खीनाम् । अविता । जरितॄणाम् । शतम् । भवासि । ऊतये ।

१३. तम् । वः । दस्मम् । ऋतीषहम् । ऋती । सहम् । वसोः । मन्दानम् । अन्धसः । अभि । वत्सम् । न । स्वसरेषु । धेनवः । इन्द्रम् । गीर्भिः । नवामहे ॥

---

औऽ३होहाइ । कयाऽ२३शचाइ ॥ ष्ठयाहोऽ३ । हुम्माऽ२ ॥ वाऽ२तोऽ३५"-हाइ ॥ श्रीः । काऽ५स्त्वा । मत्योऽ३माऽ३दानाम् ॥ मं । हिष्ठोमात्सादन्ध । सा । औऽ३होहाइ । दृढाऽ२३चिदा । रुजोहोऽ३ । हुम्माऽ२ ॥ वाऽ२सोऽ३५" हाइ ॥ श्रीः ॥ आऽ५भी । षुणाऽ३स्सा३खीनाम् ॥ आ । विताजरातॄ । णाम् । औऽ२३होवाइ । शताऽ२३म्भवा ॥ सियोहोऽ३ । हुम्माऽ२ ॥ ताऽ२योऽ३५ हाइ ॥ दी. १५. उत्. न. मा १४. धो. (५)

६. नौधसम् । नोधाः । बृहती । इन्द्रः ।

ताऽ२३४म् । वोदस्ममृती । षाहाम् ॥ वसोर्मन्दा । नोऽ३-मान्धाऽ३साः । आऽ२३भी । वात्सन्न । स्वस । राइ । धूधेनाऽ२३४वाः ॥ आऽ२३इन्द्राम् ॥ गाइर्भिर्नवाऽ२३४वा ॥ माऽ२३४हे ॥ श्रीः ॥ ओऽ-२३४५ । द्रंगीर्भिर्नवा । माहाइ ॥ इन्द्रंगीर्भाइः । नाऽ२वामाऽ३हाइ ।

३६. द्युक्षः सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
द्युमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥२॥
धा. ११. उ. न. स्व. ४. ही. ॥ १३॥

१४. कलिः । बृहतीसतोबृहत्यौ ( प्रगाथः ) इन्द्रः ।

३७. तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥१॥

द्युक्षम् । द्यु । क्षम् । सुदानुम् । सु । दानुम् । तविषीभिः । आवृतम् । आ । वृतम् । गिरिम् । न । पुरुभोजसम् । पुरु । भोजसम् । द्युमन्तम् । वाजम् । शतिनम् । सहस्रिणम् । मक्षू । गोमन्तम् । ईमहे ॥

१४. तरोभिः । वः । विदद्वसुम् । विदत् । वसुम् । इन्द्रम् । सबाधः । स । बाधः । ऊतये । बृहत् । गायन्तः । सुतसोमे । सुत । सोमे । अध्वरे । हुवे । भरम् ।

द्युऽ२क्षाम् । सुदानुम् । तवि । षाइ । भाइरावाऽ२३४ताम् ॥ गाऽ२३-इरीम् ॥ नपुरुभोऽ२३४वा ॥ जाऽ२३४साम् ॥ श्रीः ॥ गाऽ२३४इ । रिन्नपुरुभो । जासाम् ॥ गिरिन्नपू । रूऽ३भोजाऽ३साम् । द्युऽ२३मा । तंवा-जम् । शति । नाम् । साहस्राऽ२३४इणाम् ॥ माऽ२३क्षू ॥ गोमन्तमी-ऽ२३४वा ॥ माऽ२३४हे ॥

दी. ९. उन्. ३. मा. २८. दै. ॥६॥

७. कालेयम् ॥ कलिः । बृहती । इन्द्रः ।

तरोभाऽ३इर्वोविदद्वसुम् ॥ इन्द्राऽ३सबा । धऊतयाऽ२३इ । बृहद्गा-याऽ३ । ताऽ२३४ः । सुतसोमेअ । ध्वाऽ३राइ ॥ हुवाइभरो । बाऽ२३४-औऽ३४वा ॥ नकाऽ५रिणाम् ॥ श्रीः ॥ हुवेभाऽ३रन्नकारिणाम् ॥ हुवा-इभराम् । नकारिणाऽ२३न् । नयन्दुध्राऽ३ः । वाऽ२३४ । रन्तेनस्थिराः ।



३८. न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥२॥
धा. १७. उ. ३. स्व. ५. जु. ॥ १४॥

इति चतुर्थः खण्डः

१५. मधुच्छन्दा वैश्वामित्रः । गायत्री । पवमानः सोमः ।

३९. स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥१॥
४०. रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥२॥

न । कारिणम् ॥ न । यम् । दुध्राः । वरन्ते । न । स्थिराः । मुरः । मदेषु । शिप्रम् । अन्धसः । यः । आदृत्य । आ । दृत्य । शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यम् ॥

१५. स्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया । इन्द्राय । पातवे । सुतः ॥ रक्षोहा । रक्षः । हा । विश्वचर्षणिः । विश्व । चर्षणिः । अभि । योनिम् । अयोहते । अयः । हते । द्रोणे । सधस्थम् । सध । स्थम् । आ । असदत् ॥

मूऽ३राः ॥ मदाइषुशी । बाऽ३४३औऽ३४वा ॥ प्रमाऽ५न्धसाः ॥ श्रीः ॥ मदेषूऽ३शाइप्रमन्धसाः ॥ मदाइषुशाइ । प्रमन्धसाऽ२३ः । यआदृत्याऽ२ । शाऽ२३४ । शमानायसु । न्वाऽ३ताइ ॥ दाताजरी । बाऽ३४३औऽ३४वा ॥ त्रऊऽ५क्थियाम् । हौऽ५इ ॥ डा ॥

दी. १६. उन्. २. मा. २१. ग. ॥७॥

८. सꣳहितम् ॥ संहितः । गायत्री । पवमानः सोमः ।

स्वादिष्ठयाम । दाऽ२इष्ठया ॥ पवाऽ२ । स्वाऽ२३सो । मधाऽ२-रया ॥ आऽ२३इन्द्रा ॥ याऽ२पा । तवाऽ२३ । हाउवाऽ३ ॥ सूऽ२३४-ताः ॥ श्रीः ॥ रक्षोहाविश्व । चाऽ२र्षणाइः ॥ अभाऽ२इ । योऽ२३नीम् । अयोऽ२हताइ । द्रोऽ२३णे ॥ साऽ२धा । स्थमाऽ२३ । हाउवाऽ३ ॥ साऽ-

४१. वरिवोधातमो भुवो मꣳहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥३॥
धा. १५. उ. १. स्व. न. पौ. ॥ १५ ॥

१६. गौरिवीतिः शाक्त्यः । ककुप्सतोबृहत्यौ ( प्रगाथः ) पवमानः सोमः ।

४२. पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥ १ ॥

४३. यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥२॥
धा. १०. उ. १. स्व. १. प. ॥ १६ ॥

---

वरिवोधातमः । वरिवः । धातमः । भुवः । मꣳहिष्ठः । वृत्रहन्तमः । वृत्र । हन्तमः ।
पर्षि । राधः । मघोनाम् ॥

१६. पवस्व । मधुमत्तमः । इन्द्राय । सोम । क्रतुवित्तमः । क्रतु । वित्त-
मः । मदः । महि । द्युक्षतमः । द्यु । क्षतमः । मदः ॥ यस्य । ते । पीत्वा । वृषभः ।
वृषायते । अस्य । पीत्वा । स्वर्विदः । स्वः । विदः । सः । सुप्रकेतः । सु । प्रकेतः ।
अभि । अक्रमीत् । इषः । अच्छ । वाजम् । न । एतशः ॥

---

२३४दात् ॥ श्रीः ॥ वरिवोधात । मोऽ२भुवाः ॥ मꣳहाऽ२इ । ष्ठोऽ२३-
वा । त्रहाऽ२न्तामाः ॥ पाऽ२३र्षी ॥ राऽ२धो । माऽ२३ । हाउवाऽ३ ॥
घोऽ२३४नाम् ॥
दी. ६. उत्. ५. मा. १६. कृ ॥ ८ ॥

९. सफम । देवाः । ककुप् । पवमानः सोमः ।

पवस्वाऽ३मधु । मत्ताऽ२३४माः ॥ इन्द्रायसोमाऽ२ । क्रतुवाइ-
त्ताऽ३मोऽ३ । माऽ३२३४दाः ॥ महाइ ॥ द्युक्षताऽ३मोऽ३ । माऽ३४५-
दोऽ६"हाइ ॥ श्रीः ॥ महिद्यूऽ३क्षत । मोमाऽ२३४दाः ॥ यस्यतेपाइ-
त्वाऽ२ । वृषभोवाऽ३र्षोऽ३ । याऽ३२३४ताइ ॥ अस्या । पीत्वासुऽ३-
वाऽ३ः । वाऽ३४५इदोऽ६"हाइ ॥ श्रीः ॥ अस्यपीऽ३त्वासु । वर्वाऽ२३४-



१७. अग्निश्चाक्षुषः । उष्णिक् । पवमानः सोमः ।

४४. इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दवः स्वर्विदः ॥१॥

४५. अयं भराय सानसिरिन्द्राय पवते सुतः ।
सोमो जैत्रस्य चेतति यथा विदे ॥२॥

४६. अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
वज्रं च वृषणं भरत्समप्सुजित् ॥३॥
धा. २१. उ. १. स्व. ३. कि ॥ १७ ॥

---

१७. इन्द्रम् । अच्छ । सुताः । इमे । वृषणम् । यन्तु । हरयः । श्रुष्टे ।
जातासः । इन्दवः । स्वर्विदः । स्वः । विदः ॥ अयम् । भराय । सानसिः । इन्द्राय ।
पवते । सुतः । सोमः । जैत्रस्य । चेतति । यथा । विदे ॥ अस्य । इत् । इन्द्रः ।
मदेषु । आ । ग्राभम् । गृभ्णाति । सानसिम् । वज्रम् । च । वृषणम् । भरत् ।
सम् । अप्सुजित् । अप्सु । जित् ॥

---

इदाः ॥ सप्रकाइतोऽ२ । अभियाकाऽ३मोऽ३त् । आऽ२२३४इषाः ॥
अच्छा ॥ वाजान्नाऽ२एऽ३ । ताऽ३४५शोऽ६"हाइ ॥
दी. ५. उत्. १२. मा. १६. फो. ॥ ९ ॥

१०. पौष्कलम् ॥ प्रजापतिः । उष्णिक् । पवमानः सोमः ।

इन्द्रमाऽ३च्छसु । ताईऽ२३४माइ ॥ वृषाणंया । तुहाराऽ२३४याः ।
श्रुष्टाइ"जाता । सईऽ२न्दाऽ२३४५वाऽ६५६ः ॥ सुवर्विदाऽ२३४५ः । श्रीः ॥
अयंभाऽ३राय । सानाऽ२३४साइः ॥ इन्द्रायपा । वाताइसूऽ२३४ताः ॥
सोमो"जैत्रा । स्यचाऽ२इताऽ२३४५ताऽ६५६इ ॥ यथाविदेऽ२३४५ ॥
श्रीः ॥ अस्येदीऽ३न्द्रोम । दाइषूऽ२३४वा ॥ ग्राभंगृभ्णा । ताइसाना-
ऽ२३४साइम् ॥ वज्रा"श्चवा । षणाऽ२भ्भाऽ२३४५राऽ६५६त् ॥ समप्सुजी-
ऽ२३४५त् ॥
दी. ६. उत्. १२. मा. १६. थो ॥ १० ॥

१८. अन्धीगुः श्यावाश्विः । अनुष्टुब्गायत्र्यौ । पवमानः सोमः ।

४७. पुरोजिती वो अन्धसस्सुताय मादयित्नवे ।
अपश्वानंश्नथिष्टन सखायो दीर्घजिह्व्यम् ॥१॥

४८. यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥२॥

४९. तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥३॥

धा. १८. उ. १. स्व. ३. टि. ॥१८॥

---

१८. पुरोजिती । पुरः । जिती । वः । अन्धसः । सुताय । मादयित्नवे । अप । श्वानम् । श्नथिष्टन । श्नथिष्ट । न । सखायः । स । खायः । दीर्घजिह्व्यम् । दीर्घ । जिह्व्यम् ॥ यः । धारया । पावकया । परिप्रस्यन्दते । परि । प्रस्यन्दते । सुतः । इन्दुः । अश्वः । न । कृत्व्यः ॥ तम् । दुरोषम् । अभि । नरः । सोमम् । विश्वाच्या । धिया । यज्ञाय । सन्तु । अद्रयः । अ । द्रयः ॥

---

११. श्यावाश्वम् ॥ श्यावाश्वः । अनुष्टुप् । पवमानः सोमः ।

पुरोऽ३१ । जीऽ३ती । वोअ । धाऽ३सः । एहिया ॥ सु । तायमादा । यि । त्नवाऽ२इ । एहियाऽ२ । अपश्वानाऽ२श्नाऽ३थीऽ३ ॥ ष्टाऽ२३४ना ॥ ऐहाऽ२इ । एहियाऽ२ । सखायोदाइर्घाऽ३जीऽ३ । ह्वाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ सखाऽ३१ । योऽ३दी । घजि । ह्वाऽ३-यम् । एहिया ॥ यो । धारयापा । व । कयाऽ२ । एहियाऽ२ । परि-प्रस्यान्दाऽ३ताऽ३इ ॥ सुऽ२३४ताः ॥ ऐहाऽ२इ । एहियाऽ२ । इन्दु-रश्वोनाऽ३काऽ३ । त्वाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ इन्दूऽ३१ः । आऽ३-श्वो । नकृ । त्वाऽ३यः । एहिया ॥ ताम् । दुरोषमा । भी । नराऽ२ः । एहियाऽ२ । सोमंविश्वाचीऽ३याऽ३ ॥ धाऽ२३४या ॥ ऐहाऽ२इ । एहियाऽ२ । यज्ञायसान्तुऽ३वाऽ३ । द्राऽ३४५योऽ६"हाइ ॥

दी. २१. उत्. ९. मा. १७. पे ॥११॥



१९. कविर्भार्गवः । जगती । पवमानः सोमः ।

५०. अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥१॥

५१. ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
दधाति पुत्रः पित्रोरपीच्या ३ नाम तृतीयमधि रोचनं दिवः ॥२॥

---

१९. अभि । प्रियाणि । पवते । चनोहितः । चनः । हितः । नामानि । यह्वः । अधि । येषु । वर्धते । आ । सूर्यस्य । बृहतः । बृहन् । अधि । रथम् । विष्वञ्चम् । वि । स्वञ्चम् । अरुहत् । विचक्षणः । वि । चक्षणः ॥ ऋतस्य । जिह्वा । पवते । मधु । प्रियम् । वक्ता । पतिः । धियः । अस्याः । अदाभ्यः ।

---

१२. आन्धीगवम् ॥ आन्धीगुः । अनुष्टुप् । पवमानः सोमः ।

पुरोजितीवोऽ१न्धासाः ॥ सुताय । मादाऽ२३या । हुम्माऽ२१२ । त्नवेअपश्वानंश्नथिष्टनाऽ२३४५ ॥ साखाऽ३उवा ॥ योऽ२दी । घाऽ२३-जी । ह्वियाम् । औऽ२३होवा ॥ श्रीः ॥ सखायोदीर्घजाऽ१ह्वायाम् ॥ योधार । यापाऽ२३वा । हुम्माऽ२१२ । कयापरिप्रस्यन्दतेसुताऽ१ः ॥ आइन्दाऽ३उवा ॥ आऽ२श्वो । नाऽ२३का । त्विया । औऽ३होवा ॥ श्रीः ॥ इन्दुरश्वोनकाऽ१त्वीयाः ॥ तंदुरो । षमाऽ२३भी । हुम्माऽ२१२ । नरस्सोमं विश्वाचियाधियाऽ१ ॥ याज्ञाऽ३उवा ॥ याऽ२सं । तूऽ२३वा । द्रया । औऽ३होवा । होऽ५इ ॥ डा ॥

दी. १९. उत्. ७. मा. १२. धा. ॥१२॥

१३. काण्वम् ॥ कुत्सः । जगती । पवमानः सोमः ।

अभ्योवा ॥ प्रियाणिपवताइ । चनोहाइताऽ२ः । नामानियह्वो-अधियाइ । षुवर्धाताऽ२इ । आसूर्यस्यबृहतो । बृहन्नाधीऽ२३ ॥ राथा-ऽ३म्वाइष्वा ॥ चमरूहाऽ२३त् । वाइचाऽ२क्षाऽ५"णाऽ६५६ः ॥ श्रीः ॥

५२. अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥३॥
धा. २६. उ. ३. स्व. ३. दि. ॥ १९॥

पञ्चमः खण्डः ।

२०. शंयुर्बार्हस्पत्यः (तृणपाणिः) बृहतीसतोबृहत्यौ ॥ अग्निः ।

५३. यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥१॥

---

अ । दाभ्यः । दधाति । पुत्रः । पुत् । त्रः । पित्रोः । अपीच्यम् । नाम । तृतीयम् ।
अधि । रोचनम् । दिवः ॥ अव । द्युतानः । कलशान् । अचिक्रदत् । नृभिः ।
येमानः । कोशे । आ । हिरण्यये । अभि । ऋतस्य । दोहनाः । अनूषत ।
अधि । त्रिपृष्ठः । त्रि । पृष्ठः । उषसः । वि । राजसि ॥
२०. यज्ञायज्ञा । यज्ञा । यज्ञा । वः । अग्नये । गिरागिरा । गिरा ।
गिरा । च । दक्षसे । प्रप्र । प्र । प्र । वयम् । अमृतम् । अ । मृतम् । जात-
वेदसम् । जात । वेदसम् । प्रियम् । मित्रम् । मि । त्रम् । न । शꣳसिषम् ॥

---

ऋतीवा ॥ स्वजिह्वाप्वताइ । मधुप्रव्याऽ२म् । वक्तापतिर्धियोअस्याः ।
अदाभ्यायाऽ२ः । दधातिपुत्त्रःपित्रोः । अपीचायाऽ२३म् । नामाऽ३तार्ता ॥
यमधाइरोऽ२३ । चानाऽ३न्दाऽ५इ"वा६५६ः ॥ श्रीः ॥ अवोवा । द्युतानः-
कलशꣳ । अचिक्रादाऽ२त् । नृभिर्येमाणःकोशआ । हिरण्यायाऽ२इ ।
अभीऋतस्यदोहनाः । अनूषाताऽ२३ ॥ आवोऽ३त्राइपा ॥ ष्टउषासोऽ२३ ।
वाइराऽ३ जाऽ५"साऽ६५६इ ॥ दी. २०. उ. १६. मा २६. पो. ॥ १३॥

१४. यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । ककुबुत्तरा बृहती । अग्निः ॥

यज्ञाऽ५य । ज्ञाऽ३वोऽ३ग्नायाइ ॥ आइराइरा । चाऽ२दाक्षाऽ३-
साइ । प्रप्रोऽ२वयममृतम् । जाताऽ२३वा । हुम्माइ ॥ दाऽ३२साम् ॥
प्रायंमित्रꣳसुराऽ२ꣳसिषाउ ॥ श्रीः ॥ प्रायाम् ॥ माइत्राम् । चुऽ३शाꣳसी-

५४. ऊर्जो नपातꣳस हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥२॥
धा. १९. उ. न. स्व. ५. मु. ॥ २०॥

२१. भरद्वाजो बार्हस्पत्यः । गायत्री । अग्निः ।

५५. एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥१॥
५६. यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥२॥
५७. न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते । अथा दुवो वनवसे ॥३॥
धा. ७. उ. न. स्व. ४. वी. ॥ २१॥

---

ऊर्जः । नपातम् । सः । हिन । अयम् । अस्मयुः । दाशेम । हव्यदातये । हव्य ।
दातये । भुवत् । वाजेषु । अविता । भुवत् । वृधे । उत । त्राता । तनूनाम् ॥
२१. आ । इहि । ऊ । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः ।
गिरः । एभिः । वर्धासे । इन्दुभिः । यत्र । क । च । ते । मनः । दक्षम् । दधसे ।

---

ऽ३याम् ॥ ऊर्जोनपाऽ२तꣳसहि । नायाऽ२३मा । हुम्माइ ॥ स्माऽ३२-
युः ॥ दाशेमहव्यदाऽ२तयाउ ॥ श्रीः ॥ दाशे ॥ माद्वा । व्याऽ३दाताऽ३-
याइ । भुवद्वाजेऽ२ष्ववि । ताभूऽ२३वात् । हुम्माइ ॥ वाऽ२र्द्धाइ ।
उतत्रातातनूऽ२नाऽ२उ ॥ वाऽ२४५ ॥
दी १०. उ. १. मा. २०. पौ. ॥ १४॥

१५. साकमश्वम् ॥ साकमश्वः । गायत्री । अग्निः ॥

एह्यूषूऽ३ब्रवाणाऽ६इताइ ॥ अग्नइत्थेतरागाऽ२इराः । एभाऽ२र्वर्धा ॥
सयाऽ२३हाऽ२४३इ ॥ इन्दूऽ२३४वोऽ६"हाइ ॥ श्रीः ॥ यत्रकूऽ३वचतेमाऽ६-
नाः ॥ दक्षंदधसउत्ताऽ२राम् । तत्राऽ२योनाइम् ॥ कृणाऽ२३हाऽ२४३इ ॥
वोऽ२३४सोऽ६"हाइ ॥ श्रीः ॥ नहिताऽ३इपूर्तमक्षाऽ६इपात् ॥ भुवन्नेमा-

२२. सौभरिः काण्वः । ककुप्सतोबृहत्यौ । इन्द्रः ।

५८. वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
वज्रिन्चित्रꣳ हवामहे ॥१॥

५९. उपत्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥२॥

धा. १२. उ. १. स्व. १. च. ॥२२॥

उत्तरम् । नञ । योनिम् । कृणवसे ॥ न । हि । ते । पूर्तम् । अक्षिपत् । अक्षि । पत् । भुवत् । नेमानाम् । पते । अथ । दुवः । वनवसे ॥

२२. वयम् । उ । त्वाम् । अपूर्व्य । अ । पूर्व्य । स्थूरम् । न । कत् । चित् । भरन्तः । अवस्यवः । वज्रिन् । चित्रम् । हवामहे । उप । त्वा । कर्मन् । ऊतये । सः । नः । युवा । उग्रः । चक्राम । यः । धृषत् । त्वाम् । इत् । हि । अवितारम् । ववृमहे । सखायः । स । खायः । इन्द्र । सानसिम् ॥

नाम्पाऽ२ताइ । अथाऽ२दुवाः ॥ वनाऽ२३हाऽ३४३इ ॥ वाऽ२३४सो-ऽ६"हाइ ॥

दी. १२. उत्. १ मा. २२. चा. ॥१५॥

१६. सौभरम् ॥ सौभरिः । ककुप् । इन्द्रः ।

वयाऽ३मूऽ३त्वामपूर्वियोवा ॥ स्थूरन्नकच्चिद्भराऽ२न्तोअवाऽ२३ । हो । स्याऽ२३४वाः ॥ वज्रिञ्चित्रम् । हवाऽ३हाऽ३इ ॥ माऽ२हाऽ२३४-औहोवा ॥ श्रीः ॥ वज्राऽ३इश्चाऽ३इत्रꣳ हवामहोवा ॥ उपत्वाकर्मन्नूताऽ२-याइसनाऽ२३ः । होइ । यूऽ२३४वा ॥ उग्रश्चक्रा ॥ मयोऽ३हाऽ३इ ॥ घाऽ२षोऽ२३४औहोवा ॥ श्रीः ॥ उग्राऽ३श्चाऽ३क्रामयोधृषोवा ॥ त्वामिध्य-विताऽ२राम्ववाऽ२३ । हो । माऽ२३४हाइ ॥ सखायइ । द्रसाऽ३हाऽ३इ ॥ नाऽ२साऽ२३४औहोवा ॥ ऊऽ२३४५ ॥

दी. १५. उत्. १. मा. १६ पू. ॥१६॥

२३. नृमेध आङ्गिरसः । ककुबुष्णिक्पुरउष्णिहः । इन्द्रः ।

६०. अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मन्त उदभिः ॥१॥

६१. वार्णत्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि ।
वावृध्वाꣳसं चिदद्रिवो दिवेदिवे ॥२॥

६२. युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा ।
इन्द्रवाहा स्वर्विदा ॥३॥

धा. १७. उ. न. स्व. ३. पि. ॥२३॥

षष्ठः खण्डः ॥

इति प्रथमोऽध्यायः ।

( इति प्रथमप्रपाठके प्रथमोऽर्धः )

२३. अध । हि । इन्द्र । गिर्वणः । गिः । वनः । उप । त्वा । कामे । ईमहे । ससृग्महे । उदा । इव । ग्मन्तः । उदभिः ॥ वाः । न । त्वा । यव्याभिः । वर्द्धन्ति । शूर । ब्रह्माणि । वावृध्वाꣳसम् । चित् । अद्रिवः । अ । द्रिवः । दिवेदिवे । दिवे । दिवे ॥ युञ्जन्ति । हरीइति । इषिरस्य । गाथया । उरौ । रथे । उरुयुगे । उरु । युगे ।

१७. नार्मेधम् ॥ नृमेधः । ककुबुष्णिक्पुरउष्णिहः । इन्द्रः ।

अधाहीन्द्रगिर्वणाऽ३ए ॥ उपात्वाऽ३का । मईऽ२माऽ२३४हाइ ॥ ससृग्माहा । औहाहोऽ२३४वा ॥ ऊऽ२३४दहाइ ॥ वग्मान्ताऊ ॥ औहो-होऽ२३४वा ॥ दाऽ२३४भीः । एहियाऽ६हा ॥ श्रीः ॥ वार्णत्वायव्याभी-ऽ३रे ॥ वर्धान्तीऽ३शू । रब्राऽ२ह्माऽ२३४णी ॥ वावृध्वाꣳसा । औहो-होऽ२३४वा ॥ चाऽ२३४दद्रिवो ॥ द्रिवोदाइवा । औहाहोऽ२३४वा ॥ दाऽ२३४इवाइ । एहियाऽ६हा ॥ श्रीः ॥ युञ्जन्तिहरीइषिराऽ३ए ॥ स्य ।

३१२. अभि गावो अधन्विपुरापो न प्रवता यतीः । पुनाना इन्द्रमाशत ॥२॥

३१३. प्र पवमान धन्वसि सोमेन्द्राय मादनः । नृभिर्यतो विनीयसे ॥३॥

३१४. इन्दो यदद्रिभिस्सुतꣳपवित्रं परिदीयसे । अरमिन्द्रस्य धाम्ने ॥४॥

३१५. त्वꣳसोम नृमादनꣳपवस्व चर्षणीधृतिः । सस्निर्यो अनुमाद्यः ॥५॥

३१६. पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः । शुचिꣳपावको अद्भुतः ॥६॥

३१७. शुचिꣳपावक उच्यते सोमस्सुतस्स मधुमान् । देवावीरघशꣳसहा ॥७॥

धा. ४१. उ. न. स्व. ८. हे. ॥३॥

प्रथमः खण्डः ॥

१०९. असितः काश्यपो देवलो वा । गायत्री । पवमानः सोमः ॥

३१८. प्र कविर्देववीतयेऽव्या वारेभिरव्यत । साह्वान्विश्वा अभि स्पृधः ॥१॥

३१९. स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति ।

पवमानस्सहस्रिणम् ॥२॥

---

अप्सु । मृज्यते ॥ अभि । गावः । अधन्विपुः । आपः । न । प्रवता । यतीः । पुनानाः । इन्द्रम् । आशत ॥ प्र । पवमान । धन्वसि । सोम । इन्द्राय । मादनः । नृभिः । यतः । वि । नीयसे ॥ इन्दो । यत् । अद्रिभिः । अ । द्रिभिः । सुतः । पवित्रम् । परिदीयसे । परि । दीयसे । अरम् । इन्द्रस्य । धाम्ने ॥ त्वम् । सोम । नृमादनः । नृ । मादनः । पवस्व । चर्षणीधृतिः । चर्षणि । धृतिः । सस्निः । यः । अनुमाद्यः । अनु । माद्यः ॥ पवस्व । वृत्रहन्तमः । वृत्र । हन्तमः । उक्थेभिः । अनुमाद्यः । अनु । माद्यः । शुचिः । पावकः । अद्भुतः । अत् । भुतः । शुचिः । पावकः । उच्यते । सोमः । सुतः । सः । मधुमान् । देवावीः । देव । अवीः । अघशꣳसहा । अघशꣳस । हा ॥

१०९. प्र । कविः । देववीतये । देव । वीतये । अव्याः । वारेभिः ।

[illegible]



३२०. परि विश्वानि चेतसा मृज्यसे पवसे मती । स नस्सोम श्रवो विदः ॥३॥

३२१. अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवꣳरयिम् । इषꣳस्तोतृभ्य आ भर ॥४॥

३२२. त्वꣳराजेव सुव्रतो गिरस्सोमाविवेशिथ । पुनानो वह्ने अद्भुत ॥५॥

३२३. स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदति ॥६॥

३२४. क्रीडुर्मखो न मꣳहयुꣳपवित्रꣳसोम गच्छसि ।

दधस्स्तोत्रे सुवीर्यम् ॥७॥

धा. २१. उ. १. स्व. ९. को. ॥४॥

११०. अवत्सारः काश्यपः । गायत्री । पवमानः सोमः ॥

३२५. यवयवं नो अन्धसा पुष्टंपुष्टं परि स्रव । विश्वा च सोम सौभगा ॥१॥

३२६. इन्दो यथा तव स्तवो यथा ते जातमन्धसः ।

नि बर्हिषि प्रिये सदः ॥२॥

---

आ । वाजम् । गोमन्तम् । इन्वति । पवमानः । सहस्रिणम् ॥ परि । विश्वानि । चेतसा । मृज्यसे । पवसे । मती । सः । नः । सोम । श्रवः । विदः ॥ अभि । अर्ष । बृहत् । यशः । मघवद्भ्यः । ध्रुवम् । रयिम् । इषम् । स्तोतृभ्यः । आ । भर ॥ त्वम् ॥ राजा । इव । सुव्रतः । सु । व्रतः । गिरः । सोम । आ । विवेशिथ । पुनानः । वह्ने । अद्भुत । अत् । भुत ॥ सः । वह्निः । अप्सु । दुष्टरः । दुः । तरः । मृज्यमानः । गभस्त्योः । सोमः । चमूषु । सीदति ॥ क्रीडुः । मखः । न । मꣳहयुः । पवित्रम् । सोम । गच्छसि । दधत् । स्तोत्रे । सुवीर्यम् । सु । वीर्यम् ॥

११०. यवंयवम् । यवम् । यवम् । नः । अन्धसा । पुष्टंपुष्टम् । पुष्टम् । पुष्टम् ॥ परि । स्रव । विश्वा । च । सोम । सौभगा । सौ । भगा । इन्दो । यथा । तव । स्तवः । यथा । ते । जातम् । अन्धसः । नि । बर्हिषि । प्रिये ।

३२७. उत नो गोविदश्ववित्पवस्व सोमान्धसा । मक्षूतमेभिरहभिः ॥३॥

३२८. यो जिनाति न जीयते हन्ति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥४॥

धा. ११. उ. न. स्व. ३. हि. ॥५॥

१११. जमदग्निर्भार्गवः । गायत्री । पवमानः सोमः ॥

३२९. यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये । ताभिः पवित्रमासदः ॥१॥

३३०. सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया । सीदन्नृतस्य योनिमा ॥२॥

३३१. त्वꣳसोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः । वरिवोविद्घृतं पयः ॥३॥

धा. ११. उ. न. स्व. ३. हि. ॥६॥

द्वितीयः खण्डः ॥

११२. अरुणो वैतहव्यः । जगती । अग्निः ॥

३३२. तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसामिवेतयः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥१॥

---

सदः ॥ उत । नः । गोवित् । गो । वित् । अश्ववित् । अश्व । वित् । पवस्व । सोम । अन्धसा । मक्षुतमेभिः । अहभिः । अ । हभिः ॥ यः । जिनाति । न । जीयते । हन्ति । शत्रुम् । अभीत्य । अभि । इत्य । सः । पवस्व । सहस्रजित् । सहस्र । जित् ॥

१११. याः । ते । धाराः । मधुश्चुतः । मधु । श्चुतः । असृग्रम् । इन्दो । ऊतये । ताभिः । पवित्रम् । आ । असदः ॥ सः । अर्ष । इन्द्राय । पीतये । तिरः । वाराणि । अव्यया । सीदन् । ऋतस्य । योनिम् । आ ॥ त्वम् । सोम । परि । स्रव । स्वादिष्ठः । अङ्गिरोभ्यः । वरिवोवित् । वरिवः । वित् । घृतम् । पयः ॥

११२. तव । श्रियः । वर्ष्यस्य । इव । विद्युतः । वि । द्युतः । अग्नेः । चिकित्रे । उषसाम् । इव । एतयः । आ । इतयः । यत् । ओषधीः । ओष ।



३३३. वातोपजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतन्ते रथ्यो३यथा पृथक्शर्धाꣳस्यग्ने अजरस्य धक्षतः ॥२॥

३३४. मेधाकारं विदथस्य प्रसाधनमग्निꣳहोतारं परिभूतरं मतिम् ।
त्वामर्भस्य हविषस्समानमित्त्वां महो वृणते नान्यं त्वत् ॥३॥

धा. ३५. उ. ३. स्व. ५. बु. ॥७॥

११३. उरुचक्रिरात्रेयः । गायत्री । मित्रावरुणौ ।

३३५. पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वꣳसि वाꣳसुमतिम् ॥१॥

३३६. ता वाꣳसम्यगद्रुह्वाणेषमश्याम धाम च । वयं वां मित्रा स्याम ॥२॥

३३७. पातं नो मित्रा पायुभिरुत त्रायेथाꣳसुत्रात्रा ।
साह्याम दस्यून्तनूभिः ॥३॥

धा. १२. उ. न. स्व. १. ध. ॥८॥

---

धीः । अभिसृष्टः । अभि । सृष्टः । वनानि । च । परि । स्वयम् । चिनुषे । अन्नम् । आसनि ॥ वातोपजूतः । वात । उपजूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना । वेविषत् ॥ वितिष्ठसे । वि । तिष्ठसे । आ । ते । यतन्ते । रथ्यः । यथा । पृथक् । शर्धाꣳसि । अग्ने । अजरस्य । अ । जरस्य । धक्षतः ॥ मेधाकारम् । मेधा । कारम् । विदथस्य । प्रसाधनम् । प्र । साधनम् । अग्निम् । होतारम् । परिभूतरम् । परि । भूतरम् । मतिम् । त्वाम् । अर्भस्य । हविषः । समानम् । सम् । आनम् । इत् । त्वाम् । महः । वृणते । न । अन्यम् । अन्यम् । त्वत् ॥

११३. पुरूरुणा । पुरु । उरुणा । चित् । हि । अस्ति । अवः । नूनम् । वाम् । वरुण । मित्र । मि । त्र । वꣳसि । वाम् । सुमतिम् । सु । मतिम् । ता । वाम् । सम्यक् । अद्रुह्वाणा । अ । द्रुह्वाणा । इषम् । अश्याम । धाम । च । वयम् । वाम् । मित्रा । मि । त्रा । स्याम ॥ पातम् । नः । मित्रा । मि । त्रा ।

११४. कुरुसुतिः काण्वः । गायत्री । इन्द्रः ।

३३८. उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥१॥

३३९. अनु त्वा रोदसी उभे स्पर्धमानमददेताम् । इन्द्र यद्दस्युहाभवः ॥२॥

३४०. वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् । इन्द्रात्परितन्वम्ममे ॥३॥

धा. ११. उ. न. स्व. ४. ही. ॥९॥

११५. भरद्वाजो बार्हस्पत्यः । गायत्री । इन्द्राग्नी ॥

३४१. इन्द्राग्नी युवामिमे३भिस्तोमा अनूषत । पिबत२शम्भुवा सुतम् ॥१॥

३४२. या वा२सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
इन्द्राग्नी ताभिरा गतम् ॥२॥

३४३. ताभिरागच्छतं नरोपेद२सवन२सुतम् । इन्द्राग्नी सोमपीतये ॥३॥

धा. ११. उ. न. स्व. २. हा. ॥१०॥

तृतीयः खण्डः ॥

---

पायुभिः । उत । त्रायेथाम् । सुत्रात्रा । सु । त्रात्रा । साह्याम । दस्यून् । तनूभिः ॥

११४. उत्तिष्ठन् । उत् । तिष्ठन् । ओजसा । सह । पीत्वा । शिप्रे इति । अवेपयः । सोमम् । इन्द्र । चमू इति । सुतम् ॥ अनु । त्वा । रोदसी इति । उभे इति । स्पर्धमानम् । अददेताम् । इन्द्र । यत् । दस्युहा । दस्यु । हा । अभवः । वाचम् । अष्टापदीम् । अष्ट । पदीम् । अहम् । नवस्रक्तिम् । नव । स्रक्तिम् । ऋतावृधम् । ऋत । वृधम् । इन्द्रात् । परि । तन्वम् । ममे ॥

११५ इन्द्राग्नी । इन्द्र । अग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत । पिबतम् । शंभुवा । शम् । भुवा । सुतम् ॥ याः । वाम् । सन्ति । पुरुस्पृहः । पुरु । स्पृहः । नियुतः । नि । युतः । दाशुषे । नरा । इन्द्राग्नी । इन्द्र । अग्नी इति । ताभिः । आ । गतम् ॥ ताभिः । आ । गच्छतम् । नरा । उप ।



११६. भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ॥ गायत्री । पवमानः सोमः ।

३४४. अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन्योनौ वनेष्वा ॥१॥

३४५. अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षन्तु विष्णवे ॥२॥

३४६. इषं तोकाय नो दधदस्मभ्य२सोम विश्वतः । आ पवस्व सहस्रिणम् ॥३॥

धा. १४. उ. न. स्व. २. ला. ॥११॥

---

इदम् । सवनम् । सुतम् । इन्द्राग्नी । इन्द्र । अग्नी इति । सोमपीतये । सोम । पीतये ॥

११६. अर्ष । सोम । द्युमत्तमः । अभि । द्रोणानि । रोरुवत् । सीदन् । योनौ । वनेषु । आ ॥ अप्साः । इन्द्राय । वायवे । वरुणाय । मरुद्भ्यः । सोमाः । अर्षन्तु । विष्णवे ॥ इषम् । तोकाय । नः । दधत् । अस्मभ्यम् । सोम । विश्वतः । आ । पवस्व । सहस्रिणम् ॥

---

२३. शाकलम् ॥ शकलः । गायत्री । पवमानस्सोमः ।

अर्षासोमाऽ२द्युमत्तमाः ॥ अभिद्रोणानिरोरूऽ२३वात् ॥ साइ-दाऽ२न् ॥ योनौवनाऽ२३इ । हुम् । पूऽ२३४५वोऽ६"हाइ ॥ श्रीः ॥ अप्सा-इन्द्राऽ२यवायवाइ ॥ वरुणायमरुद्भ्याऽ२३याः ॥ सोमाऽ२ः ॥ आर्षन्तुवा-ऽ२३इ । हुम् । ष्णाऽ२३४५वोऽ६"हाइ ॥ श्रीः ॥ इषन्तोकाऽ२यनोदधाव ॥ अस्मभ्य२सोमविश्वाऽ२३ताः ॥ आपाऽ२ ॥ वास्वसहाऽ२३ । हुम् । स्राऽ२३४५इणोऽ६"हाइ ॥ दी. १२. उत्. २. मा. १९. धो. ॥२३॥

२४. वार्शम् । वृशः । गायत्री । पवमानस्सोमः ।

अर्षासोमा ॥ द्युमात्ताऽ२माः । अभिद्रो । णा । निरोऽ२रू-ऽ२३४वात् ॥ साइदन्योनाऽ२३उ । ईऽ२षा ॥ वने । पूऽ२वाऽ२३४-औहोवा ॥ श्रीः ॥ अप्साइन्द्रा ॥ यवायाऽ२वाइ । वरुणा । या ।

११७. सप्तर्षयः। बृहती। पवमानः सोमः।

३४७. सोम उ ष्वाणस्सोतृभिरधिष्णुभिरवीनाम्।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥१॥

३४८. अनूपे गोमान्गोभिरक्षास्सोमो दुग्धाभिरक्षाः।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥२॥

धा. १५. उ. २. स्व. १. फ. ॥१२॥

---

११७. सोमः। उ। स्वानः। सोतृभिः। अधि। स्नुभिः। अवीनाम्। अश्वया। इव। हरिता। याति। धारया। मन्द्रया। याति। धारया॥ अनूपे। गोमान्। गोभिः। अक्षारिति। सोमः। दुग्धाभिः। अक्षारिति। समुद्रम्। सम्। उद्रम्। न। संवरणानि। सम्। वरणानि। अग्मन्। मन्दी। मदाय। तोशते॥

---

मरूऽ२द्भ्याऽ२३४याः॥ सोमाअर्षाऽ३। ईऽ३या॥ तुवि। प्वाऽ२वा-ऽ२३४औहोवा॥ श्रीः॥ इषन्तोका॥ धनोदाऽ३धात्। अस्मभ्यम्। सो। मवाऽ२इश्वाऽ२३४ताः॥ आपवस्वाऽ३। ईऽ३या॥ सह। स्राऽ२इणा-ऽ२३४औहोवा॥ ऊऽ३२३४पा॥ दी. १४. उत्. ७. मा. १६. धू. ॥८४॥

२५. मानवोत्तरम्॥ मनुः। बृहती। पवमानस्सोमः।

होवाइ। सोमउष्वाणस्सोतृभिः। होवाइ। आधिष्णुभिरवीनाम्। आश्वयेव। हारितायाऽ३१। तिधाऽ२राऽ२३४या॥ मन्द्रायाऽ२३याऽ३॥ ताऽ२इधाऽ२३४औहोवा॥ राऽ२३४या॥श्रीः॥ होवाइ। मन्द्रयायाति-धारया। होवाइ॥ मान्द्रयायातिधारया। आनूपे। गोमान्गोऽ३१। भाऽ२इराऽ२३४क्षाः॥ सोमोदूऽ२३ग्धाऽ३॥ भाऽ२इराऽ२३४औहोवा॥ आऽ२३४क्षाः॥ श्रीः॥ होवाइ। सोमोदुग्धाभिरक्षाः। होवाइ॥ सोमो-



दुग्धाभिरक्षाः। सामुद्रन्न। सांवरणाऽ३१। नियाऽ२आऽ२३४ग्मान्॥ मन्दाइमाऽ२३दाऽ३॥ याऽ२तोऽ२३४औहोवा॥ शाऽ२३४ते॥

दी. ३२. उत्. ४. मा. २२. धा. ॥८५॥

२६. आनूपं वाष्र्यृषम्॥ आनूपः। बृहती। पवमानस्सोमः।

सोमास्सोमाः॥ उष्वाणाऽ३स्सोतृऽ१भीऽ२ः। आधिष्णुभिः। आवीऽ१इनाऽ२म्। आश्वाऽ२येवाऽ२। हरितायातिधाराऽ२३या॥ मन्द्रा-याऽ३याऽ३॥ ताऽ२३इधाऽ३। राऽ३४५योऽ६"हाइ॥श्रीः॥ मन्द्रामन्द्रा॥ यायातिऽ३धाराऽ१याऽ२। मान्द्रयाया। तिधाराऽ१याऽ२। आनूऽ२पेगोऽ२। मान्गोभिराऽ२३क्षाः॥ सोमोदूऽ२ग्धाऽ३। भाऽ२३इराऽ३। क्षाऽ३४५-षोऽ६"हाइ॥ श्रीः॥ सोमास्सोमाः॥ दुग्धाऽ३भाइराऽ१क्षाऽ२ः। सोमो-दुग्धा। भाइराऽ१क्षाऽ२ः। सामूऽ२द्रान्नाऽ२। संवरणानियाऽ२३ग्मान्॥ मन्दाइमाऽ३दाऽ३॥ याऽ२३तोऽ३। शाऽ३४५तोऽ६"हाइ॥

दी. १९. उत्. १. मा. १८. तै. ॥८६॥

७. वाभ्रम्। बभ्रुः। बृहती। पवमानस्सोमः।

सोमउष्वाणस्सो। हाऽ३हाऽ३इ। तृऽ२३४। भिरधिगोवा॥ अधाहोऽ२इ। ष्णुभाइहोऽ२। आवीऽ१इनाऽ२म्। आश्वयेव। हराइताया। तिधाउवाऽ३। ऊऽ३४पा। रयाऽ२॥ मान्द्राऽ२याऽयाऽ२॥ तिधा। राऽ२याऽ२३४औहोवा॥श्रीः॥ मन्द्रयायातिधा। हाऽ३हाऽ३इ। राऽ२३४। यारयोवा॥ मन्द्राहोऽ२इ। यायाहोऽ२। ताइधाऽ१रायाऽ२। आनूपेगो। मान्गो। भिराउवाऽ३। ऊऽ३४पा। अक्षाऽ२ः॥ सोमोऽ२दुग्धाऽ२॥ भिराऽ२। क्षाऽ२३४औहोवा॥श्रीः॥ सोमोदुग्धाभिरा। हाऽ३हाऽ३इ। आऽ२३४। आःक्षियसोवा॥ सोमोहोऽ२इ। दुग्धाहोऽ२। भाइराऽ१-

११८. असितः काश्यपो देवलो वा । गायत्री । पवमानः सोमः ।

३४९. यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नःपुनान आ भर ॥१॥

३५०. वृषा पुनान आयूꣳषि स्तनयन्नधि बर्हिषि । हरिस्सन्योनिमासदः ॥२॥

---

११८. यत् । सोम । चित्रम् । उक्थ्यम् । दिव्यम् । पार्थिवम् । वसु ।

---

क्षाऽ२ः । सामुद्रन्न । संवाराणां । नियाउवाऽ३ । ऊऽ३४पा । अग्माऽ२न् ॥ मान्दीऽ२माहाऽ२ ॥ यतो । शाऽ२ताऽ२३४ओहावा ॥ ऊऽ३२३४पा ॥

दी. २६. उन्. ५. मा. २३. डि. ॥८७॥

८. अग्नेस्त्रिणिधनम् ॥ अग्निः । बृहती । पवमानस्सोमः ।

सोमउप्वा ॥ सस्तोतृऽ२३४भीः । अघाइष्णुभिराऽ३१उवाऽ२३ । वीऽ२३४नाम् ॥ आश्वावेऽ२३४वा ॥ हरितायातिघाऽ३१उवाऽ२३ । राऽ२३४या ॥ मान्द्रायाऽ२३४या ॥ तिघाऽ३१उवाऽ२३ ॥ राऽ२३४या ॥ श्रीः ॥ मन्द्रयाया ॥ ताइषाराऽ२३४या । मन्द्रयायातिघाऽ३१उवाऽ२३ । राऽ२३४या ॥ आनूपेऽ२३४गो ॥ मान्गोभिराऽ३१उवाऽ२३ । आऽ२३४-क्षाः ॥ सोमोदूऽ२३४ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३४क्षाः ॥श्रीः॥ सोमोदुग्धा ॥ भाइराऽ२३४क्षाः । सोमोदुग्धाभिराऽ३१उवाऽ२३। आऽ२३४-क्षाः ॥ सामुद्राऽ२३४क्षा ॥ संवरणानियाऽ३१उवाऽ२३ । आऽ२३४-ग्मान् ॥ मान्दीमाऽ२३४दा ॥ यतोऽ२आउवाऽ२३ ॥ शाऽ२३४ते ॥

दी. १३. उन्. ५. मा. २१. ण. ॥८८॥

९. शैशवम् ॥ शिशुः । गायत्री । पवमानस्सोमः ।

यत्सोमचित्रमुक्थायाम् ॥ दिव्यंपार्थिवंवसू ॥ तन्नःपूऽ२३४ना ॥ नआऽ३आऽ५"राऽ६५६ ॥श्रीः॥ वृषापुनानआयूꣳषी ॥ स्तनयन्नधिबर्हिषाइ ॥



३५१. युवꣳहि स्थस्स्वःपती इन्द्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥३॥

धा. १५. उ. १ स्व. ५. पु. ॥१३॥

चतुर्थः खण्डः ॥

११९. गोतमो राहूगणः । पङ्क्तिः । इन्द्रः ॥

३५२. इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः । तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥१॥

३५३. असि हि वीर सेन्योऽसि भूरि परादिदः । असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥२॥

३५४. यदुदीरत आजयो धृष्णवे धीयते धनम् । युङ्क्ष्वा मदच्युता हरी कꣳहनःकं वसौदधोऽस्माँ इन्द्र वसौ दधः ॥३॥

धा. २६. उ. २. स्व. ५. खु. ॥१४॥

---

तन् । नः । पुनानः । आ । भर ॥ वृषा । पुनानः । आयूꣳषि । स्तनयन् । अधि । बर्हिषि । हरिः । सन् । योनिम् । आ । असदः ॥ युवम् । हि । स्वः । स्वःपती । स्वऽ३रिति । पती इति । इन्द्रः । च । सोम । गोपती । गो । पती इति । ईशाना । पिप्यतम् । धियः ॥

११९. इन्द्रः । मदाय । वावृधे । शवसे । वृत्रहा । वृत्र । हा । नृभिः । तम् । इत् । महत्सु । आजिषु । ऊतिम् । अर्भे । हवामहे । सः । वाजेषु । प्र । नः । अविषत् । असि । हि । वीर । सेन्यः । असि । भूरि । परादिदः । परा । ददिः । असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥ यत् । उदीरते । उत् । ईरते । आजयः । धृष्णवे । धीयते । धनम् ।

---

हरिस्साऽ२३४न्यो ॥ निमाऽ३साऽ५"दाऽ६५६ः ॥ श्रीः ॥ युवꣳहिस्थस्सु-वःपाती ॥ इन्द्रश्चसोमगोपताइ ॥ ईशानाऽ२३४पी ॥ प्यताऽ३न्धा-ऽ५"याऽ६५६ः ॥

दी. ९. उन्. ८. मा. ७. दे. ॥८९॥

१२०. गोतमो राहूगणः । पङ्क्तिः । इन्द्रः ॥

३५५. स्वादोरित्था विषूवतो मधोःऽपिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥१॥

३५६. ता अस्य पृशनायुवस्सोमꣳश्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रꣳहिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥२॥

३५७. ता अस्य नमसा सहस्सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥३॥

धा. १५. उ. न. स्व. १. व. ॥१५॥

पञ्चमः खण्डः ॥

१२१. जमदग्निर्भार्गवः । गायत्री । पवमानः सोमः ।

३५८. असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥१॥

---

शुंदव । मदच्युता । मद । च्युता । हरी इति । कम् । इनः । कम् । वसो । दधः ।
अस्मान् । इन्द्र । वसो । दधः ॥

१२०. स्वादोः । इत्था । विषूवतः । वि । सूवतः । मधोः । पिबन्ति ।
गौर्यः । याः । इन्द्रेण । सयावरीः । स । यावरीः । वृष्णा । मदन्ति । शोभथा ।
वस्वीः । अनु । स्वराज्यम् । स्व । राज्यम् । ताः । अस्य । पृशनायुवः ।
सोमम् । श्रीणन्ति । पृश्नयः । प्रियाः । इन्द्रस्य । धेनवः । वज्रम् । हिन्वन्ति ।
सायकम् । वस्वीः । अनु । स्वराज्यम् । स्व । राज्यम् । ताः । अस्य । नमसा ।
सहः । सपर्यन्ति । प्रचेतसः । प्र । चेतसः । व्रतानि । अस्य । सश्चिरे । पुरूणि ।
पूर्वचित्तये । पूर्व । चित्तये ॥ वस्वीः । अनु । स्वराज्यम् । स्व । राज्यम् ।

१२१. असावि । अꣳशुः । मदाय । अप्सु । दक्षः । गिरिष्ठाः । गिरि ।

---

१०. सन्तनि ॥ देवाः । गायत्री । पवमानस्सोमः ।

असाहाउ ॥ वायꣳशुर्माऽ३१उवाऽ२३ । दाऽ२३४या । अप्सुदक्षो-
गिरिष्ठाऽ१ः ॥ श्येनोहाउ ॥ नायोनिमाऽ३१उवाऽ२३ । माऽ२३४दात् ॥



३५९. शुभ्रमन्धो देववातमप्सु धौतं नृभिस्सुतम् । स्वदन्ति गावः पयोभिः ॥२॥

३६०. आदीमश्वं न हेतारमशूशुभन्नमृताय । मधो रसꣳसधमादे ॥३॥

धा. १२. उ. १. स्व. ५. चु. ॥१६॥

१२२. ऊर्ध्वसद्मा आङ्गिरसः । कृतयशा आङ्गिरसः । ककुप्सतोबृहत्यौ ।

पवमानः सोमः ॥

३६१. अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
वि कोशं मध्यमं युव ॥१॥

३६२. आ वच्यस्व सुदक्ष चम्वोस्सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिवःपवस्व रीतिमपो जिन्वन्गविष्टये धियः ॥२॥

धा. १८. उ. ३. स्व. २. डा. ॥१७॥

---

स्थाः । श्येनः । न । योनिम् । आ । असदत् ॥ शुभ्रम् । अन्धः । देववातम् ।
देव । वातम् । अप्सु । धौतम् । नृभिः । सुतम् । स्वदन्ति । गावः । पयोभिः ॥
आत् । ईम् । अश्वम् । न । हेतारम् । अशूशुभन् । अमृताय । अ । मृताय ।
मधोः । रसम् । सधमादे । सध । मादे ॥

१२२. अभि । द्युम्नम् । बृहत् । यशः । इषः । पते । दिदीहि । देव ।

---

श्रीः ॥ शुभ्रमन्धोदेववातमप्सुधौतन्नृभिस्सुताऽ१म् ॥ स्वदाहाउ ॥
ताइगावःपाऽ३१उवाऽ२३ ॥ योऽ२३४भीः ॥ श्रीः ॥ आदीमश्वन्न हेतारम-
शूशुभन्नमृतायाऽ२३४५ ॥ मधोहाउ ॥ रासꣳसधाऽ३१उवाऽ२३ ॥
माऽ२३४दे ।

दी. १४. उत्. २. मा. १३. धि ॥९०॥

११. च्यावनम् ॥ च्यवनः । ककुप् । पवमानस्सोमः ।

अभाऽ२३४इ । द्युम्नम् । बृहाऽ२३४यशाऽ६ः । हाउ ॥ आइषस्पाऽ२३४-
पुताइ । दिदीहिदेवदेवाऽ२३४५हाइ । वाइकोशाऽ२म्माऽ२ ॥ ध्यामा-

१२३. त्रित आप्त्यः। उष्णिक्। पवमानः सोमः।

३६३. प्राणाशिशुर्महीनाꣳहिन्वन्नृतस्य दीधितिम्।
विश्वा परि प्रिया भुवदध द्विता ॥१॥

३६४. उप त्रितस्य पाष्योऽ३रभक्त यद्गुहा पदम्।
यज्ञस्य सप्त धामभिरध प्रियम् ॥२॥

३६५. त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम्।
मिमीते अस्य योजना वि सुक्रतुः ॥३॥

धा. ८. उ. न. स्व. ४ री. ॥१८॥

---

देवयुम्। वि। कोशम्। मध्यमम्। युव॥ आ। वच्यस्व। सुदक्ष। सु। दक्ष। चम्वोः। सुतः। विशाम्। वह्निः। न। विश्पतिः॥ वृष्टिम्। दिवः। पवस्व। रीतिम्। अपः। जिन्वन्। गविष्टये। गो। इष्टये। धियः॥

१२३. प्राणा। प्र। आना। शिशुः। महीनाम्। हिन्वन्। ऋतस्य। दीधितिम्। विश्वा। परि। प्रिया। भुवत्। अध। द्विता॥ उप। त्रितस्य।

---

ऽ२३१हाऽ३४३इ॥ युऽ२३४वोऽ६"हाइ॥ श्रीः॥ विकोऽ२३४। शम्म। ध्यमाऽ२३४म्युवाऽ६। हाउ॥ आवच्याऽ२३४स्वा। सुदक्षचमुवोस्सुतो-ऽ२३४हाइ। वाइशांवाऽ३हाऽ३इः॥ नावाऽ२३हाऽ३४३इ॥ श्पाऽ२३४-तोऽ६"हाइ॥ श्रीः॥ विशाऽ२३४म्। वह्निः। नवाऽ२३४इश्पतोऽ६ः। हाउ॥ वार्ष्टिन्दाऽ२३४इवाः। पवस्वरीतिमापोऽ२३४हाइ। जाइन्वान्गा-ऽ३वाऽ३इ॥ धायाऽ२३हाऽ३४३इ॥ धाऽ२३४योऽ६"हाइ॥

दी. ५. उन्. ३. मा. २९. वो. ॥९१॥

१२. कोशम्॥ इन्द्रः। उष्णिक्। पवमानः सोमः।

प्राणा। शिशुर्मही। नाम्। होइऽ२। हो। वाहोइ। हिन्वन्नृतस्य-दीधिताइम्। विश्वापाऽ१राऽ२३इ॥ प्रीऽ३याभूऽ३वात्॥ अधाऽ२३-



१२४. रेभसूनू काश्यपौ। अनुष्टुप्। पवमानः सोमः॥

३६६. पवस्व वाजसातये पवित्रे धारया सुतः।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥१॥

३६७. त्वाꣳरिहन्ति धीतयो हरिं पवित्रे अद्रुहः।
वत्सं जातं न मातरꣳपवमान विधर्मणि ॥२॥

---

पाष्योः। अभक्त। यत्। गुहा। पदम्। यज्ञस्य। सप्त। धामभिः। अध। प्रियम्॥ त्रीणि। त्रितस्य। धारया। पृष्ठेषु। आ। ऐरयत्। रयिम्। मिमीते। अस्य। योजना। वि। सुक्रतुः। सु। क्रतुः॥

१२४. पवस्व। वाजसातये। वाज। सातये। पवित्रे। धारया। सुतः। इन्द्राय। सोम। विष्णवे। देवेभ्यः। मधुमत्तरः॥ त्वाम्। रिहन्ति। धीतयः। हरिम्। पवित्रे। अद्रुहः। अ। द्रुहः। वत्सम्। जातम्। न। मातरः।

---

द्विताऽ३४३॥श्रीः॥ उपा॥ त्रितस्यपा। ष्योः। होइऽ२। हो। वाहोइ। अभक्तयद्गुहापदाम्। यज्ञास्याऽ१साऽ२३॥ प्ताऽ३धामाऽ३भाइः॥ अधा-ऽ२३प्रियाऽ३४३म्॥ श्रीः॥ त्रीणी॥ त्रितस्यधार। या। होइऽ२। हो। वाहोइ। पृष्ठेष्वैरयद्रयाइम्। मिमाइतेऽ१आऽ२३॥ स्योऽ३योजा-ऽ३ना॥ विसुऽ२३क्रतूऽ३४३ः। औऽ२३४५इ॥ डा॥

दी. १५. उत्. ६. मा. २२. मा. ॥९२॥

१३. गौरीवितम्॥ गौरीवितिः। अनुष्टुप्। पवमानस्सोमः।

पव। स्ववाऽ३। जसातयाइ॥ पवित्रेधारयासुताऽ२३ः। आइन्द्रायसोऽ३१२३। मवाऽ५इष्णवाइ॥ दाइवेभ्योमाऽ३१२३॥ धुमोवा। ताऽ५रोऽ६"हाइ॥ श्रीः॥ तुवाम्। रिहाऽ३। तिधीतयाः॥

३६८. त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥३॥

धा. २४. उ. १. स्व. २. ता. १६. ॥९॥

---

पवमान । विधर्मणि । वि । धर्मणि ॥ त्वम् । द्याम् । च । महिव्रत । महि । व्रत । पृथिवीम् । च । अति । जभ्रिषे । प्रति । द्रापिम् । अमुञ्चथाः । पवमान । महित्वना ॥

---

हरिंपवित्रेअद्रुहाऽ२३ः । वात्संजाताऽ३१२३म् । नमाऽ५तराः ॥ पाव-मानाऽ३१२३ । विघोवा । माऽ५णोऽ६"हाइ ॥श्रीः॥ तुवम् । द्याञ्चाऽ३ । महिव्रता । पृथिवीञ्चातिजभ्रिषाऽ२३इ । प्रातिद्रापाऽ३१२३इम् । अमु-ऽ५ञ्चथाः ॥ पावमानाऽ३१२३ ॥ महोवा । त्वाऽ५नोऽ६"हाइ ॥

दी. १७. उत्. न. मा. २०. चौ. ॥९३॥

१४. पार्थम् ॥ पृथुर्वैन्यः । अनुष्टुप् । पवमानस्सोमः ।

ओऽ३होऽ३होइ । पव । स्त्वाऽ२ । जसाताऽ२३४याइ ॥ पवि । त्रेघाऽ२ । रयाद्रुऽ२३४ताः ॥ इन्द्रा । यसोऽ२ । मवाइष्णाऽ२३४वाइ ॥ देवे । भ्योमाऽ२३ । धुमाऽ३त्ताऽ५"राऽ६५६ः ॥श्रीः॥ तुत्राम् । रिहाऽ२ । तिघाइत्ताऽ२३४याः ॥ हरिम् । पवाऽ२इ । त्रेअद्रूऽ२३४हाः ॥ वत्सम् । जाताऽ२म् । नमाताऽ२३४राः ॥ पव । मानाऽ२३ । विघाऽ३र्माऽ५"णा-ऽ६५६इ ॥ श्रीः ॥ तुवम् । द्याञ्चाऽ३ । महिव्राऽ२३४ता ॥ पृथि । वीञ्चाऽ२ । तिजभ्रीऽ२३४षाइ ॥ प्रति । द्रापाऽ२इम् । अमुञ्चाऽ२३४थाः ॥ ओऽ३होऽ३होइ । पव । मानाऽ२३ । महाऽ३इत्वाऽ५"नाऽ६५६ ॥

दी. १३. उत्. न. मा. २४. री. ॥९४॥



१२५. मन्युर्वासिष्ठः । त्रिष्टुप् । पवमानः सोमः ॥

३६९. इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमस्सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥१॥

३७०. अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥२॥

---

१२५. इन्दुः । वाजी । पवते । गोन्योघाः । गो । न्योघाः । इन्द्रे । सोमः । सहः । इन्वन् । मदाय । हन्ति । रक्षः । बाधते । परि । अरातिम् । अ । रातिम् । वरिवः । कृण्वन् । वृजनस्य । राजा ॥ अध । धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिदुग्धः । अद्रि । दुग्धः । इन्दुः । इन्द्रस्य । सख्यम् । स । ख्यम् । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥ अभि ।

---

१५. दाशस्पत्यम् ॥ दाशस्पतिः । त्रिष्टुप् । पवमानस्सोमः ।

इन्दुरौहोवाहाईया ॥ वाजाउ । वाऽ३ । हाउवा । पवतेगोनि-योघाउ । वाऽ३ । हाउवा । इन्द्राइसोमः । सहइन्वाउ । वाऽ३ । हाउवाऽ३ । माऽ२दाऽ२३४औहोवा । याऽ२३४५ ॥ हन्ताइरक्षो । बाधाता-इपाउ । वाऽ३ । हाउवाऽ३ ॥ यीऽ२राऽ२३४औहोवा । तीऽ२३४५म् ॥ वराइवस्कृ । ण्वन्वृजनाउ । वाऽ३ । हाउवाऽ३ ॥ स्याऽ२राऽ२३४-औहोवा ॥ जाऽ२३४५ ॥ श्रीः ॥ अधौहोवाहाईया । धाराउ । वाऽ३ । हाउवा । यामधुवापृचानाउ । वाऽ३ । हाउवा । तिरोरोम । पवाताआउ । वाऽ३ । हाउवाऽ३ । द्राऽ२इदूऽ२३४औहोवा । ग्धाऽ२३४५ः ॥ इन्दुरा-इन्द्रा । स्यसाखीयाउ । वाऽ३ । हाउवाऽ३ ॥ जूऽ२षाऽ२३४औहोवा । णाऽ२३४५ः ॥ देवोदाइवा । स्यमात्साराउ । वाऽ३ । हाउवाऽ३ ॥ माऽ२दाऽ२३४औहोवा । याऽ२३४५ ॥ श्रीः ॥ अधौहोवाहाईया ॥

३७१. अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥३॥
धा. २०. उ. १. स्व. ४. पी. ॥२०॥

षष्ठः खण्डः ।

१२६. वसुश्रुत आत्रेयः । पङ्क्तिः । अग्निः ।

३७२. आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳस्तोतृभ्य आ भर ॥१॥

व्रतानि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन । पृञ्चन् । इन्दुः । धर्माणि । ऋतुथा । वसानः । दश । क्षिपः । अव्यत । सानो । अव्ये ॥

१२६. आ । ते । अग्ने । इधीमहि । द्युमन्तम् । देव । अजरम् । अ । जरम् । यत् । ह । स्या । ते । पनीयसी । समित् । सम् । इत् । दीदयति ।

व्रताउ । वाऽ३ । हाउवा । निपवतेपुनानाउ । वाऽ३ । हाउवा । देवोदाइवान् । स्वेनारासाउ । वाऽ३ । हाउवाऽ३ । नाऽ२पाऽ२३४- औहोवा । चाऽ२३४५न् ॥ इन्दुर्धर्मा । णियार्तुथाउ । वाऽ३ । हाउ- वाऽ३ ॥ वाऽ२साऽ२३४औहोवा । नाऽ२३४५ः ॥ दशाक्षाइपो । अव्यातासाउ । वाऽ३ । हाउवाऽ३ ॥ नोऽ२आऽ२३४औहोवा ॥ व्या- ऽ२३४५इ ॥ दी. ४१. उत्. २३. मा. ६२. गा. ॥९५॥

१६. सत्रयम् । इन्द्रः । पङ्क्तिः । अग्निः ।

आतेअग्नइधी । माऽ२हाइ । द्युमन्ताऽ३न्देवअजरम् ॥ यद्धस्याते- पनीयसी । समिद्दीदयताइ । हुम्ऽ३स्थिहुम् । द्याऽ२३४वी ॥ श्रीः ॥



३७३. आ ते अग्न ऋचा हविश्शुक्रस्य ज्योतिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳहूयत इषꣳस्तोतृभ्य आ भर ॥२॥

३७४. ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳस्तोतृभ्य आ भर ॥३॥
धा. २८. उ. न. स्व. २. रा. ॥२१॥

१२७. नृमेध आङ्गिरसः । उष्णिक् । इन्द्रः ।

३७५. इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥१॥

द्यवि । इषम् । स्तोतृभ्यः । आ । भर ॥ आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । ज्योतिषः । पते । सुश्चन्द्र । सु । चन्द्र । दस्म । विश्पते । हव्यवाट् । हव्य । वाट् । तुभ्यम् । हूयते । इषम् । स्तोतृभ्यः । आ । भर ॥ आ । उभे- इति । सुश्चन्द्र । सु । चन्द्र । विश्पते । दर्वी इति । श्रीणीषे । आसनि । उत । उ । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते । इषम् । स्तोतृभ्यः । आ । भर ॥

१२७. इन्द्राय । साम । गायत । विप्राय । वि । प्राय । बृहते । बृहत् । ब्रह्मकृते । ब्रह्म । कृते । विपश्चिते । विपः । चिते । पनस्यवे ॥ त्वम् । इन्द्र ।

आतेअग्नऋचा । हाऽ२वाइः । शुक्रस्याऽ३ज्योतिषस्पताइ ॥ सुश्चन्द्रदस्म- विश्पतेहव्यवाट्तुभ्यꣳहू । हुम्ऽ३स्थिहुम् । याऽ२३४ताइ ॥ श्रीः ॥ ओभे- सुश्चन्द्रवि । श्पाऽ३ताइ । दर्वीश्राऽ३इणीषआसनाइ ॥ उतोनउत्पुपूर्याउक्थेषु- शवसा । हुम्ऽ३स्थिहुम् । पाऽ२३४ताइ ॥ इषꣳस्तोतृभ्याऽ३आ । हुम्- ३स्थिहुम्ऽ२४३ । भाऽ३४५रोऽ६हाइ ॥ दी. २५. उत्. न. मा. २९.बो. ॥९६॥

३७६. त्वमिन्द्राभिभूरसि त्वꣳसूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाँ असि ॥२॥

३७७. विभ्राजञ्ज्योतिषा स्वऽ३रगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥३॥

धा. १५. उ. न. स्व. १. व. ॥२२॥

१२८. गोतमो राहूगणः । अनुष्टुप् । इन्द्रः ।

३७८. असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियꣳरजस्सूर्यो न रश्मिभिः ॥१॥

अभिभूः । अभि । भूः । असि । त्वम् । सूर्यम् । अरोचयः । विश्वकर्मा । विश्व । कर्मा । विश्वदेवः । विश्व । देवः । महान् । असि ॥ विभ्राजन् । वि । भ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः । देवाः । ते । इन्द्र । सख्याय । स । ख्याय । येमिरे ॥

१२८. असावि । सोमः । इन्द्र । ते । शविष्ठ ॥ धृष्णो । आ । गहि ॥

१७. सौमित्रम् ॥ सुमित्रः कुत्सः । उष्णिक् । इन्द्रः ।

औहोहोइ । औऽ३होऽ३इ । औऽ३२३४५वाऽ६५६ । इन्द्राऽ२-
यसामगायताऽ२३४५ ॥ विप्राऽ२यबृहतेबृहाऽ१त् ॥ ब्रह्मकृतेऽ२विपश्चिते-
ऽ२३४५ ॥ एऽ३ । पनस्यवेऽ२३४५ ॥श्रीः॥ त्वमिन्द्राभिभूरसीऽ२३४५ ॥
त्वꣳसूर्यमरोचयाऽ२३४५ः ॥ विश्वकर्माविश्वदेवाऽ२३४५ः । एऽ३ ।
महाꣳअसाऽ२३४५इ ॥श्रीः॥ विभ्राजञ्ज्योतिषासुवाऽ२३४५ः ॥ अगच्छो-
रोचनन्दिवाऽ१ः ॥ देवास्तइन्द्रसख्यायाऽ२३४५ ॥ औहोहोइ । औऽ३-
होऽ३इ । औऽ३२३४५वाऽ६५६ ॥ एऽ३ । येमिराऽ२३४५इ ॥





३७९. आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनꣳसु ते मनो ग्रावा कृणोतु वग्नुना ॥२॥

३८०. इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणाꣳसुष्टुतीरुप यज्ञं च मानुषाणाम् ॥३॥

धा. २०. उ. १. स्व. २. पा. ॥२३॥

सप्तमः खण्डः ॥
इति षष्ठोऽध्यायः ।
इति तृतीयप्रपाठके द्वितीयोऽर्धः ॥

आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न । रश्मिभिः ॥ आ । तिष्ठ । वृत्रहन् । वृत्र । हन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति । अर्वाचीनम् । अर्वा । अचीनम् । सु । ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥ इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टशवसम् । अप्रतिधृष्ट । शवसम् । ऋषीणाम् । सुष्टुतीः । सु । स्तुतीः । उप । यज्ञम् । च । मानुषाणाम् ॥

१८. महावैश्वामित्रम् । विश्वामित्रः । अनुष्टुप् । इन्द्रः ।

हयाइ । हयाऽ३ । ओहाओहा (त्रीणि त्रिः) असाविसो । मइन्द्रा-
ताऽ२इ ॥ शविष्ठधा । ष्णावागाहीऽ२ ॥ आत्वापृणा । क्त्विन्द्रियाऽ२म् ॥
रजस्सूर्यो । नरश्मिभाऽ२इः ॥ श्रीः ॥ आतिष्ठवा । त्रहन्रथाऽ२म् ॥
युक्तातेब्रा । ह्मणाहरीऽ२ । अर्वाचीनाम् । सुतेमानाऽ२ः । ग्रावाकृणो ।
तुवग्नुनाऽ२ ॥ श्रीः ॥ इन्द्रमिद्धा । रीवहाताऽ२ः ॥ अप्रतिधा । ष्टशवा-
साऽ२म् ॥ ऋषीणाꣳसु । ष्टुतीरुपाऽ२ ॥ यज्ञञ्चमा । नुषाणाऽ२म् ।
यज्ञञ्चा । मानुषाणाऽ२म् । हयाइ । हयाऽ३ । ओहाओहा । (त्रीणि त्रिः)
होऽ४इडा । होऽ४इडा । होऽ२३४५इ ॥ डा ॥

अथ सप्तमोऽध्यायः ।

( चतुर्थप्रपाठकस्य प्रथमोऽर्धः )

१२९. अकृष्टमाषादयः त्रयः । जगती । पवमानः सोमः ।

३८१. ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः ।
दधाति रत्नꣳस्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥१॥

३८२. अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवश्शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिस्सिन्धुभिर्वृषा ॥२॥

३८३. अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि ।
अग्रे वाजस्य भजसे महद्धनꣳस्वायुधस्सोतृभिस्सोम सूयसे ॥३॥

धा. २९. उ. न. स्व. ५. लु. ॥१॥

१३०. कश्यपो मारीचः । गायत्री । पवमानः सोमः ॥

३८४. असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥१॥

३८५. शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे अव्यये ॥२॥

३८६. ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवन्तामान्तरिक्ष्या ॥३॥

धा. १०. उ. न. स्व. ४. वी. ॥२॥

१३१. मेधातिथिः काण्वः । गायत्री । पवमानः सोमः ।

३८७. पवस्व देववीरति पवित्रꣳसोम रꣳह्या । इन्द्रमिन्दो वृषा विश ॥१॥

३८८. आवच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः । आ योनिं धर्णसिस्सदः ॥२॥

३८९. अधुक्षत प्रियं मधु धारा सुतस्य वेधसः । अपो वसिष्ट सुक्रतुः ॥३॥

३९०. महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः । यद्गोभिर्वासयिष्यसे ॥४॥

३९१. समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः । सोमꣳपवित्रे अस्मयुः ॥५॥

३९२. अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳसूर्येण दिद्युते ॥६॥

३९३. गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भसे ॥७॥

---

१२९. ज्योतिः । यज्ञस्य । पवते । मधु । प्रियम् । पिता । देवानाम् । जनिता । विभूवसुः । विभु । वसुः । दधाति । रत्नम् । स्वधयोः । स्व । धयोः । अपीच्यम् । मदिन्तमः । मत्सरः । इन्द्रियः । रसः ॥ अभिक्रन्दन् । अभि । क्रन्दन् । कलशम् । वाजी । अर्षति । पतिः । दिवः । शतधारः । शत । धारः । विचक्षणः । वि । चक्षणः । हरिः । मित्रस्य । मि । त्रस्य । सदनेषु । सीदति । मर्मृजानः । अविभिः । सिन्धुभिः । वृषा ॥ अग्रे । सिन्धूनाम् । पवमानः । अर्षसि । अग्रे । वाचः । अग्रियः । गोषु । गच्छसि । अग्रे । वाजस्य । भजसे । महत् । धनम् । स्वायुधः । सु । आयुधः । सोतृभिः । सोम । सूयसे ।

१३०. असृक्षत । प्र । वाजिनः । गव्या । सोमासः । अश्वया । शुक्रासः । वीरया । आशवः । शुम्भमानाः । ऋतायुभिः । मृज्यमानाः । गभस्त्योः । पवन्ते । वारे । अव्यये ॥ ते । विश्वा । दाशुषे । वसु । सोमाः । दिव्यानि । पार्थिवा । पवन्ताम् । आ । अन्तरिक्ष्या ॥

१३१. पवस्व । देववीः । देव । वीः । अति । पवित्रम् । सोम । रꣳह्या । इन्द्रम् । इन्दो । वृषा । आ । विश ॥ आ । वच्यस्व । महि । प्सरः । वृषा । इन्दो । द्युम्नवत्तमः । आ । योनिम् । धर्णसिः । सदः ॥ अधुक्षत । प्रियम् । मधु । धारा । सुतस्य । वेधसः । अपः । वसिष्ट । सुक्रतुः । सु । क्रतुः ॥ महान्तम् । त्वा । महीः । अनु । आपः । अर्षन्ति । सिन्धवः । यत् । गोभिः । वासयिष्यसे ॥ समुद्रः । सम् । उद्रः । अप्सु । मामृजे । विष्टम्भः । वि । स्तम्भः । धरुणः । दिवः । सोमः । पवित्रे । अस्मयुः ॥ अचिक्रदत् । वृषा ॥ हरिः । महान् । मित्रः । मि । त्रः । न । दर्शतः । सम् । सूर्येण । दिद्युते ॥

३९४. तन्त्वा मदाय घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥८॥

३९५. गोपा इन्दो नृपा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥९॥

३९६. अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
पर्जन्यो वृष्टिमाँ इव ॥१०॥

धा. ५१. उ. १. स्व. ८. कै. ॥३ ॥

प्रथमः खण्डः ।

१३२. हिरण्यस्तूप आङ्गिरसः । गायत्री । पवमानः सोमः ।

३९७. सना च सोम जेषि च पवमान महि श्रवः । अथानो वस्यसस्कृधि ॥१॥

३९८. सना ज्योतिस्सना स्वाऽ३र्विश्वा च सोम सौभगा ।
अथा नो वस्यसस्कृधि ॥२॥

३९९. सना दक्षमुत क्रतुमप सोम मृधो जहि । अथा नो वस्यसस्कृधि ॥३॥

४००. पवीतारःपुनीतन सोममिन्द्राय पातवे । अथा नो वस्यसस्कृधि ॥४॥

४०१. त्वꣳसूर्ये न आ भज तव क्रत्वा तवोतिभिः । अथा नो वस्यसस्कृधि ॥५॥

गिरः । ते । इन्दो । ओजसा । समृज्यन्ते ॥ अपस्युवः ॥ याभिः । मदाय । शुम्भसे ॥ तम् । त्वा । मदाय । घृष्वये । उ । लोककृत्नुम् । लोक । कृत्नुम् । ईमहे । तव । प्रशस्तये ॥ प्र । शस्तये । महे ॥ गोपाः । गो । पाः । इन्दो । नृपाः । नृ । पाः । असि । अश्वसाः । अश्व । साः । वाजसाः । वाज । साः । उत । आत्मा । यज्ञस्य । पूर्व्यः ॥ अस्मभ्यम् । इन्दो । इन्द्रियम् । मधोः । पवस्व । धारया । पर्जन्यः । वृष्टिमान् । इव ॥

१३२. सन । च । सोम । जेषि । च । पवमान । महि । श्रवः । अथ । नः । वस्यसः । कृधि ॥ सन । ज्योतिः । सन । स्वः । विश्वा । च । सोम । सौभगा । सौ । भगा । अथ । नः । वस्यसः । कृधि ॥ सन । दक्षम् । उत । क्रतुम् । अप । सोम । मृधः । जहि । अथ । नः । वस्यसः । कृधि ॥ पवीतारः । पुनीतन । पुनीत । न । सोमम् । इन्द्राय । पातवे ॥ अथ । नः । वस्यसः ॥ कृधि ॥ त्वम् ।



४०२. तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम् । अथा नो वस्यसस्कृधि ॥६॥

४०३. अभ्यर्ष स्वायुध सोम द्विबर्हसꣳरयिम् । अथा नो वस्यसस्कृधि ॥७॥

४०४. अभ्य३र्षानपच्युतो वाजिन्त्समत्सु सासहिः ।
अथा नो वस्यसस्कृधि ॥८॥

४०५. त्वां यज्ञैरवीवृधन्पवमान विधर्मणि । अथा नो वस्यसस्कृधि ॥९॥

४०६. रयिन्नश्चित्रमश्विनमिन्दो विश्वायुमा भर । अथा नो वस्यसस्कृधि ॥१०॥

धा. २२. उ. १. स्व. २. चा. ॥४॥

१३३. अवत्सारः काश्यपः । गायत्री । पवमानः सोमः ॥

४०७. तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥१॥

४०८. उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत्स मन्दी धावति ॥२॥

४०९. ध्वस्रयोःपुरुषन्त्योरा सहस्राणि दद्महे । तरत्स मन्दी धावति ॥३॥

४१०. आ ययोस्त्रिꣳशतन्तना सहस्राणि च दद्महे । तरत्स मन्दी धावति ॥४॥

धा. ६. उ. न. स्व. २. हा. ॥५॥

सूर्ये । नः । आ । भज । तव । क्रत्वा । तव । ऊतिभिः । अथ । नः । वस्यसः । कृधि ॥ तव । क्रत्वा । तव । ऊतिभिः । ज्योक् । पश्येम । सूर्यम् । अथ । नः । वस्यसः । कृधि ॥ अभि । अर्ष । स्वायुध । सु । आयुध । सोम । द्विबर्हसम् । द्वि । बर्हसम् । रयिम् । अथ । नः । वस्यसः । कृधि ॥ अभि । अर्ष । अनपच्युतः । अन । अपच्युतः । वाजिन् । समत्सु । स । मत्सु । सासहिः । अथ । नः । वस्यसः । कृधि ॥ त्वाम् । यज्ञैः । अवीवृधन् । पवमान । विधर्मणि । वि । धर्मणि । अथ । नः । वस्यसः । कृधि ॥ रयिम् । नः । चित्रम् । अश्विनम् । इन्दो । विश्वायुम् । विश्व । आयुम् । आ । भर । अथ । नः । वस्यसः । कृधि ॥

१३३. तरत् । सः । मन्दी । धावति । धारा । सुतस्य । अन्धसः । तरत् । सः । मन्दी । धावति ॥ उस्रा । उ । स्रा । वेद । वसूनाम् । मर्तस्य ।

१३४. जमदग्निर्भार्गवः। गायत्री। पवमानः सोमः।

४११. एते सोमा असृक्षत गृणानाश्शवसे महे। मदिन्तमस्य धारया ॥१॥

४१२. अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि।
सनद्वाजः परि स्रव ॥२॥

४१३. उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः। गृणानो जमदग्निना ॥३॥

धा. १५. उ. न. स्व. ३. वि. ॥६॥

द्वितीयः खण्डः।

१३५. कुत्स आङ्गिरसः। जगती। अग्निः॥

४१४. इमꣳस्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयन्तव ॥१॥

४१५. भरामेध्मं कृणवामाहवीꣳषि ते चितयन्तः पर्वणापर्वणा वयम्।
जीवातवे प्रतराꣳसाधया धियोऽग्ने सख्ये मा रिषामा वयन्तव ॥२॥

देवी। अवसः। तरत्। सः। मन्दी। धावति॥ ध्वस्रयोः। पुरुषन्त्योः। पुरु। सन्त्योः। आ। सहस्राणि। दद्महे। तरत्। सः। मन्दी। धावति॥ आ। ययोः। त्रिꣳशतम्। तना। सहस्राणि। च। दद्महे। तरत्। सः। मन्दी। धावति॥

१३४. एते। सोमाः। असृक्षत। गृणानाः। शवसे। महे। मदिन्तमस्य। धारया॥ अभि। गव्यानि। वीतये। नृम्णा। पुनानः। अर्षसि। सनद्वाजः। सनत्। वाजः। परि। स्रव॥ उत। नः। गोमतीः। इषः। विश्वाः। अर्ष। परिष्टुभः। परि। स्तुभः। गृणानः। जमदग्निना। जमत्। अग्निना॥

१३५. इमम्। स्तोमम्। अर्हते। जातवेदसे। जात। वेदसे। रथम्। इव। सम्। महेम। मनीषया॥ भद्रा। हि। नः। प्रमतिः। प्र। मतिः। अस्य। सꣳसदि। सम्। सदि। अग्ने। सख्ये। मा। रिषाम। वयम्।



४१६. शकेम त्वा समिधꣳसाधया धियस्त्वे देवा हविरदन्त्याहुतम्।
त्वमादित्याँ आ वह तान्ह्यु३श्मस्यग्ने सख्ये मा रिषामा वयन्तव ॥३॥

धा. ३७. उ. २. स्व. १०. छी. ॥७॥

१३६. वसिष्ठो मैत्रावरुणिः। गायत्री। मित्रावरुणौ॥

४१७. प्रति वाꣳसूर उदिते मित्रं गृणीषे वरुणम्। अर्यमणꣳरिशादसम् ॥१॥

४१८. राया हिरण्यया मतिरियमवृकाय शवसे। इयं विप्रा मेधसातये ॥२॥

४१९. ते स्याम देव वरुण ते मित्र सूरिभिस्सह। इषꣳस्वश्च धीमहि ॥३॥

धा. ११. उ. न. स्व. २. हा. ॥८॥

१३७. त्रिशोकः काण्वः। गायत्री। इन्द्रः।

४२०. भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः। वसु स्पार्हं तदा भर ॥१॥

४२१. यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति। वसु स्पार्हं तदा भर ॥२॥

वयम्। तव॥ भराम। इध्मम्। कृणवाम। हवीꣳषि। ते। चितयन्तः। पर्वणा-पर्वणा। पर्वणा। पर्वणा। वयम्। जीवातवे। प्रतराम्। साधय। धियः। अग्ने। सख्ये। स। ख्ये। मा। रिषाम। वयम्। तव॥ शकेम। त्वा। समिधम्। सम्। इधम्। साधय। धियः। त्वे इति। देवाः। हविः। अदन्ति। आहुतम्। आ। हुतम्। त्वम्। आदित्यान्। आ। दित्यान्। आ। वह। तान्। हि। उश्मसि। अग्ने। सख्ये। स। ख्ये। मा। रिषाम। वयम्। तव॥

१३६. प्रति। वाम्। सूरे। उदिते। उत्। इते। मित्रम्। मि[illegible] गृणीषे। वरुणम्। अर्यमणम्। रिशादसम्॥ राया[illegible] मतिः। [illegible] नमा। वि। प्रा। मेधसा-इयम्। अवृकाय। अ। वृकाय। शवसे [illegible] देव। वरुण। ते। मित्र। मि। त्र। तये। मेध। सा[illegible] सूरि[illegible] इषम्। स्वऽश्नेति। च। धीमहि॥

१३७. भिन्धि। विश्वाः। अप। द्विषः। परि। बाधः। जहि। मृधः।

४२२. यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदा भर ॥३॥

धा. १२. उ. १. स्व. ६. नू. ॥६॥

१३८. श्यावाश्व आत्रेयः । गायत्री । इन्द्राग्नी ॥

४२३. यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु ।

इन्द्राग्नी तस्य बोधतम् ॥१॥

४२४. तोशासा रथयावाना वृत्रहणापराजिता । इन्द्राग्नी तस्य बोधतम् ॥२॥

४२५. इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोधतम् ॥३॥

धा. ८. उ. १. स्व. २. टा. ॥१०॥

तृतीयः खण्डः ।

१३९. कश्यपो मारीचः । गायत्री । पवमानः सोमः ॥

४२६. इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥१॥

---

वसु । स्पार्हम् । तत् । आ । भर ॥ यस्य । ते । विश्वम् । आनुषक् । अनु । सक् । भूरेः । दत्तस्य । वेदति । वसु । स्पार्हम् । तत् । आ । भर ॥ यत् । वीडौ । इन्द्र । यत् । स्थिरे । यत् । पर्शाने । पराभृतम् । परा । भृतम् । वसु । स्पार्हम् । तत् । आ । भर ॥

१३८. यज्ञस्य । हि । स्थः । ऋत्विजा । सस्नीइति । वाजेषु । कर्मसु । इन्द्राग्नी । इन्द्र । अग्नी इति । तस्य । बोधतम् ॥ तोशासा । रथयावाना । रथ । [illegible] वृत्रहणा । वृत्र । हना । अपराजिता । अ । पराजिता । इन्द्राग्नी । इन्द्र । अग्नी इति । [illegible] बोधतम् ॥ इदम् । वाम् । मदिरम् । मधु । अधुक्षन् । अद्रिभिः । अ । द्रिभिः । [illegible] इन्द्राग्नी । इन्द्र । अग्नीइति । तस्य । बोधतम् ॥

१३९. इन्द्राय । इन्दो । मरुत्वते । पवस्व । मधु- योनिम् । आसदम् ॥ आ । सदम् । तम् । त्वा । विप्राः । वि । प्राः अर्कस्य ।



४२७. तन्त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् ।

सन्त्वा मृजन्त्यायवः ॥२॥

४२८. रसन्ते मित्रो अर्यमा पिबन्तु वरुणः कवे । पवमानस्य मरुतः ॥३॥

धा. १४. उ. न. स्व. १. ल. ॥११॥

---

विदः । वचः । विदः । परि । कृण्वन्ति । धर्णसिम् । सम् । त्वा । मृजन्ति । आयवः ॥ रसम् । ते । मित्रः । मि । त्रः । अर्यमा । पिबन्तु । वरुणः । कवे । पवमानस्य । मरुतः ॥

---

१९. इषोवृधीयम् ॥ प्रजापतिः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाउ ॥ मरुत्वताइ । पवस्वामाऽ२ । धुमत्तमाः ॥ अर्कस्यायोऽ२ ॥ निमा । साऽ२दाऽ२३४ओहोवा ॥श्रीः॥ तन्त्वाविप्राः ॥ वचोविदाः । परिष्कोण्वाऽ२ । तिधर्णसाइम् ॥ सन्त्वामाजाऽ२ ॥ तिआ । याऽ२वाऽ२३४ओहोवा ॥ श्रीः ॥ रसन्तेमाइ ॥ त्रोअर्यमा । पिबन्तुवाऽ२ । रुणःकवाइ ॥ पवमानाऽ२ ॥ स्यम । रुऽ२ताऽ२३४ओहोवा ॥ इषोवृधेऽ१ ॥

दी. १६. उत्. १६. मा. १४. को. ॥६॥

२०. क्रौञ्चम् ॥ क्रौञ्चः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाऽ१औहो ॥ माऽ३रुत्वाऽ२३४ताइ । पावस्वामा । धूऽ३म । ताऽ२३४माः । पवस्वमधुमाऽ३२ । ताऽ२३४माः ॥ अर्कस्ययोनाऽ२३- इम् । अ । साहाइ ॥ साऽ२३४दाम् । एहियाऽ६हा ॥श्रीः॥ तन्त्वाविप्रा- ऽ१औहो ॥ वाऽ३चोवीऽ२३४दाः । पारिष्काण्वा । ताऽ३इध । णाऽ२३४- साइम् । परिष्कृण्वन्तिधाऽ३२ । णाऽ२३४माइम ॥ सन्त्वामृजन्ताऽ२३इ । अ । साहाइ ॥ याऽ२३४वाः । एहियाऽ६हा ॥श्रीः॥ रसन्तेमाऽ१औहो ॥ त्रोऽ३अर्याऽ२३४मा । पाइबन्तूवा । रूऽ३णः । काऽ२३४वाइ । पिबन्तु-

१४०. सप्तर्षयः । बृहतीसतोबृहत्यौ । पवमानः सोमः ॥

४२९. मृज्यमानस्सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥१॥

१४०. मृज्यमानः । सुहस्त्य । सु । हस्त्य । समुद्रे । सम् । उद्रे । वाचम् । इन्वसि । रयिम् । पिशङ्गम् । बहुलम् । पुरुस्पृहम् । पुरु । स्पृहम् । पवमान ।

बहुलाऽ३२: । काऽ२३४वाइ ॥ पवमानस्याऽ२३ । म । वाहाइ ॥ हुऽ२३४ताः । एहियाऽ६हा । हौऽ५इ ॥ डा ॥

दी. १०. उत्. ३. मा. २८. वै ॥१००॥

तृतीयस्यार्द्धःप्रपाठकः ॥

पञ्चमो विंशः ।

१. वाजदावर्यः ॥ वाजदावर्यः । गायत्री । पवमानस्सोमः ।

इन्द्रायेन्दाउ ॥ मरुऽ२त्वाऽ२३४ताइ । पवाऽ२स्वाऽ२३४मा । धुमत्ताऽ२माः ॥ आऽ२३र्को ॥ स्याऽ२यो । निमोऽ२३४वा । साऽ५दो-ऽ६"हाइ ॥ श्रीः ॥ तन्त्वाविप्राः ॥ वचोऽ२वीऽ२३४दाः । पराऽ२इष्का-ऽ२३४ण्वं । तिम्रणाऽ२साइम् ॥ साऽ२३न्त्वा ॥ भाऽ२र्जा । तियो-ऽ२३४वा । याऽ५वोऽ६"हाइ ॥श्रीः॥ रसन्तेमाइ ॥ श्रौआऽ२याँऽ२३४मा । पिचाऽ२न्त्ऽ२३४वा । रुणऽकाऽ२वाइ ॥ पाऽ२३वा ॥ माऽ२ना । स्यमोऽ२३४वा । हुऽ५तोऽ६"हाइ ॥ दी. ५. उत्. ६. मा. १४ पी. ॥१०१॥

२. औक्ष्णोरन्ध्रम् । उक्ष्णोरन्ध्रः काव्यः । बृहती । पवमानस्सोमः ।

मृज्यमानाः ॥ सुहस्तियाऽ३ । सामूऽ३द्राइवा । चमिन्वसाऽ३इ । रायीऽ३स्पाइशा । गम्बहुलाऽ३म् । पुरुस्पृहऽ२३४ऽहाम् ॥ पवमा ।

४३०. पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानाꣳसोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥२॥

धा. २४. उ. १. स्व. ३. ति. ॥१२॥

अभि । अर्षसि । पुनानः । वारे । पवमानः । अव्यये । वृषा । उ । अचिक्रदत् । वने । देवानाम् । सोम । पवमान । निष्कृतम् । निः । कृतम् । गोभिः । अञ्जानः । अर्षसि ॥

ना । औऽ३हो ॥ भियोऽ२३४वा । पाऽ५गोऽ६"हाइ ॥श्रीः॥ पवमाना ॥ भियर्षसाऽ३इ । पावाऽ३माना । भियर्षसाऽ३इ । पूनाऽ३नोवा । रेपवमाऽ३ । नोआऽ२व्याऽ२३४याइ ॥ वृषोअ । चा । औऽ३हो ॥ क्रदोऽ२३४वा । वाऽ५नोऽ६"हाइ ॥ श्रीः ॥ वृषोअचाइ ॥ क्रदद्वनाऽ३इ । वार्षोऽ२आचाइ । क्रदद्वनाऽ३इ । दाइवाऽ३नाꣳसो । मपवमाऽ३ । ननाऽ२इष्काऽ२३४ताम् ॥ गोभिर । जा । औऽ३हो ॥ नओऽ२३४वा । पाऽ५सोऽ६"हाइ ॥

दी. ८. उत्. ३. मा. २४. डी. ॥१०२॥

३. ऐडमौक्ष्णोरन्ध्रम् ॥ उक्ष्णोरन्ध्रः काव्यः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहस्त्या । समुद्रेवोवा ॥ चामिन्वसि । रायिंपिशाऽ३ । हाऽ३हा । गंबहुलंपुरुस्पृहम् ॥ पवमानाऽ३ । हाऽ३हा ॥ भियर्षाऽ२३सा-ऽ३४३इ ॥श्रीः॥ पवमानाभियर्षसि । पवमानोवा ॥ भार्षसि । पूनानो-वाऽ३ । हाऽ३हा । रेपवमानोअव्यये ॥ वार्षोअचाऽ३इ । हाऽ३हाइ ॥ क्रदद्वाऽ२३नाऽ३४३इ ॥ श्रीः ॥ वृषोअचिक्रदद्वने । वृषोअचोवा ॥ क्रद-द्वने । दाइवानाꣳसोऽ३ । हाऽ३हा । मपवमाननिष्कृतम् ॥ गोभाइरञ्जाऽ३ । हाऽ३हा ॥ नोअर्षाऽ२३साऽ३४३इ । औऽ२३४५इ ॥डा॥

दी. २२. उत्. ७. मा. १५. छु. ॥१०३॥

४. वाजजित् । प्रजापतिः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहा ॥ स्तियाऽ२ । समूऽ२हो । द्रेवाऽ२हो । चामिन्व-
साइ । स्याऽ२इ२होइ । पिशाऽ२हो । गंबहुलाम् । पूरुस्पृहाम् ॥
पवाऽ२हो । मानाऽ२हो ॥ भीयर्षसाऽ३१उवाऽ२३ ॥ श्रीः ॥ पवमा-
नाभिया ॥ पवाऽ२इ । पवाऽ२हो । मानाऽ२हो । भीयर्षसाइ । पुनाऽ२हो ।
नोवाऽ२हो । रेपवमा । नोअव्ययाइ ॥ वृषोऽ२होइ । अचाऽ२इहोइ ॥
क्रादद्वनाऽ३१उवाऽ२३ ॥श्रीः॥ वृषोअचिक्रदात् ॥ वनाऽ२इ । वृषोऽ२होइ ।
अचाऽ२इहोइ । क्रादद्वनाइ । देवाऽ२हो । ना२सोऽ२हो । मपवमा ।
नानिष्कृताम् ॥ गोभाऽ२इहोइ । अज्ञाऽ२हो ॥ नोअर्षसाऽ३१उवाऽ२३ ॥
वाजीजिगीऽ३वा२ऽ१ ॥ दी. २३. उत्. १४. मा. २६. हू. ॥१०४॥

५. वरुणसाम ॥ वरुणः । बृहती । पवमानस्सोमः ।

मृज्यमानस्सुहस्त्योवा । ओवा ॥ सामुद्रेवा । चमाइन्वाऽ१सीऽ२ ।
राऽ२३यीम् । पाऽ२३इशा । गंबहुलम् । पुरूऽ२३हाइ । स्पृहाऽ३मा ॥
पवमानाभियर्षसि । पाऽ२३वा ॥ मानाभियोऽ३ । होऽ३१२३४ । वा ।
पाऽ५सोऽ६"हाइ ॥ श्रीः ॥ पवमानाभियर्षसोवा । ओवा ॥ पावमाना ।
भियार्षाऽ१साऽ२इ । पूऽ२३ना । नोऽ२३वा । रेपवमा । नोआऽ२३हाइ ।
व्ययाऽ३आ ॥ वृषोअचिक्रदद्वने । वाऽ२३र्षो ॥ आचिक्रदोऽ३ । हो-
ऽ३१२३४ । वा । वाऽ५नोऽ६"हाइ ॥श्रीः॥ वृषोअचिक्रदद्वनोवा । ओवा ॥
वार्षोअचि । क्रदाद्वाऽ१नाऽ२इ । दाऽ२३इवा । नाऽ२३२सो । मपवमा ।
ननाऽ२३हाइ । कृताऽ३मा ॥ गोभिरज्ञानोअर्षसि । गोऽ२३भाइः ॥
आज्ञानओऽ३ । होऽ३१२३४ । वा । पाऽ५सोऽ६"हाइ ॥
दी. २२. उत्. ६. मा. २२. चा. ॥१०५॥



१४१. अमहीयुराङ्गिरसः । गायत्री । पवमानस्सोमः ॥

४३१. एतमु त्यन्दश क्षिपो मृजन्ति सिन्धुमातरम् । समादित्येभिरख्यत ॥१॥
४३२. समिन्द्रेणोत वायुना सुत एति पवित्र आ । स२सूर्यस्य रश्मिभिः ॥२॥
४३३. स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे वरुणे च ॥३॥
धा. ८. उ. १. स्व. ३. टि. ॥१३॥

चतुर्थः खण्डः ॥

१४१. एतम् । उ । त्यम् । दश । क्षिपः । मृजन्ति । सिन्धुमातरम् ।
सिन्धु । मातरम् । सम् । आदित्येभिः । आ । दित्येभिः । अख्यत । सम् ।

६. अङ्गिरसां गोष्ठः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

हाउहाउहाउवा । मृज्यमानस्सुहस्त्या । इहा । उपाऽ२३४५ ॥
समुद्रेवाचमिन्वसि । इहा । उपाऽ२३४५ ॥ रयिंपिशङ्गंबहुलंपुरुस्पृहम् ।
इहा । उपाऽ२३४५ ॥ पवमानाभियर्षसि । इहा । उपाऽ२३४५ ॥ श्रीः ।
पवमानाभियर्षसि । इहा । उपाऽ२३४५ ॥ ( त्रीणि । द्विः ) ॥
पुनानोवारेपवमानोअव्यये । इहा । उपाऽ२३४५ ॥ वृषोअचिक्रदद्वने ।
इहा । उपाऽ२३४५ ॥ श्रीः ॥ वृषोअचिक्रदद्वने । इहा । उपाऽ२३४५ ।
(त्रीणि । द्विः ) देवाना२सोमपवमाननिष्कृतम् । इहा । उपाऽ२३४५ ॥
हाउहाउहाउवा । गोभिरञ्जानोअर्षसि । इहा । उपाऽ२३४५ ॥
दी. ३१. उत्. ५. मा. १२. ञि. ॥१०६॥

७. इन्द्रसाम[illegible] । वामदेवः । गायत्री । पवमानस्सोमः ॥

एतमुत्यंदशक्षिपः । इहा ॥ मृजन्तिसिन्धुमातराऽ२म् । इहा ॥
समादित्येभिराऽ२ । इहाऽ२ ॥ स्याऽ२३४तोऽ६"हाइ ॥श्रीः॥ समिन्द्रेणो-

१४२. शुनश्शेप आजीगर्तिः । गायत्री । इन्द्रः ।

४३४. रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥१॥

४३५. आ घ त्वावान्त्मना युक्तस्तोतृभ्यो धृष्णवीयानः ।
ऋणोरक्षन्न चक्रयोः ॥२॥

४३६. आ यद्दुवश्शतक्रतवा कामं जरितृणाम् । ऋणोरक्षन्न शचीभिः ॥३॥

धा. १८. उ. २. स्व. ४. ठी. ॥१४॥

---

इन्द्रेण । उत । वायुना । सुतः । एति । पवित्रे । आ । सम् । सूर्यस्य । रश्मिभिः ॥ सः । नः । भगाय । वायवे । पूष्णे । पवस्व । मधुमान् । चारुः । मित्रे । मि । त्रे । वरुणे । च ॥

१४२. रेवतीः । नः । सधमादे । सध । मादे । इन्द्रे । सन्तु । तुविवाजाः । तुवि । वाजाः । क्षुमन्तः । याभिः । मदेम ॥ आ । घ । त्वावान् । त्मना ।

---

तवायुना । इहा ॥ सुतएतिपवित्रआऽ२ । इहा ॥ सꣳसूर्यस्यराऽ२ । इहाऽ३ ॥ श्माऽ२३४इमोऽ६"हाइ ॥ श्रीः ॥ सनोभगायवायवे । इहा । पूष्णेपवस्व- मधुमाऽ२न् । इहा ॥ चारुर्मित्रेवरूऽ२ । इहाऽ३ ॥ णाऽ२३४- इचोऽ६"हाइ ॥

दी. १८. उत्. ४. मा. १०. ठी. ॥१०७॥

८. वारवन्तीयम् ॥ इन्द्रः । गायत्री । इन्द्रः ॥

रेवतीनोओहोहाइ ॥ साधामाऽ२३४दाइ । इन्द्राइमाऽ२३४हा । तुतुविवाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४जाः ॥ क्षुमन्तः । या"भिर्मदाऽ३४ । ओहोवा । इहाऽ२३४हाइ । ओहोऽ३१२३४ । मा । एहियाऽ६हा ॥ श्रीः ॥ आघत्वावाꣳओहोहाइ ॥ त्मानायूऽ२३४क्ताः ।



१४३. मधुच्छन्दा वैश्वामित्रः । गायत्री । इन्द्रः ।

४३७. सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१॥

४३८. उपनस्सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः ॥२॥

४३९. अथा ते अन्तमानां विद्याम सुमतीनाम् ।
मा नो अति ख्य आ गहि ॥३॥

धा. ११. उ. १. स्व. न. को ॥१५॥

१४४. मान्धाता यौवनाश्वः । गोधा ऋषिका । महापङ्क्तिः । इन्द्रः ।

४४०. उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
महान्तन्त्वा महीनाꣳसम्राजं चर्षणीनाम् ॥
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१॥

---

युक्तः । स्तोतृभ्यः । धृष्णो । ईयानः । ऋणोः । अक्षम् । न । चक्रयोः ॥ आ । यत् । दुवः । शतक्रतो । शत । क्रतो । आ । कामम् । जरितृणाम् । ऋणोः । अक्षम् । न । शचीभिः ॥

१४३. सुरूपकृत्नुम् । सुरूप । कृत्नुम् । ऊतये । सुदुघाम् । सु । दुघाम् । इव । गोदुहे । गो । दुहे । जुहूमसि । द्यविद्यवि । द्यवि । द्यवि ॥ उप । नः । सवना । आ । गहि ॥ सोमस्य । सोमपाः । सोम । पाः । पिब । गोदाः । गो । दाः । इत् । रेवतः । मदः ॥ अथ । ते । अन्तमानाम् । विद्याम । सुमतीनाम् । सु । मतीनाम् । मा । नः । अति । ख्यः । आ । गहि ॥

---

स्तोतृभ्योऽ२३४हाइ । धृष्णावीयाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४नाः ॥ ऋणोर । क्षा"चक्राऽ३४ । ओहोवा । इहाऽ२३४- हाइ । ओहोऽ३१२३४ । योः । एहियाऽ६हा ॥ श्रीः ॥ आयद्दुवाओहोहाइ ॥ शतक्राऽ२३४ताउ । आकामाऽ२३४५हाइ । जरितृऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४णाम् ॥ ऋणोर । क्षा"शचाऽ३४ ।

४४१. दीर्घꣳह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः ।
पूर्वेण मघवन्पदा वयामजो यथा यमः ॥
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥२॥

४४२. अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरम् ।
अधस्पदन्तमीं कृधि यो अस्माँ अभिदासति ॥
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥३॥

धा. ४२. उ. न. स्व. १०. यौ. ॥१६॥

पञ्चमः खण्डः ॥

१४४. उभे इति । यत् । इन्द्र । रोदसी इति । आपप्राथ । आ । पप्राथ । उषाः । इव । महान्तम् । त्वा । महीनाम् । सम्राजम् । सम् । राजम् । चर्षणीनाम् ॥ देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ दीर्घम् । हि । अङ्कुशम् । यथा । शक्तिम् । बिभर्षि । मन्तुमः । पूर्वेण । मघवन् । पदा । वयाम् । अजः । यथा । यमः ॥ देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ अव । स्म । दुर्हणायतः । दुः । हणायतः । मर्तस्य । तनुहि । स्थिरम् । अधस्पदम् ।

औहोवा । इहाऽ२३४हाइ । औहोऽ३१२३४ । श्रीः । एहियाऽ६हा । होऽ५इ ॥डा॥ दी. ३४. उत्. ९. मा. २५. धु. ॥१०८॥

९. तृतीयं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ॥

पाऽ५रि । स्वानोऽ२गाऽ३इरिष्ठाः ॥ पवित्रेसो । मोअक्षरात् । पवित्रे । सोमोऽ२३ । क्षरात् ॥ श्रीः ॥ तूऽ५वम् । विप्राऽ३स्तूऽ३-वंकवाइः ॥ मधुप्रजा । तमन्धसाः । मधुप्रजा । तमाऽ२३ । धासाः ॥ श्रीः ॥ तूऽ५वे । विश्वेऽ३साऽ३जोषसाः । देवासःपाइ । तिमाशता । देवासःपी । तिमाऽ२३ । शाता । औइ । मदो । वाऽ३४३औऽ३४वा ॥



१४५. असितः काश्यपो देवलो वा । गायत्री । पवमानः सोमः ॥

४४३. परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥१॥
४४४. त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः । मदेषु सर्वधा असि ॥२॥
४४५. त्वे विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥३॥

धा. ११. उ. २. स्व. २. खा. ॥१७॥

अधः । पदम् । तम् । ईम् । कृधि । यः । अस्मान् । अभिदासति । अभि । दासति । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥

१४५. परि । स्वानः । गिरिष्ठाः । गिरि । स्थाः । पवित्रे । सोमः । अक्षरत् । मदेषु । सर्वधाः । सर्व । धाः । असि । त्वम् । विप्रः । वि । प्रः । त्वम् । कविः । मधु । प्र । जातम् । अन्धसः । मदेषु । सर्वधाः । सर्व । धाः । असि ॥ त्वे इति । विश्वे । सजोषसः । स । जोषसः । देवासः । पीतिम् । आशत । मदेषु । सर्वधाः । सर्व । धाः । असि ॥

पुवा ॥ सर्वधाः । असाइ । माऽ२दाऽ२३४औहोवा ॥ एऽ३ । पुसर्व-धाअसीऽ२३४५ ॥ दी. १७. उत्. ९. मा. १८. कौ. ॥१०९॥

१०. आद्यं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ॥

पारी ॥ स्वानोगिरिष्ठाः । पवाऽ२इत्रेऽ२३४सो । मोअक्षाराऽ२त् ॥ श्रीः ॥ तुवाम् ॥ विप्रस्त्वंकविः । मधूऽ२प्राऽ२३४जा । तमन्धासाऽ२ः ॥ श्रीः ॥ तुवे ॥ विश्वेसजोषसः । देवाऽ२साऽ२३४ःपी । तिमाशाताऽ२ ॥ मदाइषूसाऽ२ । ईऽ३याऽ३ ॥ वधोऽ२३४वा । आऽ५सोऽ६हाइ ॥ दी. ८. उत्. ५. मा. १०. यौ. ॥११०॥

११. चतुर्थं वैदन्वतम् ॥ विदन्वान्भार्गवः । गायत्री । पवमानस्सोमः ।

औऽ३होइ । इहाहाहाइ । औऽ२होऽ२३४वा । पराइस्वाःऽ२३४नो । गिराऽ२३४इष्ठाः ॥ पावित्रेऽ२३४सो । मोअक्षाऽ२३४रात् ॥ श्रीः ॥ तुवंवाऽ२३४इप्रः । तुवंकाऽ२३४वीः ॥ मधुप्राऽ२३४जा ।

१४६. ऋणंचयो राजर्षिः, शक्तिर्वासिष्ठः। यवमध्यगायत्रीसतोबृहत्यौ। पवमानः सोमः ॥

४४६. स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
सोमो यस्सुक्षितीनाम् ॥१॥

४४७. यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रा वरुणा करामह एन्द्रमवसे महे ॥२॥
धा. ९. उ. न स्व. ४ ली. ॥१८॥

---

१४६. सः। सुन्वे। यः। वसूनाम्। यः। रायाम्। आनेता। आ। नेता। यः। इडानाम्। सोमः। यः। सुक्षितीनाम्। सु। क्षितीनाम्॥ यस्य। ते। इन्द्रः। पिबात्। यस्य। मरुतः। यस्य। वा। अर्यमणा। भगः। आ। येन। मित्रा। मि। त्रा। वरुणा। करामहे। आ। इन्द्रम्। अवसे। महे॥

---

तमन्वाऽ२३४साः ॥ श्रीः ॥ तुवेवाऽ२३४इश्वे। सजोषाऽ२३४साः ॥ देवासाऽ२३४ऽपी। तिमाशाऽ२३४ता ॥ सदाइपूऽ२३४सा। वेवाआऽ२३४सो ॥ औऽ३होइ। इहहाहहाइ। औऽ२होऽ२३४५वाऽ६५६ ॥ एऽ३। उपाऽ२३४५ ॥
दी. ३. उत. न. मा. ३७. रे. ॥१११॥

१२. दीर्घम्। भरद्वाजः। यवमध्या गायत्री। पवमानस्सोमः॥

साम्रु॥ न्वेयोवसूऽ२३नाम्। योराऽ२यामाऽ२। नेतायइडाऽ२३नाम् ॥ सोऽ२३माः ॥ यस्सुक्षिताऽ२३४इनोऽ६"हाइ ॥ श्रीः ॥ सोमाः। यस्सुक्षिताऽ२३इनाम्। यास्याऽ२ताईऽ२। द्रःपिबाद्यस्य-मरूऽ२३ताः। यास्याऽ२ताईऽ२। द्रःपिबाद्यस्यमरूऽ२३ताः ॥ वाऽ२३-स्या ॥ वार्यमणामाऽ२३४गोऽ६"हाइ ॥ श्रीः ॥ यास्या ॥ वार्यमणामा-



१४७. पर्वतनारदौ काण्वौ। उष्णिक्। पवमानः सोमः ॥

४४८. तं वस्सखायो मदाय पुनानमभि गायत ।
शिशुन्न हव्यैस्स्वदयन्त गूर्तिभिः ॥१॥

४४९. सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते ।
देवावीर्मदो मतिभिः परिष्कृतः ॥२॥

४५०. अयं दक्षाय साधनोऽयꣳशर्द्धाय वीतये ।
अयं देवेभ्यो मधुमत्तरस्सुतः ॥३॥
धा. १७. उ. न. स्व. ३ पि. ॥१९॥

---

१४७. तम्। वः। सखायः। स। खायः। मदाय। पुनानम्। अभि। गायत। शिशुम्। न। हव्यैः। स्वदयन्त। गूर्तिभिः॥ सम्। वत्सः। इव। मातृभिः। इन्दुः। हिन्वानः। अज्यते। देवावीः। देव। अवीः। मदः। मतिभिः। परिष्कृतः। परि। कृतः॥ अयम्। दक्षाय। साधनः। अयम्। शर्द्धाय। वीतये। अयम्। देवेभ्यः। मधुमत्तरः। सुतः॥

---

ऽ२३गाः। आयेऽ२नामीऽ२। त्रावरुणाकरामाऽ२३हाइ। आयेऽ२नामीऽ२। त्रावरुणाकरामाऽ२३हाइ ॥ आऽ२३इन्द्राम् ॥ अवसेमाऽ२३४होऽ६"हाइ ॥
दी. १७. उत्. ३. मा. २०. जो. ॥११२॥

१३. कार्णश्रवसम् ॥ कर्णश्रवा आङ्गिरसः। उष्णिक्। पवमानस्सोमः॥

ताऽ२३४म्वः। साऽ२३४खा ॥ योमदाऽ२३या। पूनानम। भिगायाऽ२३ता ॥ शाइशुम्नह। व्येस्वदयाऽ२३ ॥ तगूर्तिभाऽ२३४३इः ॥ श्रीः ॥ साऽ२३४म्व। त्साऽ२३४ई ॥ वमातृऽ२३भाइः। आइन्दुर्हिन्वा। नोअज्याऽ२३ताइ ॥ दाइवावीर्म। दोमतिभाऽ२३इः ॥ परिष्कृताऽ२३४३ः ॥ श्रीः ॥ आऽ२३४यम्। दाऽ२३४क्षा ॥ यसाधाऽ२३नाः। आयश-

१४८. मनुस्त्वांवरणः । अनुष्टुप् । पवमानः सोमः ॥

४५१. सोमा पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसस्वाध्यस्स्वर्विदः ॥१॥

४५२. ते पूतासो विपश्चितस्सोमासो दध्याशिरः ।
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥२॥

४५३. सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितस्समस्वरन्वसुविदः ॥३॥

धा १०. उ. न. स्व. २, २०. वा. ॥२०॥

१४८. सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्तमाः । गातु । वित्तमाः । मित्राः । मि । त्राः । स्वानाः । अरेपसः । अ । रेपसः । स्वाध्यः । सु । आध्यः । स्वर्विदः । स्वः । विदः ॥ ते । पूतासः । विपश्चितः । विपः । चितः । सोमासः । दध्याशिरः । दधि । आशिरः । सूरासः । न । दर्शतासः ।

शुद्धी । यपीताऽ२३याइ ॥ आयन्दवे । स्योमधुमाऽ२३ । तरस्सुताऽ३४३ः । औऽ२३४५इ ॥डा॥ दी. १. ७. उत्. ६. मा. १९. चो. ॥११३॥

१४. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ।

सोमाः । पवाऽ३ । तइन्दवाः । अस्मभ्यङ्गातुवित्तमाऽ२३ः । माइत्रास्वानाऽ३१२३ः । अरेऽ५पसाः ॥ स्वाधियाऽ३१२३ः ॥ सुवोवा । वाऽ५इदोऽ६ हाइ ॥ श्रीः ॥ तेपू । तासोऽ३ । विपश्चिताः ॥ सोमासोद-दध्याशिराऽ२३ः । सूरासोनाऽ३१२३ । दर्शाऽ५तासाः ॥ जाइगत्नवा-ऽ३१२३ः ॥ ध्रुवोवा । घाऽ५तोऽ६ हाइ ॥ श्रीः ॥ सुष्वा । णासोऽ३ । वियद्रिसाइः ॥ चितानागोरधित्वचाऽ२३इ । आइषमस्माऽ३१२३ । भ्यमा-ऽ५भिताः ॥ सामस्वराऽ३१२३न् ॥ वसोवा । वाऽ५इदोऽ६हाइ ॥

दी. २१. उत्. न. मा. २४. ही ॥११४॥



जिगत्नवः । ध्रुवाः । घृते ॥ सुष्वाणासः । वि । अद्रिभिः । अ । द्रिभिः । चितानाः । गोः । अधि । त्वचि । इषम् । अस्मभ्यम् । अभितः । सम् । अस्वरन् । वसुविदः । वसु । विदः ॥

१५. मधुश्चुन्निधनम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽ५पवन्तइन्दवाऽ३इ ॥ अस्मभ्यङ्गाऽ३तुवित्तमाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । मित्रास्वानाऽ३आरेपसाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥ स्वाधियाऽ३ः । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥ सुवः । वाऽ२इदाऽ२३४औहोवा ॥ श्रीः ॥ तेपूतासोविपश्चिता-ऽ३इ ॥ सोमासोदऽ३धआशिराऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । सूरासोनऽ३दार्शतासाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥ जाइगत्नवाऽ३ः । हाऽ३हाइ । औऽ३होऽ३वा ॥ आइहीऽ२ ॥ ध्रुवाः । घाऽ२ताऽ२३४औहोवा ॥श्रीः॥ सुष्वाणासोविअद्रिभा-ऽ३इः ॥ चितानागोऽ३अधित्वचाऽ३ । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ । इषमस्मऽ३भ्यामभिताऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥ सामस्वराऽ३न् । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥ वसु । वाऽ२इदाऽ२३४औहोवा । मधुश्चुताऽ२३४५ः ॥

दी. ३२. उत्. ४. मा. ३५. चु. ॥११५॥

१६. पाष्ठिनिधनं कौत्सम् ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽ५पावाऽ३१२३४ । तइ । दवाऽ३ः ॥ अस्मभ्यंगाऽ३१२३४ । तुवि । तमाऽ३ः ॥ मित्रास्वानाऽ३१२३४ः । अरे । पसाऽ३ः ॥ सुवाधीयाऽ३१२३ः ॥ सुवाऽ५र्विदाउ ॥ श्रीः ॥ तेपूतासोऽ३१२३४ ।

२०२. भरद्वाजो बार्हस्पत्यः। गायत्री। पवमानः सोमः॥

६७३. त्वꣳसोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे। पवस्व मꣳहयद्रयिः॥१॥

६७४. त्वꣳसुतो मदिन्तमो दधन्वान्मत्सरिन्तमः। इन्दुस्सत्राजिदस्तृतः॥२॥

६७५. त्वꣳसुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्। द्युमन्तꣳशुष्ममा भर॥३॥

धा. १४. उ. न. स्व. ४. ली.॥१६॥

---

२०२. त्वम्। सोम। असि। धारयुः। मन्द्रः। ओजिष्ठः। अध्वरे। पवस्व। मꣳहयद्रयिः। मꣳहयन्। रयिः। त्वम्। सुतः। मदिन्तमः। दधन्वान्। मत्सरिन्तमः। इन्दुः। सत्राजित्। सत्रा। जित्। अस्तृतः॥ अ। स्तृतः॥ त्वम्। सुष्वाणः। अद्रिभिः। अ। द्रिभिः। अभि। अर्ष। कनिक्रदत्। द्युमन्तम्। शुष्मम्। आ। भर॥

---

११. आश्वसूक्तम्। आश्वसूक्तिः। गायत्री। पवमानस्सोमः॥

आऔहोवाहाइ। तुवꣳसोमा॥ सिधा। रयुः। एहीयेही॥१। मान्द्रओजिष्ठोआध्वरे। एहीयेहीऽ१॥ आऽ२इ। पावाऽ२स्वामाऽ२॥ हयत्। राऽ२याऽ२३४औहोवा॥ श्रीः॥ आऔहोवाहाइ। तुवꣳसुताः॥ मदाइ। तमः। एहीयेहीऽ१। दाधन्वान्मत्सराइन्तमः। एहीयेहीऽ१॥ आऽ२इ। आइन्दूऽ२स्सात्राऽ२॥ जिद्। स्ताऽ२र्ताऽ२३४औहोवा॥श्रीः॥ आऔहोवाहाइ। तुवꣳसुष्वा॥ णोआ। द्रिभिः। एहीयेहीऽ१। आभियर्ष-कनाइक्रदत्। एहीयेहीऽ१॥ आऽ२इ। द्युमाऽ२न्ताꣳशूऽ२॥ ष्ममा। भाऽ२राऽ२३४औहोवा। शुक्रआहुताऽ२३४५ः॥

दी. ३५. उत्. ७. मा. २८. फै.॥१६१॥

१२. शाम्मदम्। शम्मदाङ्गिरसः। गायत्री। पवमानस्सोमः॥

तुवꣳसोमासिए। होएहीऽ२३४या॥ धारयुरेऽ२हीएऽ२हीऽ३या। मान्द्रओजिष्ठोअध्वरएऽ२हीएऽ२हीऽ३या॥ पावास्वामाऽ३१२३॥ हयो-ऽ२३४वा। राऽ५योऽ६"हाइ॥श्रीः॥ तुवꣳसुतोमए। हीएहीऽ२३४या॥ दिन्तमएऽ२हीएऽ२हीऽ३या। दधन्वान्मत्सरिन्तमएऽ२हीएऽ२हीऽ३या॥ आइन्दुस्सात्राऽ३१२३॥ जिदोऽ२३४वा। स्ताऽ५र्तोऽ६"हाइ॥ श्रीः॥ तुवꣳसुष्वाणए। हीएहीऽ२३४या॥ अद्रिभिरेऽ२हीएऽ२हीऽ३या। अभि-यर्षकनिक्रददेऽ२हीएऽ२हीऽ३या॥ द्युमान्ताꣳशूऽ३१२३॥ ष्ममोऽ२३४-वा। भाऽ५रोऽ६"हाइ॥ दी. ११. उत्. ३. मा. २१. ग.॥१६२॥



१३. दावसुनिधनम्॥ दावसुराङ्गिरसः। गायत्री। पवमानस्सोमः॥

तुवꣳसोऽ२३मासिधारयुहाउ॥ मान्द्रओजि। होआध्वाऽ१रा-ऽ२३इ। होवाऽ३हाइ॥ पवास्वाऽ१माऽ२३। होवाऽ३हा॥ हयत्। राऽ२याऽ२३४औहोवा॥श्रीः॥ तुवꣳसूऽ२३तोमदिन्तमोहाउ॥ दाधन्वान्म। त्सराइन्ताऽ१माऽ२३ः। होवाऽ३हाइ॥ इन्दूस्साऽ१त्राऽ२३। होवाऽ३हा॥ जिद्। स्ताऽ२र्ताऽ२३४औहोवा॥श्रीः॥ तुवꣳसूऽ२३ष्वाणोअद्रिभिहाउ॥ आभियर्ष। कनाइक्राऽ१दाऽ२३त्। होवाऽ३हाइ॥ द्युमान्ताऽ१ꣳशूऽ२३। होवाऽ३हा॥ ष्ममा। भाऽ२राऽ२३४औहोवा॥ एऽ३। दावसूऽ२३४५॥

दी. १७. उत्. १०. मा. १८. पे.॥१६३॥

१४. प्रतीचीनेडं काशीतम्॥ काशीतः। गायत्री। पवमानस्सोमः॥

त्वꣳसोमासि। धाऽ२रयुः॥ मान्द्रओजि। ष्ठोआध्वराऽ२३४इ। हाहोइ॥ पवस्वमाꣳहाऽ३यान्॥ रयाइः। औऽ२३होवा॥ श्रीः॥ त्वꣳसुतोम। दाऽ२इन्तमाः॥ दाधन्वान्म। त्सराइन्तमाऽ२३४ः। हाहोइ॥ इन्दुस्सत्राजोऽ३दा॥ स्तृता। औऽ३होवा॥श्रीः॥ त्वꣳसुष्वाणः। आऽ२द्रिभाइः॥ आभियर्ष। कनाइक्रदाऽ२३४त्। हाहोइ॥ द्युमन्तꣳशू-ष्माऽ३मा॥ भरा। औऽ३होवा॥ ईडा॥

दी. १०. उत्. ६. मा. १९. पो.॥१६४॥

२०३. मनुराप्सवः। उष्णिक्। पवमानः सोमः।

६७६. पवस्व देववीतय इन्दो धाराभिरोजसा ।
आ कलशं मधुमान्त्सोम नस्सदः ॥१॥

६७७. तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः ।
त्वान्देवासो अमृताय कं पपुः ॥२॥

२०३. पवस्व। देववीतये। देव। वीतये। इन्दो। धाराभिः। ओजसा। आ। कलशम्। मधुमान्। सोम। नः। सदः॥ तव। द्रप्साः। उदप्रुतः। उद।

१५. हाविष्कृतम्॥ हविष्कृत्। गायत्री। पवमानस्सोमः॥

त्वꣳसोमासिधाहाउरायूः॥ मन्द्रओजाइ। ष्ठोआध्वाऽ२३राइ॥ पवाऽ२होऽ१। स्वाऽ२३सा॥ हयत्। राऽ२याऽ२३४औहोवा॥ श्रीः॥ त्वꣳसुतोसदाहाउन्तामाः॥ दधन्वान्मा। त्सरिन्ताऽ२३माः॥ इन्दूऽ२हों-ऽ१इ। साऽ२३त्रा॥ जिद्। स्ताऽ२तोऽ२३४औहोवा॥ श्रीः॥ त्वꣳसुष्वाणआहाउद्राइभाइः॥ अभियर्षा। कनिक्राऽ२३दात्॥ द्युमाऽ२-होऽ१। ताऽ२३४शू॥ ष्मभा। भाऽ२राऽ२३४औहोवा॥ हविष्कृते-ऽ२३४५॥

दी. २०. उत्. १०. मा. २०. मौ.॥१६५॥

१६. [1]स्वारꣳसौपर्णम्॥ सुपर्णः। ककुप्। पवमानस्सोमः।

त्वꣳह्यङ्गदैवाऽ३या॥ पवमानजनिमानिद्युमा। हुम्। ताऽ२३४माः॥ आमाऽ२३उवा॥ तात्वा। यघोऽ२३४वा। षाऽ६योऽ६"हाइ॥ श्रीः॥ अमृतत्वायघोषाऽ३यान्॥ येनानवग्वादध्यङ्पो। हुम्। र्णुऽ२३४ताइ॥ याइनाऽ३उवा॥ विप्रा। सओऽ२३४वा। पाऽ५इरोऽ६"हाइ॥ श्रीः॥ येनविप्रासआपाऽ३इराइ॥ देवानाꣳसुम्नेअमृतस्यचा। हुम्। रुऽ२३४णाः॥ याइनाऽ३उवा॥ श्रवा। सियोऽ२३४वा। शाऽ५तोऽ६"हाइ॥

दी. २२. उत्. ६. मा. २१. च.॥१६६॥

[1] प्रततमे सूक्ते गीयते।



६७८. आ नस्सुतास इन्दवः पुनाना धावता रयिम् ।
वृष्टिद्यावो रीत्यापस्स्वर्विदः ॥३॥

धा. १६. उ. न. स्व. न. वौ.॥१७॥

२०४. अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च। अनुष्टुप्। पवमानः सोमः॥

६७९. परित्यꣳहर्यतꣳहरिं बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाꣳ इत्परि मदेन सह गच्छति ॥१॥

६८०. द्वियं पञ्च स्वयशसꣳसखायो अद्रिसꣳहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥२॥

६८१. इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥

धा. २२. ड. ३ स्व. ४. जी.॥१८॥

प्रतः। इन्द्रम्। मदाय। वावृधुः। त्वाम्। देवासः। अमृताय। क। सुताय। कम्। पपुः॥ आ। नः। सुतासः। इन्दवः। पुनानाः। धावत। रयिम्। वृष्टिद्यावः। वृष्टि। द्यावः। रीत्यापः। रीति। आपः। स्वर्विदः। स्वः। विदः॥

२०४. परि। त्यम्। हर्यतम्। हरिम्। बभ्रुम्। पुनन्ति। वारेण। यः। देवान्। विश्वान्। इत्। परि। मदेन। सह। गच्छति॥ द्विः। यम्। पञ्च।

१७. वैयश्वम्। (वैश्वमनसम्। विश्वमनाः।) ककुप्। पवमानस्सोमः॥

पवस्वदेववीताऽ३याइ॥ आइन्दोधाराऽ२। भिरोऽ३४५। जसआकलशम्मधुमान्त्सोऽ२३४५॥ मनाऽ२ः॥ सादाऽ२आऽ२३४-औहोवा॥ श्रीः॥ तवद्रप्साउदप्रूऽ३ताः॥ आइन्द्रंमदाऽ२। यवाऽ३४५। वृधुस्त्वान्देवासोअमृताऽ२३४५॥ यकाऽ२म्॥ पापूऽ२राऽ२३४-औहोवा॥ श्रीः॥ आनस्सुतासइन्दाऽ३वाः॥ पूनानाधाऽ२। वताऽ३४५। रयिमावृष्टिद्यावोरीत्यापाऽ२३४५ः॥ सुवाऽ२ः॥ वाइदाऽ२आऽ२३४-औहोवा॥ उऽ२३४५॥

दी. २७. उत्. न. मा. १६. यो.॥१६७॥

स्वयशसम । स्व । यशसम । सखायः । स । खायः । अद्रिसं२हतम । अद्रि ।
संहतम् । प्रियम् । इन्द्रस्य । काम्यम । प्रस्नापयन्ते । प्र । स्नापयन्ते । ऊर्मयः ॥
इन्द्राय । सोम । पातवे । वृत्रघ्ने । वृत्र । घ्ने । परि । सिच्यसे ॥ नरे । च ।
दक्षिणावते । वीराय । सदनासदे । सदन । सदे ॥

---

१८. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

परि । त्यं२हाऽ३ । र्यत२हराइम् ॥ वभ्रुंपुनन्तिवारेणाऽ२३ ।
योदेवान्वीऽ३१२३इ । श्वाइआऽ५इत्पराइ ॥ मादेनसाऽ३१२३ ॥ हगोवा ।
छाऽ५तोऽ६''हाइ ॥ श्रीः ॥ द्विर्यम् । पञ्चाऽ३ । स्वयशसाम् ॥ सखा-
योअद्रिसं२हताऽ२३म् । प्रायमिन्द्राऽ३१२३ । स्यकाऽ५मियाम् ॥ प्रस्ना-
पयाऽ३१२३ ॥ तऊर्वा । माऽ५योऽ६''हाइ ॥श्रीः॥ इन्द्रा । यसोऽ३ ।
मपातवाइ ॥ वृत्रघ्नेपरिषिच्यसाऽ२३इ । नारेचदाऽ३१२३ । क्षिणाऽ५वताइ ।
वाइरायसाऽ३१२३ ॥ दनोवा । साऽ५दोऽ६''हाइ ॥

दी. १४. उत् . न. मा. १९. लो. ॥१९८॥

१९. निहवम् ॥ वसिष्टः । अनुष्टुप् । पवमानस्सोमः ॥

आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाइ । परित्यं२ह-
र्यतऽ३२हाराऽ३इम् । हाराइम् । हरा । ओऽ२३४वा । हाइ ॥ वभ्रुंपुन-
न्तिवाऽ३रेणाऽ३ । रेणा । रेणा । ओऽ२३४वा । हाइ ॥ योदेवान्वि-
श्वा२इऽ३त्पाराऽ३इ । पाराइ । परा । ओऽ२३४वा । हाइ ॥ मदेनसहग-
ऽ३च्छाताऽ३इ । छाताइ । छता । ओऽ२३४वा । हाइ ॥ श्रीः ॥ द्विर्यं-
पञ्चस्वयऽ३शासाऽ३म् । शासाम् । शसा । ओऽ२३४वा । हाइ ॥ सखा-
योअद्रिसऽ३२हाताऽ३म् । हाताम् । हता । ओऽ२३४वा । हाइ ॥ प्रिय-
मिन्द्रस्यकाऽ३मायाऽ३म् । मायाम् । मिया । ओऽ२३४वा । हाइ ॥
प्रस्नापयन्तऊऽ३र्मायाऽ३ः । मायाः । मया । ओऽ२३४वा । हाइ ॥श्रीः॥
इन्द्रायसोमपाऽ३ताताऽ३इ । तावाइ । तवा । ओऽ२३४वा । हाइ ॥
वृत्रघ्नेपरिषिऽ३च्याताऽ३इ । च्यासाइ । च्यसा । ओऽ२३४वा । हाइ ॥
नरेचदक्षिणाऽ३वाताऽ३इ । वाताइ । वता । ओऽ२३४वा । हाइ ॥ वीरा-
यसदनाऽ३सादाऽ३इ । सादाइ । सदा । ओऽ२३४वा । हाइ । आइहीऽ३ ।
आइही । एहिया । ओऽ२३४वा । हाऽ३४ । औहोवा ॥ ईऽ२३४५ ॥

दी. २५. उत् . न. मा. ४४. वी. ॥१९९॥

२०. यद्वाहिष्ठीयोत्तरम् ॥ अग्निः । अनुष्टुप् । पवमानस्सोमः ॥

परित्यं२हर्यतं२हरिम् । परित्यं२हौवा ॥ र्यतं२हराइम् । वभ्रुंपू-
ऽ२३ना । निवारेणा । योदेवाऽ२३न्वाइ । श्वा२इत्पराइ ॥ मदेनाऽ२३सा ॥
हगच्छाऽ२३ताऽ३४३इ ॥ श्रीः ॥ द्विर्यंपञ्चस्वयशसम् । द्विर्यंपञ्चौवा ॥
स्वयशसाम् । सखायोऽ२३आ । द्रिसं२हताम् । प्रियमाऽ२३इन्द्रा । स्य-
कामियाम् ॥ प्रस्नापाऽ२३या ॥ तऊर्माऽ२३याऽ३४३ः ॥ श्रीः ॥ इन्द्राय-
सोमपातवे । इन्द्रायसोवा ॥ मपातवाइ । वृत्रघ्नाऽ२३इपा । रिषिच्यसाइ ।
नरेचाऽ२३दा । क्षिणावताइ । वीरायाऽ२३सा । दनासाऽ२३दाऽ३४३इ ।
ओऽ२३४५इ ॥डा॥

दी. २१. उत् . १५. मा. २१. क. ॥२००॥

॥ इति पञ्चमः प्रपाठकः ॥

॥ दशमो विंशः ॥

१. आसितायम ॥ असितः । अनुष्टुप् । पवमानस्सोमः ॥

परित्यं२हर्यताम् ॥ हराइम् । वभ्रुंपुनन्तिवारेऽ२३णा । योदेऽ२-
वान्वाऽ२इ । श्वा२इत्पराइ ॥ मादेऽ२नासाऽ२ ॥ हगोवाऽ३ओऽ२३४वा ।
छाऽ५तोऽ६''हाइ ॥ श्रीः ॥ द्विर्यंपञ्चस्वया ॥ शसाम् । सखायोअद्रिसं२हा-
ऽ२३ताम् । प्रायाऽ२माइन्द्राऽ२ । स्यकामियाम् ॥ प्रास्नाऽ२पायाऽ२ ॥
तऊवाऽ३ओऽ२३४वा । माऽ५योऽ६''हाइ ॥ श्रीः ॥ इन्द्रायसोमपा ॥

२०५. अग्नयो धिष्ण्या ऐश्वराः । अक्षरपङ्क्तिः । पवमानः सोमः ॥

६८२. पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥१॥

६८३. प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥२॥

६८४. शिशुञ्जज्ञानꣳहरिं मृजन्ति पवित्रे सोमन्देवेभ्य इन्दुम् ॥३॥

धा. ११. उ. १. स्व. २. का. ॥१६॥

२०६. अमहीयुराङ्गिरसः । गायत्री । पवमानः सोमः ॥

६८५. उपो षु जातमप्तुरङ्गोभिर्भङ्गं परिष्कृतम् । इन्दुन्देवा अयासिषुः ॥१॥

---

२०५. पवस्व । सोम । महे । दक्षाय । अश्वः । न । निक्तः । वाजी । धनाय ॥ प्र । ते । सोतारः । रसम् । मदाय । पुनन्ति । सोमम् । महे । द्युम्नाय ॥ शिशुम् । जज्ञानम् । हरिम् । मृजन्ति । पवित्रे । सोमम् । देवेभ्यः । इन्दुम् ॥

२०६. उप । उ । सु । जातम् । अप्तुरम् । गोभिः । भङ्गम् । परिष्कृतम् । परि । कृतम् । इन्दुम् । देवाः । अयासिषुः ॥ तम् । इत् । वर्धन्तु । नः । गिरः ।

---

तवाइ । वृत्रघ्नेपरिषिच्याऽ२३साइ । नारेऽ२चादाऽ२ । क्षिणावताइ ॥ वाइराऽ२यासाऽ२ ॥ दनोवाऽ३ओऽ२३४वा । साऽ५दोऽ६"हाइ ॥

दी. ९. उत्. ६. मा. २२. ता. ॥२०१॥

२. साध्रम् ॥ सध्रः । अनुष्टुप् । पवमानस्सोमः ॥

परित्याऽ३ꣳहर्यतꣳहराइम् ॥ बभ्रुंपुनाऽ२ । तिवाऽ३४५ । रेऽ२३४-णा । योदेवान्विश्वाँइत्पराऽ२३४५इ ॥ मादाओऽ२३४वा । नासाओ-ऽ२३४वा ॥ हगाऽ५च्छताइ ॥ श्रीः ॥ द्वियंपाऽ३श्वस्वयशसाम् ॥ सखायो-आऽ२ । द्रिसाऽ३४५ । हाऽ२३४ताम् । प्रियमिन्द्रस्यकामियाऽ२३४५म् ॥ प्रस्नाओऽ२३४वा । पायाओऽ२३४वा ॥ तऊऽ५र्मयाः ॥ श्रीः ॥ इन्द्राया-ऽ३सोमपातवाइ ॥ वृत्राघ्नेपाऽ२ । रिषाऽ३४५इ । च्याऽ२३४से । नरेच-दक्षिणावताऽ२३४५इ ॥ वाइराओऽ२३४वा । यासाओऽ२३४वा ॥ दना-ऽ५सदाइ । हौऽ५इ ॥डा॥

दी. १२. उत्. ४. मा. २३. शि. ॥२०२॥

३. आकूपारम् ॥ अकूपारः काश्यपः । अनुष्टुप् । पवमानस्सोमः ॥

परित्याऽ२३ꣳहर्यं । त हाऽ२३४राइम् ॥ बभ्रूऽ२म्पुना । तिवा-रेणा । योदेवान्वाऽ२इ । श्वाꣳइत्पराइ ॥ मदेनासाऽ२३ ॥ हाऽ२३गाऽ३ । छाऽ३४५तोऽ६"हाइ ॥ श्रीः ॥ द्वियंपाऽ२३श्वस्व । यशाऽ२३४साम् ॥ सखाऽ२योआ । द्रिसꣳहताम् । प्रियमाइन्द्राऽ२ । स्यकामियाम् ॥ प्रस्ना-पायाऽ२३ ॥ ताऽ२३ऊऽ३ । र्माऽ३४५योऽ६"हाइ ॥श्रीः॥ इन्द्रायाऽ२३-सोम । पाताऽ२३४वाइ ॥ वृत्राऽ२घ्नेपा । रिषिच्यसाइ । नरेचादाऽ२ । क्षिणावताइ ॥ वीरायासाऽ२३ ॥ दाऽ२३नाऽ३ । साऽ३४५दोऽ६"हाइ ॥

दी. १७. उत्. १५. मा. १७. वे. ॥२०३॥

४. विधर्म ॥ प्रजापतिः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

ओहोऽ३वा ( द्विः ) । ओहोऽ२वाऽ२३४ओहोऽ६वा । पवस्वसोम-महेदक्षायाऽ२३४५ ॥ अश्वोननिक्तोवाऽ२जीधनाऽ२याऽ२३४५ ॥ श्रीः ॥ प्रतेसोतारोरसम्मदायाऽ२३४५ ॥ पुनन्तिसोमंमहेद्युम्नायाऽ२३४५ ॥ श्रीः ॥ शिशुञ्जज्ञानंहरिंमृजन्तीऽ२३४५ ॥ पवित्रेसोमंदेवेभ्यइन्दूऽ२३४५म् ॥ श्रीः ॥ पवस्वसोमाऽ२३४५ ॥ महेदक्षायाऽ२३४५ ॥ अश्वोननिक्ताऽ१ः ॥ वाजी-धनाऽ२याऽ२३४५ ॥श्रीः॥ प्रतेसोताराऽ२३४५ः ॥ रसंमदायाऽ२३४५ ॥ पुनन्तिसोमाऽ२३४५म् ॥ महेद्युम्नायाऽ२३४५ ॥श्रीः॥ शिशुञ्जज्ञानाऽ१म् ॥ हरिंमृजन्तीऽ२३४५ ॥ पवित्रेसोमाऽ२३४५म् ॥ देवेभ्यइन्दूऽ२३४५म् । ओहोऽ३वा ( द्विः ) । ओहोऽ२वाऽ२३४ओहोऽ६वा ॥ एऽ३ । विधर्मा-ऽ२३४५ ॥

दी. ४५. उत्. १०. मा. ११. म. ॥२०४॥

५. शुध्यम् ॥ प्रजापतिः । गायत्री । पवमानस्सोमः ॥

उपोषुजाऽ२तम् । अप्तुरोवा ॥ गोभिर्भङ्गम् । परिष्कृताम् ।

६८६. तमिद्वर्द्धन्तु नो गिरो वत्सꣳसꣳशिश्वरीरिव । 
य इन्द्रस्य हृदꣳसनिः ॥२॥

६८७. अर्पा नस्सोम शङ्गवे धुक्षस्व पिप्युपीमिषम् । वर्द्धा समुद्रमुक्थ्य ॥३॥
धा ११. उ. न. स्व. ४. ही. ॥२०॥

एकादशः खण्डः ॥

२०७. त्रिशोकः काण्वः । गायत्री । अग्नीन्द्रौ ॥

६८८. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥१॥

---

वत्सम् । सꣳशिश्वरीः । सम् । शिश्वरीः । इव । यः । इन्द्रस्य । हृदꣳसनिः । हृदम् । सनिः ॥ अर्प । नः । सोम । शम् । गवे । धुक्षस्व । पिप्युषीम् । इषम् । वर्ध । समुद्रम् । सम् । उद्रम् । उक्थ्य ॥

२०७. आ । घ । ये । अग्निम् । इन्धते । स्तृणन्ति । बर्हिः । अनुषक् । अनु । सक् । येषाम् । इन्द्रः । युवा । सखा । स । खा ॥ बृहन् । इत् । इध्मः । एषाम् । भूरि । शस्तम् । पृथुः । स्वरुः । येषाम् । इन्द्रः । युवा । सखा । स ।

---

इन्दुन्दवाउ । याऽ२३ ॥ सिपाउवा । श्रूधियाऽ२ ॥श्रीः॥ तमिद्वर्धाऽ२न्तु । नोगिरोवा ॥ वत्सꣳसꣳशाइ । श्वरीरिवा । यइन्द्रस्यहृ । दाऽ२३म् । सनाउवा ॥ श्रूधियाऽ२ ॥श्रीः॥ अर्पानस्सोऽ२म । शङ्गवोवा ॥ धुक्षस्वपाइ । प्युषीमिषाम् । वर्धासमुद्रम् । ऊ२३ । क्थियाउवा ॥ श्रूधियाऽ२ ॥ एऽ२३हि-याऽ३४३ । औऽ२३४५इ ॥डा॥ दी. १२. उत्. ६. मा. १४. ची. ॥२०५॥

६. ऐध्मवाहम् । इध्मवाहः । गायत्री । अग्नीन्द्रौ ॥

आघायेअग्निमिन्धाताइ ॥ स्तृणन्तिबर्हिरानुषाक् ॥ श्रीः ॥ बृहन्नि-दिध्मआइषाम् ॥ भूरिशस्तंपृथुस्वरुः ॥ श्रीः ॥ अयुद्धइद्युधावाताम् ॥ शूरआजतिसत्वभाइः ॥ येषामिन्द्रोयुवाइहा ॥ ऊवाइ । ऊवोऽ२३४ । वा । साऽ५खोऽ६"हाइ ॥ दी. १२. उत्. ५. मा. १५. नु. ॥२०६॥



६८९. बृहन्निदिध्म एषां भूरि शस्तं पृथुस्स्वरुः । येषामिन्द्रो युवा सखा ॥२॥

६९०. अयुद्ध इद्युधा वृतꣳशूर आजति सत्वभिः । येषामिन्द्रो युवा सखा ॥३॥
धा. ३. उ. २. स्व. १. ठ. ॥२१॥

२०८. गोतमो राहूगणः । उष्णिक् । इन्द्रः ॥

६९१. य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥१॥

६९२. यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
उग्रन्तत्पत्यते शव इन्द्रो अङ्ग ॥२॥

६९३. कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कदा नश्शुश्रवद्गिर इन्द्रो अङ्ग ॥३॥
धा. ११. उ. १. स्व. ३. कि ॥२२॥

---

खा ॥ अयुद्धः । अ । युद्धः । इत् । युधा । वृतम् । शूरः । आ । अजति । सत्वभिः । येषाम् । इन्द्रः । युवा । सखा । स । खा ॥

२०८. यः । एकः । इत् । विदयते । वि । दयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिष्कुतः । अ । प्रतिष्कुतः । इन्द्रः । अङ्ग ॥ यः । चित् । हि । त्वा । बहुभ्यः । आ । सुतावान् । आविवासति । आ । विवासति । उग्रम् । तत् । पत्यते । शवः । इन्द्रः । अङ्ग ॥ कदा । मर्तम् । अराधसम् । अ । राधसम् । पदा । क्षुम्पम् । इव । स्फुरत् । कदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ॥

---

७. त्रैककुभम् ॥ त्रिककुप् । उष्णिक् । इन्द्रः ॥

यएकइद्विदायाऽ२ताइ ॥ वासुमर्तायाऽ२दा । हुम् । शूऽ२३४षाइ । आइशानोअप्रतिष्कुतः । ओइशा । नोअप्रताइ ॥ स्कूऽ२३४ताः ॥ श्रीः ॥ यश्चिद्धित्वाबहुभ्याऽ२आ ॥ सुतावाँआवीऽ२वा । हुम् । साऽ२३४ताइ । उग्रन्तत्पत्यतेशवः । ऊग्रम् । तत्पत्यताइ ॥ वाऽ२३४वाः ॥ श्रीः ॥

२०९. मधुच्छन्दा वैश्वामित्रः । अनुष्टुप् । इन्द्रः ॥

६९४. गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वꣳशमिव येमिरे ॥१॥

६९५. यत्सानोस्सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थञ्चेतति यूथेन वृष्णिरेजति ॥२॥

६९६. युङ्क्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिञ्चर ॥३॥

धा. २५. उ. ३. स्व. ४. बी. ॥२३॥

द्वादशः खण्डः ॥

इति दशमोऽध्यायः ॥

पञ्चमप्रपाठकस्य द्वितीयोऽर्धः ॥

---

२०९. गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ।
ब्रह्माणः । त्वा । शतक्रतो । शत । क्रतो । उत् । वꣳशम् । इव । येमिरे ॥ यत् ।
सानोः । सानु । आरुहः । आ । अरुहः । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः ।
अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ युङ्क्ष्व । हि । केशिना । हरी इति ।
वृषणा । कक्ष्यप्रा । कक्ष्य । प्रा । अथ । नः । इन्द्र । सोमपाः । सोम । पाः ।
गिराम् । उपश्रुतिम् । उप । श्रुतिम् । चर ॥

---

कदामर्तमराधाऽ३सम् ॥ पदाक्षुंपास्नीऽ३वा । हुम् । स्फूऽ२३४राव् ।
कदानश्शुश्रवद्गिरः । कादा । नश्शुश्रवात् ॥ गाऽ२३४इराः ॥ आइन्द्रोअ ।
गाऽ२ । याऽ२३४औहोवा ॥ ईऽ२३४न्द्राः ॥

दी. १८. उत् . २. मा. ३१. ठ. ॥२०७॥

८. उद्वꣳशीयम् ॥ विश्वेदेवाः । अनुष्टुप् । इन्द्रः ॥

गायन्तित्वागायत्रिणआ ॥ अर्चन्त्यर्कमर्काऽ२३इणाः । ब्रह्माण-
स्त्वाऽ२होऽ१इ । शतक्राऽ२३ताउ । उद्वꣳशमिवयाऽ१इमीऽ३रे ॥





उद्वꣳशाऽ२३४र्मा ॥ वायाऽ३२उवाऽ३ । उप् । माऽ२इरोऽ३५हाइ ॥श्रीः॥
यत्सानोस्सान्वारुहआ ॥ भूर्यस्पष्टकर्तूऽ२३वाम् । तदिन्द्राऽ२होऽ१इ ।
अर्थञ्चेताऽ२३ताइ । यूथेनवृष्णिराऽ१इजाऽ३ताइ ॥ यूथेनाऽ२३४व ॥
ष्णाइराऽ३२उवाऽ३ । उप् । जाऽ२तोऽ३५हाइ ॥ श्रीः ॥ युङ्क्ष्वाहिके-
शिनाहरीआ । वृषणाकक्षियाऽ२३प्रा । अथानाऽ२होऽ१इ । इन्द्रसोमा-
ऽ२३पाः । गिरामुपश्रुताऽ१इञ्चाऽ३र ॥ गिरामूऽ२३४पा ॥ श्रूताऽ३२-
उवाऽ३ । उप् । चाऽ२रोऽ३५हाइ ॥ दी. २३. उत् . ४. मा. २७. डे. ॥२०८॥

९. आजिगम् ॥ अजिगः । गायत्री । पवमानस्सोमः ॥

उच्चातेजा । तमान्धासाः ॥ दिविसद्भू । मायाऽ१दाऽ२३दाइ ॥
उग्राꣳशार्मा ॥ महिश्राऽ२३वाऽ३४३ः॥श्रीः॥ सनाआइन्द्रा । ययाज्यावाइ ॥
वरुणाय । मारुद्भ्याऽ२३याः । वराइवोवीत् ॥ परिस्राऽ२३वाऽ३४३ ॥श्रीः॥
एनावाइश्वा । निश्रार्याआ ॥ द्युम्नानिमा । नूषाऽ२३णाम् ॥ सिषासान्ताः ॥
वनामाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

दी ६. उत् . ३ मा. १६. गू. ॥२०९॥

१०. आभीकम् ॥ अङ्गिरसः । गायत्री । पवमानस्सोमः ॥

उऽ२३४च्चातेजाऽ५ । तमोहोन्धासाः ॥ दिविसद्भूमियाऽ१दाऽ३दे ॥
उग्रꣳशाऽ२३४र्मा ॥ माहाऽ३२उवाऽ३४३ । श्राऽ३४५वोऽ६हाइ ॥श्रीः॥
साऽ२३४नइन्द्राऽ५ । ययोहोज्यावाइ ॥ वरुणायमरूऽ१द्भ्याऽ३याः ॥
वरिवोऽ२३४वीत् ॥ पाराऽ३२उवाऽ३४३ । स्राऽ३४५वोऽ६हाइ ॥ श्रीः ॥
आऽ२३४इनाविश्वाऽ५ । निषोहोर्याआ ॥ द्युम्नानिमानूऽ१षाऽ३णाम् ॥
सिषासाऽ२३४न्ताः ॥ वानाऽ३२उवाऽ३४३ । माऽ३४५होऽ६हाइ ॥

दी. ११. उत् . १. मा. १५. फु ॥२१०॥

---

[1] अष्टमसूक्ते द्वे सामनी गीयेते ।

उत्सेधः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया । पः । वसाऽ३४औहोवा ॥ नोअर्षसाऽ२इ । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ आराऽ३त्नधा । औहोवाहाइ ॥ योनिमृता । स्यसीदासि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ उत्सोऽ३देवः । औहोवा- हाइ ॥ हिराऽ३ण्ययाऽ५याऽ६५६: ॥ श्रीः ॥ उत्सोदेवोहिरण्ययः । उत्सः । देवाऽ३४औहोवा ॥ हिरण्ययाऽ२: । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ दुहाऽ३नऊ । औहोवाहाइ ॥ धार्दिवियाम् । मधुप्रायम् । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ प्रत्नाऽ३२सध । औहोवाहाइ ॥ स्थमाऽ३माऽ५दाऽ६५६त् ॥ श्रीः ॥ प्रत्नꣳसधस्थमासदत् । प्रत्नम् । सधाऽ३४औहोवा ॥ स्थमासदाऽ२त् । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ आपाऽ३च्छियाम् । औहोवाहाइ । धारुणंवा । जियर्षसि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ नृभाऽ३इर्धौतः । औहोवाहाइ ॥ विचाऽ३क्षाऽ५णाऽ६५६: ॥ ऊऽ२३४५ ॥

दी. २८. उत्. ६. मा. ३४. टी. ॥२११॥

१२. यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । ककुबुत्तराबृहती । पवमानस्सोमः ॥

पुनाऽ५नः । सोऽ३माऽ३धाराया ॥ आपोवसा । नोऽ३आर्षाऽ३सी । आराऽ२त्नधायोनिमृ । तस्याऽ२३सा । हुम्माइ ॥ दाऽ३२साइ ॥ ऊत्सो- देवोहिराऽ२ण्ययाउ ॥ श्रीः ॥ ऊत्साः ॥ दाइवो । हाऽ३इराण्याऽ३याः । दुहाऽ२नऊधर्दिवि । यम्माऽ२३धू । हुम्माइ । प्राऽ३२याम् । प्रत्नꣳसध- स्थमाऽ२सदाउ ॥ श्रीः ॥ प्रत्नाम् ॥ साधा । स्थाऽ३मासाऽ३दात् । आपाऽ२च्छ्यन्धरुणम् । वाजाऽ२३षा । हुम्माइ ॥ षाऽ३२साइ ॥ नृभि- धौतोविचाऽ२क्षणाउ ॥ वाऽ३४५ ॥

दी. १३. उत्. न. मा. १९. रो. ॥२१२॥

[1] नवमसूक्ते त्रीणि सामानि गीयन्ते ।



अथैकादशोऽध्यायः ।

षष्ठप्रपाठकस्य प्रथमोऽर्धः ॥

२१०. मेधातिथिः काण्वः । गायत्री । इध्मः, समिद्धोग्निर्वा, तनूनपात्, नराशꣳसः, इळः क्रमेण ॥

६६७. सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते । होत꣡ꣳपावक यक्षि च ॥१॥

६६८. मधुमन्तन्तनूनपाद्यज्ञन्देवेषु नꣳकवे । अद्या कृणुहूतये ॥२॥

६६९. नराशꣳसमिह प्रियमस्मिन्यज्ञ उप ह्वये । मधुजिह्वꣳहविष्कृतम् ॥३॥

२१०. सुषमिद्धः । सु । समिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च । मधुमन्तम् । तनूनपात् । तनू । नपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । अ । द्य । कृणुहि । ऊतये ॥ नराशꣳसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये । मधुजिह्वम् । मधु । जिह्वम् ।

१३. नियेधः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमाऽ३धारया ॥ अपोवसा । नोअर्षाऽ२इ । इहाऽ३ । आराऽ३त्नधाः । हाहोऽ२३४हा । योनिमृता । स्यसीदाऽ२३साइ । इहाऽ३ ॥ ऊत्सोऽ३दाइवाः । हाहोऽ२३४हा ॥ हिराऽ३ण्याऽ५या- ऽ६५६: ॥श्रीः॥ उत्सोदेवोहाऽ३इरण्यया: ॥ उत्सोदेवो । हिरण्ययाऽ२: । इहाऽ३ । दूहाऽ३नाऊ । हाहोऽ२३४हा । धार्दिवियाम् । मधुप्राऽ२३- याम् । इहाऽ३ ॥ प्रत्नाऽ३२सावा । हाहोऽ२३४हा ॥ स्थमाऽ३साऽ५दा- ऽ६५६त् ॥ श्रीः ॥ प्रत्नꣳसधस्थाऽ३मासदात् ॥ प्रत्नाꣳसधा । स्थमा- सदाऽ२त् । इहाऽ३ ॥ आपाऽ३च्छायाम् । हाहोऽ२३४हा ॥ धारुणंवा । जियर्षाऽ२३साइ ॥ इहाऽ३ ॥ नृभाऽ३इर्धौताः । हाहोऽ२३४हा ॥ विचाऽ३क्षाऽ५णाऽ६५६: ॥ हेऽ२३४५ ॥

दी. ११. उत्. ९. मा. २१. च. ॥२१३॥

७००. अग्ने सुखतमे रथे देवाँ ईडित आ वह । असि होता मनुर्हितः ॥४॥

धा. १८. उ. न. स्व. २. ग. ॥१॥

२११. वसिष्ठो मैत्रावरुणिः । गायत्री । आदित्यः ॥

७०१. यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥१॥

७०२. सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।
ये नो अंहोऽतिपिप्रति ॥२॥

७०३. उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥३॥

धा. ११. उ. २. स्व. ३. खि. ॥२॥

२१२. प्रगाथः काण्वः । गायत्री । इन्द्रः ॥

७०४. उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥१॥

७०५. पदा पणीनराधसो नि बाधस्व महाँ असि । न हि त्वा कश्चन प्रति ॥२॥

७०६. त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् । त्वꣳ राजा जनानाम् ॥३॥

धा. १३. उ. २. स्व. ३. ठि. ॥३॥

प्रथमः खण्डः ॥

---

हविष्कृतम् । हविः । कृतम् ॥ अग्ने । सुखतमे । सु । खतमे । रथे । देवान् । ईडितः । आ । वह । असि । होता । मनुर्हितः । मनुः ॥ हितः ॥

२११. यत् । अद्य । अ । द्य । सूरे । उदिते । उत् । इते । अनागाः । अन् । आगाः । मित्रः । मि । त्रः । अर्यमा । सुवाति । सविता । भगः ॥ सुप्रावीः । सु । प्रावीः । अस्तु । सः । क्षयः । प्र । नु । यामन् । सुदानवः । सु । दानवः । ये । नः । अंहः । अतिपिप्रति । अति । पिप्रति ॥ उत ॥ स्वराजः । स्व । राजः । अदितिः । अ । दितिः । अदब्धस्य । अ । दब्धस्य । व्रतस्य । ये । महः । राजानः । ईशते ॥

२१२. उत् । त्वा । मन्दन्तु । सोमाः । कृणुष्व । राधः । अद्रिवः । अ । द्रिवः । अव । ब्रह्मद्विषः । ब्रह्म । द्विषः । जहि ॥ पदा । पणीन् । अराधसः । अ । राधसः । नि । बाधस्व । महान् । असि । न । हि । त्वा । कः । च । न ।



२१३. पराशरः शाक्त्यः । त्रिष्टुप् । पवमानः सोमः ॥

७०७. आ जागृविर्विप्र ऋतं मतीनाꣳ सोमः पुनानो असदच्चमूषु ।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासस्सुहस्ताः ॥१॥

७०८. स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यꣳसत् ॥२॥

७०९. स वर्धिता वर्धनः पूयमानस्सोमो मीढ्वाꣳ अभि नो ज्योतिषावीत् ।
यत्र नः पूर्वे पितरः पदज्ञास्स्वर्विदो अभि गा अद्रिमिष्णन् ॥३॥

धा. १९. उ. १. स्व. ८. वै. ॥४॥

---

प्रति ॥ त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् । अ । सुतानाम् ॥ त्वम् । राजा । जनानाम् ॥

२१३. आ । जागृविः । विप्रः । वि । प्रः । ऋतम् । मतीनाम् । सोमः । पुनानः । असदत् । चमूषु । सपन्ति । यम् । मिथुनासः । निकामाः । नि । कामाः । अध्वर्यवः । रथिरासः । सुहस्ताः । सु । हस्ताः ॥ सः । पुनानः । उप । सूरे । दधानः । आ । उभे इति । अप्राः । रोदसी इति । वि । सः । अवरिति । प्रिया । चित् । यस्य । प्रियसासः । ऊती । सतः । धनम् । कारिणे । न । प्र । यꣳसत् ॥ सः । वर्द्धिता । वर्द्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः । ज्योतिषा । आवीत् । यत्र । नः । पूर्वे । पितरः । पदज्ञाः । पद । ज्ञाः । स्वर्विदः । स्वः । विदः । अभि । गाः । अद्रिम् । अ । द्रिम् । इष्णन् ॥

१४. गौरीवितम् । गौरीवितिः । त्रिष्टुप् । पवमानस्सोमः ॥

आजा । गृवाऽ३इः । विप्रऋतनाम् ॥ मतीनाꣳसोमः पुनानो-
असदच्चमूषूऽ२३ । सापन्तियाऽ३१२३म् । मिथुनासोनिकामाऽ५ध्वर्या ॥
वोरथिराऽ३१२३ ॥ सस्तोवा । हाऽ५स्तोऽ६हाइ ॥ श्रीः ॥ सपु ।
नानाऽ३ः । उपसूराइ ॥ दधानओभेअप्रारोदसीवीषआवाऽ२३ः । प्राया-
चिद्याऽ३१२३ । स्यप्रियसासऊतीसाऽ५तोधा ॥ नाङ्कारिणाऽ३१२३६ ॥

२१४. प्रगाथो घोरः काण्वः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

७१०. मा चिदन्यद्वि शꣳसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणꣳ सचा सुते मुहुरुक्था च शꣳसत ॥१॥

७११. अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।
विद्वेषणꣳ संवननमुभयङ्करं मꣳहिष्ठमुभयाविनम् ॥२॥

धा. १७. उ. न. स्व. ४. यी. ॥४॥

२१४. मा । चित् । अन्यत् । वि । शꣳसत । सखायः । स । खायः । मा । रिषण्यत । इन्द्रम् । इत् । स्तोत । वृषणम् । सचा । सुते । मुहुः । उक्था । च । शꣳसत ॥ अवक्रक्षिणम् । अव । क्रक्षिणम् । वृषभम् । यथा । जुवम् । गाम् । न । चर्षणीसहम् । चर्षणि । सहम् । विद्वेषणम् । वि । द्वेषणम् । संवननम् । सम् । वननम् । उभयङ्करम् । उभयम् । करम् । मꣳहिष्ठम् । उभयाविनम् ॥

नम्रोवा । याऽ५ꣳसोऽ६"हाइ ॥ श्रीः ॥ सव । धिताऽ३ । वर्धनꣳपू ॥ यमानस्सोमामीद्वाँअभिनोज्योतिषावाऽ२३इत् । यात्रनꣳपूऽ३१२३ । वेदितरꣳपद्मास्वाऽ५वर्चाइ ॥ दोअभिगाऽ३१२३ः । अन्नोवा । आऽ५इक्षोऽ६"हाइ ॥

दी. ३७. उत्. न. मा. २४. यी. ॥२१४॥

१५. मैधातिथम् । मैधातिथिः । बृहती । इन्द्रः ॥

माचिदन्यदोहाइ ॥ विशाऽ३ꣳसाता । सखायाऽ२होऽ१इ । माओऽ३हो ॥ राइषाउवा । ण्याताउवा ॥ इन्द्रमित्स्तोतावृषणाओऽ३हो ॥ साचाउवा । सुताउवा ॥ मुहुरुक्थाओऽ३हो । चशा । औहो । वाहोऽ२३४वा । साऽ५तोऽ६"हाइ ॥ श्रीः ॥ मुहुरुक्थोहाइ ॥ चशाऽ३ꣳसाता । मुहुरूऽ२होऽ१ । क्थाओऽ३हो ॥ चाशाउवा । साताउवा ॥ अवक्रक्षिणंवृषभाओऽ३हो ॥ याथाउवा । जूवाउवा ॥ गामचाओऽ३हो । षणा ।



२१५. मेधातिथिः काण्वः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

७१२. उदु त्ये मधुमत्तमा गिरस्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥१॥

७१३. कण्वा इव भृगवस्सूर्या इव विश्वमिद्धीतमाशत ।
इन्द्रꣳ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥२॥

धा. १४. उ. न. स्व. २. ला. ॥६॥

२१५. उत् । उ । त्ये । मधुमत्तमाः । गिरः । स्तोमासः । ईरते । सत्राजितः । सत्रा । जितः । धनसाः । धन । साः । अक्षितोतयः । अक्षित । ऊतयः । वाजयन्तः । रथाः । इव ॥ कण्वाः । इव । भृगवः । सूर्याः । इव । विश्वम् । इत् । धीतम् । आशत । इन्द्रम् । स्तोमेभिः । महयन्तः । आयवः । प्रियमेधासः । प्रिय । मेधासः । अस्वरन् ॥

औहो । वाहोऽ२३४वा । साऽ५होऽ६"हाइ ॥ श्रीः ॥ गामचोहाइ ॥ षणाऽ३इमाहाम् । गामाऽ२होऽ१इ । चाओऽ३हो ॥ षाणाउवा । साहाउवा । विद्वेषणꣳसवननमाओऽ३हो ॥ भायाउवा । काराउवा ॥ मꣳहिष्ठमाओऽ३हो । भया । औहो । वाहोऽ२३४वा । वाऽ५इनोऽ६"हाइ ॥

दी. १४. उत्. ९. मा. ३३. घि. ॥२१५॥

१६. अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

उदुऽ३त्येऽ३माधुमत्तमोवा ॥ गाइरस्तोमा । सआइराऽ१ताऽ२इ । सात्राजितोऽ३१२३४ । धनसाअ । क्षितोताऽ१याऽ२ः ॥ वाजायाऽ१न्ताऽ२ः ॥ रथाऽ२ः । आऽ२३४५इ ॥ वाऽ२३४५ ॥ श्रीः ॥ वाजाऽ३याऽ३न्तोरथाइवोवा ॥ वाजयन्तः । रथाआऽ१इवाऽ२ । काण्वाइवाऽ३१२३४ । भृगवस्सू । रियाआऽ१इवाऽ२ ॥ विश्वामाऽ१इद्धीऽ२ । तमाऽ३ । शाऽ२३४५ ॥ ताऽ२३४५ ॥ श्रीः ॥ विश्वाऽ३माऽ३इद्धीतमाऽ-

२१६. त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्स्यः। पिपीलिकामध्या अनुष्टुप्।
पवमानः सोमः ॥

७१४. पर्यू षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया न ईरसे ॥१॥

७१५. अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः।
गोजीरया रꣳहमाणः पुरन्ध्या ॥२॥

२१६. परि। ऊ। सु। प्र। धन्व। वाजसातये। वाज। सातये। परि। वृत्राणि। सक्षणिः। स। क्षणिः। द्विषः। तरध्यै। ऋणयाः। ऋण। याः। नः।

तोवा ॥ वाइश्वसिद्धो। तमाशाऽ१ताऽ२। आइन्द्रꣳस्तोमाऽ३१२३४इ। भिमहय। तआयाऽ१वाऽ२ः ॥ प्रियामाऽ१इवाऽ२ ॥ सोआऽ३। स्वाऽ२३४५ ॥ राऽ२३४५न् ॥ दी. १३. उत्. ९. मा. २४. दू. ॥२१६॥

१७. [1]रोहितकूलीयम् ॥ इन्द्रः। उष्णिक्। पवमानस्सोमः ॥

इन्द्रमच्छा ॥ सुताइमे। वृषणंयन्तुहरयश्रुष्टेजाऽ२३ता ॥ साऽ२३ई ॥ दावस्सुवाऽ३१उवाऽ२३ ॥ वीऽ२३४दाः ॥ श्रीः ॥ अयंभरा ॥ यसानसिः। इन्द्रायपवतेसुतस्सोमोजाऽ२३इत्रा ॥ स्याऽ२३चे ॥ तातियथाऽ३१उवाऽ२३ ॥ वीऽ२३४दे ॥श्रीः॥ अस्येदिन्द्राः ॥ मदेष्वा। ग्राभ्यृष्णातिसानसिंवज्रश्चाऽ२३वा ॥ पाऽ२३णाम् ॥ भारत्समाऽ३१उवाऽ२३॥ प्सुऽ२३४जीत् ॥ दी. १४. उत्. १. मा. ११. त. ॥२१७॥

१८. श्यावाश्वम् ॥ श्यावाश्वः। त्रिपदानुष्टुप्पिपीलिकामध्या। पवमानस्सोमः ॥

पराऽ३१इ। ऊऽ३षु। प्रध। न्वाऽ३वा। एहिया ॥ जा। सातयेपा। रि। वृत्राऽ२। एहियाऽ२। णिसक्षणाइद्वोऽ२इषाऽ२ः ॥ ताऽ२३४रा ॥ ऐहाऽ२इ। एहियाऽ२। धियाऋणयानाऽ३ईऽ३। राऽ२३४५-

[1] सप्तदशो सूक्ते गीयते।



७१६. अनु हि त्वा सुतꣳसोम मदामसि महे समर्यराज्ये।
वाजाꣳ अभि पवमान प्र गाहसे ॥३॥
धा. (१४) ९. उ. न. स्व. १. ल. ॥७॥

ईरसे ॥ अजीजनः। हि। पवमान। सूर्यम्। विधारे। वि। धारे। शक्मना। पयः। गोजीरया। गो। जीरया। रꣳहमाणः। पुरन्ध्या। पुरम्। ध्या ॥ अनु। हि। त्वा। सुतम्। सोम। मदामसि। महे। समर्यराज्ये। समर्य। राज्ये। वाजान्। अभि। पवमान। प्र। गाहसे ॥

सोऽ६हाइ ॥श्रीः॥ अजाऽ३१इ। जाऽ३नो। हिप। वाऽ३मा। एहिया ॥ ना। सूरियंवाइ। धा। रेशाऽ२। एहियाऽ२। कमनापयोगोऽ३जीऽ३ ॥ राऽ२३४या ॥ ऐहाऽ२इ। एहियाऽ२। रꣳहमाणाꣳपूऽ३राऽ३म्। धाऽ३४५योऽ६हाइ ॥श्रीः॥ अनूऽ३१। हाऽ३इत्वा। सुतम्। सोऽ२म। एहिया ॥ मा। दामसिमा। हे। समाऽ२। एहियाऽ२। यराजियेवाऽ३जꣳऽ३ ॥ आऽ२३४भी ॥ ऐहाऽ२इ। एहियाऽ२। पवमानाप्राऽ३-गाऽ३। हाऽ२३४५सोऽ६हाइ ॥ दी. २३. उत्. ९. मा. १७. डे. ॥२१८॥

१९. आन्धीगवम् ॥ अन्धीगुः। अनुष्टुप्पिपीलिकामध्या। पवमानस्सोमः ॥

पर्यूषुप्रधाऽ१न्वावा ॥ जसात। येपाऽ२३री। हुम्माऽ२१२। वृत्राणिसक्षणिर्द्विषस्तराऽ२३४५ ॥ धायाऽ३उवा ॥ णाऽ२याः। नाऽ२३ई। रसा। औऽ३होवा ॥ श्रीः ॥ अजीजनोहिपाऽ१वामा ॥ नसूरि। यम्वाऽ२३इधा। हुम्माऽ२१२। रेशक्मनापयोगोजीरयाऽ२३४५ ॥ राꣳहाऽ३-उवा ॥ माऽ२णाः। पूऽ२३राम्। धिया। औऽ३होवा ॥ श्रीः ॥ अनुहित्वासुताऽ१ꣳसोमा ॥ मदाम। सिमाऽ२३हे। हुम्माऽ२१२। समर्यराज्येवाजाꣳअभीऽ२३४५ ॥ पावाऽ३उवा ॥ प्राऽ२ना। प्राऽ२३गा। हसा। औऽ३होवा। होऽ५इ ॥डा॥ दी. १८. उत्. ९. मा. १०. डी. ॥२१९॥

२१७. अग्नयो धिष्ण्या ऐश्वराः। अक्षरपङ्क्तिः। पवमानः सोमः॥

७१७. परि प्रधन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥१॥

७१८. एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यःपीयूषः ॥२॥

७१९. इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥३॥

धा. (१३) ६. उ. न. स्व. २. ला. (स्व. ३. रि.) ॥८॥

द्वितीयः खण्डः॥

११८. हिरण्यस्तूप आङ्गिरसः। जगती। पवमानः सोमः॥

७२०. सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासःप्रसुतस्साकमीरते।
तन्तुन्ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किञ्चन ॥१॥

---

२१७. परि। प्र। धन्व। इन्द्राय। सोम। स्वादुः। मित्राय। मि। त्राय। पूष्णे। भगाय। एव। अमृताय। अ। मृताय। महे। क्षयाय। सः। शुक्रः। अर्ष। दिव्यः। पीयूषः॥ इन्द्रः। ते। सोम। सुतस्य। पेयात्। क्रत्वे। दक्षाय। विश्वे। च। देवाः॥

---

२०. वाङ्निधनसौहविषम्॥ सुहविः। अक्षरपङ्क्तिः। पवमानस्सोमः॥

प। र्येपारी॥ प्रधन्वा। होवाऽ३होइ। इन्द्रायसोमा। होवा-ऽ३होइ। स्वादुर्मित्राया। होवाऽ३होऽ२३इ॥ पूष्णौवाओऽ२३४वा॥ भगाऽ५याउ॥ श्रीः॥ एव। एआइवा। एव। एआइवा॥ अमृताया। होवाऽ३होइ। महेक्षयाया। होवाऽ३होइ। सशुक्रोअर्षा। होवाऽ३हो-२३इ॥ दिव्यौवाओऽ२३४वा॥ पीयूऽ५षाउ॥ ॥ श्रीः॥ इन्द्रः। एआइन्द्राः। इन्द्रः। एआइन्द्राः॥ तेसोमा। होवाऽ३होइ। सुतस्यपेयात्। होवाऽ३होइ। क्रत्वेदक्षाया। होवाऽ३होऽ२३इ॥ विश्वौवाओऽ२३४वा॥ चदाऽ५इवाउ॥ वा॥

दी. १७ उत्. ५. मा. २०. बौ. ॥२२०॥

षष्ठस्यार्द्धःप्रपाठकः॥

एकादशो विरङ्कः॥



७२१. उपो मतिःपृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि।
पवमानस्सन्तनिस्सुन्वतामिव मधुमान्द्रप्सःपरि वारमर्षति ॥२॥

७२२. उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम्।
अत्यक्रमीदर्जुनं वारमव्ययमत्कन्न निक्तं परि सोमो अव्यत ॥३॥

धा. २६. उ. ३. स्व. १. ग. ॥९॥

---

२१८. सूर्यस्य। इव। रश्मयः। द्रावयित्नवः। मत्सरासः। प्रसुतः। प्र। सुतः। साकम्। ईरते। तन्तुम्। ततम्। परि। सर्गासः। आशवः। न। इन्द्रात्। ऋते। पवते। धाम। किम्। च। न॥ उप। उ। मतिः। पृच्यते। सिच्यते। मधु। मन्द्राजनी। मन्द्र। अजनी। चोदते। अन्तः। आसनि। पवमानः। सन्तनिः। सम्। तनिः। सुन्वताम्। इव। मधुमान्। द्रप्सः। परि। वारम्। अर्षति॥ उक्षा। मिमेति। प्रति। यन्ति। धेनवः। देवस्य। देवीः। उप। यन्ति। निष्कृतम्। निः। कृतम्। अति। अक्रमीत्। अर्जुनम्। वारम्। अव्ययम्। अत्कम्। न। निक्तम्। परि। सोमः। अव्यत॥

---

२१. वाजजित्॥ प्रजापतिः। जगती। पवमानस्सोमः॥

सूर्यस्येवा। रश्मयोद्रा। वयित्नवाः। होवाऽ३होइ॥ मत्सरासाः। प्रसुतस्सा। कमीरताइ। होवाऽ३होइ॥ तन्तुन्तताम्। परिसर्गा। साआ-शवाः। होवाऽ३होइ॥ नेन्द्रादृताइ। पवतेधा। मकिञ्चना। होवाऽ३-होऽ२। वाऽ२३४औहोवा॥ श्रीः॥ उपोमताइः। पृच्यतेसाइ। च्यातेमधु। होवाऽ३होइ॥ मन्द्राजनाइ। चोदतेआ। तरासनाइ। होवाऽ३होइ॥ पवमानाः। सन्तनिस्सू। न्वतामिवा। होवाऽ३होइ॥ मधुमान्द्रा। प्सःपरिवा। रमर्षताइ। होवाऽ३होऽ२। वाऽ२३४औहोवा॥ श्रीः॥ उक्षामिमाइ। तिप्रतिया। न्तिधेनवाः। होवाऽ३होइ॥ देवस्यदाइ। वीरुपया। न्तिनिष्कृताम्। होवाऽ३होइ॥ अत्यक्रमाइत्। अर्जुनम्वा।

२१९. वसिष्ठो मैत्रावरुणिः। विराट्। अग्निः॥

७२३. अग्निन्नरो दीधितिभिररण्योर्हस्तच्युतञ्जनयत प्रशस्तम्।
दूरेदृशङ्गृहपतिमथव्युम् ॥१॥

७२४. तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित्।
दक्षाय्यो यो दम आस नित्यः ॥२॥

७२५. प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।
त्वाꣳ शश्वन्त उप यन्ति वाजाः ॥३॥

धा. २८. उ. ३. स्व. ४. डी. ॥१०॥

---

२१९. अग्निम्। नरः। दीधितिभिः। अरण्योः। हस्तच्युतम्। हस्त। च्युतम्। जनयत। प्रशस्तम्। प्र। शस्तम्। दूरेदृशम्। दूरे। दृशम्। गृहपतिम्। गृह। पतिम्। अथव्युम्। अ। थव्युम्॥ तम्। अग्निम्। अस्ते। वसवः। नि। ऋण्वन्। सुप्रतिचक्षम्। सु। प्रतिचक्षम्। अवसे। कुतः। चित्। दक्षाय्यः। यः। दमे। आस। नित्यः॥ प्रेद्धः। प्र। इद्धः। अग्ने। दीदिहि। पुरः। नः। अजस्रया। अ। जस्रया। सूर्म्या। यविष्ठ। त्वाम्। शश्वन्तः। उप। यन्ति। वाजाः॥

---

रामव्ययाम्। होवाऽ३होइ॥ अत्कन्ननाइ। स्वंपरिसो। मोअव्यता। होवाऽ३होऽ२। वाऽ२३४औहोवा॥ वाजीजिगीवाविश्वाधनाऽ२नी-ऽ२३४५॥

दी. ४६. उत्. ३७. मा. ३६. खू. ॥२२१॥

२२. महावामदेव्यम्॥ वामदेवः। विराट्। अग्निः॥

आऽ५ग्निम्। नरोऽ३दाऽ३इधीतिभाइः॥ आ। रण्योर्हस्ताच्यु-तञ्जनयतप्रशस्तन्दूरे। दृ। औऽ३होहाइ। आ। रण्योर्हस्तच्युतञ्जन-यतप्रशस्तन्दूरे। दृ। औऽ३होहाइ। शङ्गाऽ२३हैपा॥ तिमोहोऽ२। हुम्माऽ२। थाऽ२व्योऽ३५''हाइ॥ श्रीः॥ ताऽ५म। निमाऽ२स्ताऽ३-इवसवाः॥ नाइ। अण्वन्त्सुप्रतिचक्षमवसेकुतश्चिद्दक्षायि। या। औऽ३हो-



२२०. सार्पराज्ञी। गायत्री। आत्मा; सूर्यो वा॥

७२६. आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः ॥१॥

७२७. अन्तश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवम् ॥२॥

७२८. त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय धीयते। प्रति वस्तोरह द्युभिः ॥३॥

धा. १७. उ. २. स्व. ३. छि. ॥११॥

तृतीयः खण्डः॥

इत्येकादशोऽध्यायः समाप्तः॥

षष्ठप्रपाठकस्य प्रथमोऽर्धः॥

---

२२०. आ। अयम्। गौः। पृश्निः। अक्रमीत्। असदत्। मातरम्। पुरः। पितरम्। च। प्रयन्। प्र। यन्। स्वऽ३रिति॥ अन्तरिति। चरति। रोचना। अस्य। प्राणात्। प्र। आनात्। अपानती। अप। अनती। वि। अख्यत्। महिषः। दिवम्॥ त्रिꣳशत्। धाम। वि। राजति। वाक्। पतङ्गाय। धीयते। प्रति। वस्तोः। अह। द्युभिः॥

---

हाइ। नाइ। अण्वन्त्सुप्रतिचक्षमवसेकुतश्चिद्दक्षायि। या। औऽ३होहाइ। योदाऽ२३मआ॥ सनोहोऽ३। हुम्माऽ२॥ त्याऽ२योऽ३५''हाइ॥ श्रीः॥ प्रेऽ५द्धः। आऽ३ग्नाऽ३इदीदिहाइ॥ पू। रोनोअजस्रयासूर्म्यायविष्ठत्वाम्। शा। औऽ३होहाइ। पू। रोनोअजस्रयासूर्म्यायविष्ठत्वाम्। शा। औऽ३होहाइ। श्वन्ताऽ२३उपा॥ यन्त्योहोऽ३। हुम्माऽ२॥ वाऽ२जोऽ३५''हाइ॥

दी. ३४. उत्. न. मा. २६. लु. ॥२२२॥

इत्येकादशो विꣳशः॥

इत्यूहगाने दशरात्रपर्व सम्पूर्णम्॥

---

॥ श्रीः ॥

१. आमहीयवम्[1] ॥ अमहीयुः । गायत्री । पवमानस्सोमः ॥

ॐ ॥ वृपापाऽ३वस्वधारया ॥ मरुत्वाऽ१ताऽ२इ । चमाऽ२३-
त्सराः ॥ विश्वादधा ॥ नओऽ२३जसाउ । वाऽ३ ॥ श्रीः ॥ तन्त्वाधा-
ऽ३तारसोणियोः ॥ पवामाऽ१नाऽ२ । सुवाऽ२३र्दृशम् ॥ हिन्वेवाजाइ ॥
पुवाऽ२३जिनाउ । वाऽ३ ॥ श्रीः ॥ अयाचाऽ३इत्तोविपानया ॥ हराइ४पा-
ऽ१वाऽ२ । स्वधाऽ२३र्या । युजंवाजाइ ॥ पुचोऽ२३दसाउ । वाऽ३ ॥
स्तोपेऽ३४५ ॥ दी. १३. उत्. ६. मा. १२. टा. ॥२२३॥

२. समन्तम्[2] ॥ अग्निः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया ॥ अपोवसानोअर्षसाइ । आरत्नाऽ२३धाः ।
योनिमृत । स्यसाइदासा । औहोऽ३४वाहाइ ॥ उत् । सोदाऽ२३इवाऽ३ः ।
होवाऽ३हाइ ॥ हिरण्याऽ२३याऽ३४३ः ॥ श्रीः ॥ उत्सोदेवोहिरण्ययाः ॥
उत्सोदेवोहिरण्ययाः । दुहानाऽ२३ऊ । धादिवियम् । मधुप्रायम् । औहो-
ऽ३४वाहाइ ॥ प्र । ला२साऽ२३धाऽ३ । होवाऽ३हा ॥ स्थमासाऽ२३दा-
ऽ३४३त् ॥श्रीः॥ प्रत्न२सधस्थमासदात् ॥ प्रत्न२सधास्थमासदात् । आपृ-
च्छ्याऽ२३याम् । धारुणंवा । जियार्षासा । औहोऽ३४वाहाइ ॥ नृ । भाइचौं-
ऽ२३ताऽ३ः । होवाऽ३हाइ ॥ विचक्षाऽ२३णाऽ३४३ः ॥ ओऽ२३४५इ ॥डा॥
दी. २३. उत्. १०. मा. २६. गु. ॥२२४॥

३. सवः[3] ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा । हाइ ।
उत्सोदाऽ२३४इवो । हाइरण्याऽ२३४याः ॥ (है । हिः) । दुहानाऽ२३४ऊ ।

---

[1] पञ्चपदञ्चाशतमसूक्ते गीयते ।

[2] नवमसूक्ते गीयते ।

[3] नवमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।

घार्दाइवाऽ२३४याम् । माधुप्राऽ२३४याम् ॥ प्रानऽसाऽ२३४वा । स्था-
मासाऽ२३४दात् ॥ हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा ।
हाऽ३४ । औहोवा ॥ एऽ३ । अतिविश्वानिदुरितातरेमाऽ२३४५ ॥

दी. ५. उत्. न. मा. १२. वा. ॥२२५॥

४. दैर्घश्रवसम्[1] ॥ दीर्घश्रवाः । बृहती । पवमानस्सोमः ॥

प्रत्नऽसधस्थमासददोहाओहाऽ३ए ॥ प्रत्नऽसधस्थमासदत् । ओऽ३-
हा । ओऽ३हाऽ३एऽ३४ ॥ आपाऽ३४छियाम् ॥ धारुणम् । वाजायर्षसाइ ।
ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ नृभाऽ३४इर्धौताऽ३ः ॥ विचोऽ२३४वा ।
क्षाऽ५णोऽ६"हाइ ॥

दी. ८. उत्. ३. मा. ११. ड. ॥२२६॥

५. पार्थम्[2] ॥ पृथुः । त्रिष्टुप् । पवमानस्सोमः ॥

ओऽ३होऽ३होइ । प्रकावियाम् । उशने । वब्रुवाणाः ॥ देवोदेवा ।
नाऽ३ञ्जनि । मानिवक्ती ॥ महिव्रताः । शुचिव । धुऽपवाकाः ॥
पदावरा । होऽ३अभि । आऽ३४३इ । तीऽ३राऽ५इ"साऽ६५६न् ॥ श्रीः ॥
प्रहऽसासाः । तृपला । वग्नुमच्छा ॥ अमादस्ताम् । वृषग । णाअयाम्रुः ॥
अङ्गोपिशाम् । पवसा । नऽसखायाः ॥ दुर्मर्षवा । णाऽ३भ्यव । दाऽ३४३ ।
तीऽ३साऽ५"काऽ६५६म् ॥ श्रीः ॥ सयोजताइ । उरुगा । यस्यजूतीम् ॥
वृथाक्रीडा । ताऽ३म्मिम । तेनगावाः ॥ परीणसाम् । कृणुते । तिग्म-
शृङ्गाः ॥ ओऽ३होऽ३होइ । दिवाहराइः । ददृशे । नाऽ३४३ । क्ताऽ३मा-
ऽ५"त्रॉऽ६५६ः ॥

दी. १९. उत्. २०. मा. २५. तु. ॥२२७॥

६. अभीवर्तः[3] ॥ अभीवर्तः । बृहती । इन्द्रः ॥

माचाऽ३इदाऽ३न्यद्विशऽसतोवा ॥ साखायोमा । रिषाण्याऽ१-

[1] नवमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।

[2] त्रिपञ्चाशदुत्तरशततमसूक्ते गीयते ।

[3] चतुर्दशाधिकद्विशततमसूक्ते गीयते ।



ताऽ२ । आइन्द्रमित्स्तोऽ३१२३४ । तावृषणम् । सचासूऽ१ताऽ२इ ॥
मुहूरुऽ१क्थाऽ२ ॥ चशाऽ३ । साऽ२३४५ ॥ ताऽ२३४५ ॥श्रीः॥ मुहूऽ३-
रुऽ३क्थाचशऽसतोवा ॥ मुहुरुक्था । चशाऽसाऽ१ताऽ२ । आवक्रक्षा-
ऽ३१२३४इ । गांवृपभम् । यथाजूऽ१वाऽ२म् ॥ गाञ्चाऽ१चाऽ२ ॥
पणाऽ३इ । साऽ२३४५ ॥ हाऽ२३४५म् ॥ श्रीः ॥ गाञ्चाऽ३चाऽ३र्षणीम-
होवा ॥ गान्नच । पणाइसाऽ१हाऽ२म् । वाइद्वेषणाऽ३१२३४म् । संवत्न-
नमु । भयाङ्काऽ१राऽ२म् ॥ मऽहाइष्ठाऽ१मूऽ२ ॥ भयाऽ३ । वाऽ२३४५इ ॥
नाऽ२३४५म् ॥

दी. ९. उत्. ८. मा. १७. दे. ॥२२८॥

७. जराबोधीयम्[1] ॥ अग्निः । गायत्री । पवमानस्सोमः ॥

यस्तेमदोवा ॥ वारेणियाः । तेनापाऽ२३वा । स्वअन्धाता ॥
देवावाऽ१इराऽ२३"घा । श । सहोऽ३४५इ ॥ डा ॥ श्रीः ॥ जग्निर्मत्रोवा ॥
आमित्रियाम् । सस्नाइर्वाऽ२३जाम् । दिवेदाइवाइ ॥ गोपाताऽ१इरा-
ऽ२३"श्वा । साः । असोऽ३४५इ ॥डा॥श्रीः॥ सम्मिरलभोवा । रूपोसुवाः ।
सूपास्थाऽ२३भीः । नधेनूभाइः ॥ सीदाञ्च्याऽ१इनाऽ२३"ना । यो ।
निमोऽ३४५इ ॥डा॥

दी. १२. उत्. ९. मा. १९. ओ. ॥२२९॥

८. सुत्रानम्[2] ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रमच्छा ॥ सुताइमाइ । वृषणांयाऽ२ । तुहरयाः ॥ श्रुष्टे-
जाताऽ२ ॥ सइ । दाऽ२वाऽ२३४औहोवा ॥ सुवर्विदएऽ३ ॥ श्रीः ॥
अयंभरा ॥ यमानसाइः । इन्द्रायापाऽ२ । वतेसुताः ॥ सोमोजाइत्राऽ२ ॥
स्यचे । ताऽ२ताऽ२३४औहोवा ॥ यथाविदएऽ३ ॥ श्रीः ॥ अस्येदिन्द्राः ॥

[1] षष्टितमसूक्ते गीयते ।

[2] सप्तदशसूक्ते गीयते ।

मदेपुवा । ग्रामञ्ज्ञाश्मणाऽ२ । तिमानसाइम् ॥ वज्रश्चावाऽ२ ॥ पणम् । भाऽ२राऽ२३४औहोवा ॥ समप्सुजिदेऽ३उपाऽ२३४५ ॥

दी. १९. उत्. १५. मा. १८. नै. ॥२३०॥

९. तृतीयं कौत्सम्[1] ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजिता । होइ । वोअन्धसाऽ६ए ॥ सुताऽ२यमाऽ२ । दयाऽ३४५इ । ताऽ२३४वे । अपश्वानंश्नथिष्टनाऽ२३४५ ॥ सखायोऽ२३दी ॥ घजिह्वाऽ२३याऽ३४३म् ॥ श्रीः ॥ सखायोदा । हो । घजिह्वियाऽ६मे ॥ योघाऽ२रयाऽ२ । पावाऽ३४५ । काऽ२३४या । परिस्रस्यन्दतेसुताऽ१: ॥ इन्दुराऽ२३श्वाः ॥ नक्तृत्वाऽ२३याऽ३४३: ॥ श्रीः ॥ इन्दुरश्वाः । हो । नक्तृत्वियाऽ६ए ॥ तान्दूऽ२रेपाऽ२म् । अभाऽ३४५इ । नाऽ२३४राः । सोमम्विश्वाच्चियाधियाऽ१ ॥ यज्ञायाऽ२३सा ॥ तुवद्राऽ२३याऽ३४३: । ओऽ२३४५इ ॥ डा ॥

दी. १६. उत्. ७. मा. १५. खु. ॥२३१॥

१०. कावम्[2] ॥ कविः । जगती । पवमानस्सोमः ॥

औवा ॥ अयासीदिन्दुरिन्द्रा । स्यनिष्कार्ताऽ२म् । सखासख्युर्नप्रमिना । तिसङ्गाइराऽ२म् ॥ मर्यइवयुवतिभाइः । समर्षताऽ२३इ ॥ सोमाऽ३४काला । शेशतायाऽ२३ । मानाऽ३पाऽ५"थाऽ६५६ ॥श्रीः॥ प्रवोवा ॥ धियोमन्द्रयुवो । विपन्युवाऽ२: । पनस्युवस्सम्वरणाइ । पुवक्रामुऽ२: ॥ हरिङ्क्रीडन्तमभ्यनू । षतस्तुभाऽ२३: ॥ आभीऽ३धेना ॥ व४पयासाऽ२३इत् । आशाऽ३इश्राऽ५"यूऽ६५६: ॥ श्रीः ॥ आनोवा ॥ सोममप्सुतम्पाइ । प्सुपोमाइपाऽ२म् । इन्दोपवस्वपवमा । नऊर्माइणाऽ२ ॥ यानोदोहते-

[1] अष्टादशसूक्ते गीयते ।

[2] एकोनषष्ट्युत्तरशततमसूक्ते गीयते ।



त्रिरहान् । असश्चुषाऽ२३इ ॥ क्षुमाऽ३न्वाजा । वन्मधुमाऽ२३त् । सुवाऽ३इराऽ५"याऽ६५६म् ॥

दी. १५. उत्. १९. मा. २५. मु. ॥२३२॥

११. सत्रासाहीयम्[1] ॥ इन्द्रः । गायत्री । अग्निः ॥

अग्नाऽ३४इम् । वोवृधन्तम् । ओऽ६वा ॥ अध्वराणांपुरूताऽ२माम् । आऽ२च्छा । नाऽ२३प्त्रे ॥ सहोऽ३हो । वाहाऽ३४३इ ॥ स्वाऽ२३४तोऽ६"हाइ ॥ श्रीः ॥ अयाऽ३४म् । यथानआसुवत् । ओऽ६वा ॥ त्वष्टारूपेवतक्षाऽ२या । आऽ२स्या । क्षाऽ२३त्वा ॥ यशोऽ३हो । वाहाऽ३४३इ ॥ स्वाऽ२३४तोऽ६"हाइ ॥श्रीः॥ अयाऽ३४म् । विश्वाअभिश्रियः । ओऽ६वा । अग्निर्देवेषुपत्याऽ२ताइ । आऽ२वा । जाऽ२३इरू ॥ पनोऽ३हो । वाहाऽ३४३इ ॥ गाऽ२३४मोऽ६"हाइ ॥

दी. १८. उत्. ना. मा. १८. रै. ॥२३३॥

१२. आश्वम्[2] ॥ अश्वः । गायत्री । पवमानस्सोमः ॥

प्रसोमासोऽ२विपश्चिताः ॥ अपोनयन्तऊर्माऽ२याः ॥ वनानिमाऽ२३ही ॥ पाऽ३२उवाऽ३ ॥ वाऽ२३४५ ॥ श्रीः ॥ अभिद्रोणाऽ२निबभ्रवाः ॥ शुक्रास्रुतस्यधाराऽ२या ॥ वाजङ्गोमाऽ२३न्ताम् ॥ आक्षाऽ३२उवाऽ३ ॥ गाऽ२३४५न् ॥श्रीः॥ सुताइन्द्राऽ२यवायवाइ ॥ वरुणायमरुद्भ्याऽ२याः ॥ सोमाअर्षाऽ२३न्तू ॥ वाइष्णाऽ३२उवाऽ३ ॥ वाऽ२३४५इ ॥

दी. १५. उत्. ५. मा. १६. नू. ॥२३४॥

१३. पञ्चम्[3] ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

प्रसोऽ४म । दाऽ४इवबी । तयाऽ३इ । सोइन्धुः ॥ नपाइ । प्येओणांसाऽ३ । अंशोपयाऽ३ । सामाऽरदाऽ२३४इराः ॥ नजा ॥

[1] अधिकशततमसूक्ते गीयते ।

[2] द्विचत्वारिंशत्तमसूक्ते गीयते ।

[3] त्रिचत्वारिंशत्तमसूक्ते गीयते ।

गृवौवाओऽ२३४वा । अच्छा । कोशौवाओऽ२३४वा ॥ मधूऽ५श्चुताम् ॥ श्रीः ॥ अच्छाऽ४को । शाऽ४म्मधु । श्चुताऽ३म् । आच्छा ॥ कोशाम् । मधूश्चूताऽ३म् । आहर्यतोऽ३ । अर्जूऽ२नोऽ२३४आ ॥ क्षेअ । व्यतौवा-ओऽ२३४वा । प्रियः । सूनौवाओऽ२३४वा ॥ नमाऽ५जियाः ॥ श्रीः ॥ प्रियाऽ४स्त्र् । नूऽ४नेस । जियाऽ३ः । मायाः ॥ सूनूः । नमार्जायाऽ३ः । तामीं२हिन्वाऽ३ । तियाऽ२पाऽ२३४साः ॥ यथा । रथौवाओऽ२३४वा । नदी । पुवौवाओऽ२३४वा ॥ नमाऽ५स्तियोः । होऽ५इ ॥डा॥

दी. १६. उ. ३. मा. २९. गो. ॥२३५॥

१४ अभीवर्तः[1] ॥ अभीवर्त । बृहती । इन्द्रः ॥

तवोऽ३दाऽ३स्वामृतीपहोवा ॥ वासोमेन्दा । नमान्वाऽ१साऽ२ः । आभिवत्साऽ३१२३४म् । नस्वसरे । पुषाइनाऽ१वाऽ२ः ॥ इन्द्राज्ञाऽ१-इमींऽ२ः ॥ नवाऽ३ । माऽ२३४५ ॥ हाऽ२३४५इ ॥श्रीः॥ इन्द्राऽ३ज्ञाऽ३-इभिर्नवामहोवा ॥ आइन्द्रज्ञीभिः । नवामाऽ१हाऽ२इ । बृक्ष२सुदाऽ३१-२३४ । नुन्तविषी । भिरावाऽ१र्ताऽ२म् ॥ गिराइन्नाऽ१पूऽ२ ॥ रुभोऽ३ । जाऽ२३४५ ॥ साऽ२३४५म् ॥ श्रीः ॥ गिराऽ३इन्नाऽ३पुरुभोजसोवा ॥ गाइरिन्नपु । रुभोजाऽ१साऽ२म् । चूमन्तंवाऽ३१२३४ । ज२शतिनम् । सहास्राऽ१इणाऽ२म् ॥ मच्चूगोऽ१माऽ२ ॥ तमाऽ३इ । माऽ२३४५ ॥ हाऽ२३४५इ ॥

दी. ८. उत्. ९. मा. २२. हा. ॥२३६॥

१५. सुज्ञानम्[2] ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

पवतेहा ॥ यतोहराइः । अतिह्वाराऽ२ । सिर२हिया ॥ असि-यार्षाऽ२ ॥ स्तोत् । स्योऽ२वाऽ२३४औहोवा ॥ स्वयशाएऽ३उपाऽ२३४५॥

दी. ५. उत्. ५. मा. ५. सु. ॥२३७॥

---

[1] त्रयोदशसूक्ते गीयते ।

[2] पञ्चचत्वारिंशत्तमसूक्तस्य मध्यमर्चि द्वे सामनी गीयेते ।



## अथ द्वादशोऽध्यायः ॥

### षष्ठप्रपाठकस्य द्वितीयोऽर्धः ॥

२२१. १, २, ४, गोतमो राहूगणः । ३. वसिष्ठो मैत्रावरुणिः । गायत्री । अग्निः ॥

७२९. उप प्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥१॥

७३०. यस्नीहितीषु पूर्व्यस्सञ्जग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥२॥

७३१. स नो वेदो अमात्यमग्नी रक्षतु शन्तमः । उतास्मान्पात्वꣳहसः ॥३॥

७३२. उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणेरणे ॥४॥

धा. १९. उ. १. स्व. ३. ति. ॥१॥

२२२. भरद्वाजो बार्हस्पत्यः । गायत्री । अग्निः ॥

७३३. अग्ने युङ्क्ष्वा हि ये तवाऽश्वासो देव साधवः । अरं वहन्त्याशवः ॥१॥

७३४. अच्छा नो याह्या वहाऽभि प्रयाꣳसि वीतये । आ देवान्त्सोमपीतये॥२॥

---

२२१. उपप्रयन्तः । उप । प्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति । च । शृण्वते ॥ यः । स्नीहितीषु । पूर्व्यः । सञ्जग्मानासु । सम् । जग्मानासु । कृष्टिषु । अरक्षत् । दाशुषे । गयम् ॥ सः । नः । वेदः । अमात्यम् । अग्निः । रक्षतु । शन्तमः । उत । अस्मान् । पातु । अꣳहसः ॥ उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रहा । वृत्र । हा । अजनि । धनञ्जयः । धनम् । जयः । रणेरणे । रणे । रणे ॥

२२२. अग्ने । युङ्क्ष्व । हि । ये । तव । अश्वासः । देव । साधवः । अरम् । वहन्ति । आशवः ॥ अच्छ । नः । याहि । आ । वह । अभि । प्रयाꣳसि । वीतये । आ । देवान् । सोमपीतये । सोम । पीतये ॥ उत् । अग्ने ।

---

१६. काशीतम् ॥ काशीतः । उष्णिक् । पवमानस्सोमः ॥

पवतेहा ॥ यतोहाऽ२३राऽ२३४इः । अतिह्वरा ॥ सिर२हाऽ२३-याऽ३४ ॥ अभियर्षा ॥ स्तोतृभ्योवीरवत् । याऽ२ । शाऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥

दी. ७. उत्. ३. मा. ३. जि. ॥२३८॥

७३५. उदग्ने भारत द्युमदजस्रेण दविद्युतत् । शोचा वि भाह्यजर ॥३॥

धा. १७. उ. न. स्व. ४. यी. ॥२॥

२२३. प्रजापतिर्वैश्वामित्रो वाच्यो वा । अनुष्टुप् । पवमानः सोमः ॥

७३६. प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अप श्वानमराधसꣳ हता मखन्न भृगवः ॥१॥

७३७. आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥२॥

७३८. स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥३॥

धा. २१. उ. २. स्व. ८. खै. ॥३॥

प्रथमः खण्डः ॥

---

भारत । द्युमत् । अजस्रेण । अ । जस्रेण । दविद्युतत् । शोच । वि । भाहि । अजर । अ । जर ॥

२२३. प्र । सुन्वानाय । अन्धसः । मर्तः । न । वष्ट । तत् । वचः । अप । श्वानम् । अराधसम् । अ । राधसम् । हत । मखम् । न । भृगवः ॥ आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । पुत् । त्रः । ओण्योः । सरत् । जारः । न । योषणाम् । वरः । न । योनिम् । आसदम् । आ । सदम् ॥ सः । वीरः । दक्षसाधनः । दक्ष । साधनः । वि । यः । तस्तम्भ । रोदसी इति । हरिः । पवित्रे । अव्यत । वेधाः । न । योनिम् । आसदम् । आ । सदम् ॥

---

१७. गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसु । न्वानाऽ३ । यअन्धसाः ॥ मर्तोनवष्टतद्वचाऽ२३ः । आप-श्वानाऽ३१२३म् । अराऽ५धसाम् ॥ हातामखाऽ३१२३म् ॥ नभोवा । गाऽ५वोऽ६"हाइ ॥ श्रीः ॥ आजा । मिराऽ३ । त्केअव्यता ॥ भुजेनपुत्र-ओणियोऽ२३ः । सारजाराऽ३१२३ः । नयोऽ५षणाम् ॥ वारोनयो-



ऽ३१२३ ॥ निमोवा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ सवी । रोदाऽ३ । क्षसाधनाः ॥ वियस्तस्तम्भरोदसाऽ२३इ । हारिःपवाऽ३१२३इ । त्रेआ-ऽ५व्यता ॥ वाइधानयोऽ३१२३ ॥ निमोवा । साऽ५दोऽ६"हाइ ॥

दी. १७. अनु. न. मा. १९. गो. ॥३९॥

१८. ओकोनिधनम् ॥ प्रहितिः । अनुष्टुप् । पवमानस्सोमः ॥

आजाऽ३मिरत्केअव्यता । भुजाइ । नपुत्रओऽ२णायोऽ२ः । सर-ज्जारनयोऽ२षाणाऽ२म् ॥ वरोनाऽ२३४यो ॥ निमा । साऽ२दाऽ२३४-औहोवा ॥ ओऽ२३४काः ॥

दी. ८. अनु. ३. मा. ७. डे. ॥२४०॥

१९. औदलम् ॥ उद्लः । अनुष्टुप् । पवमानस्सोमः ॥

सवीरोदा ॥ क्षसाऽ२धनाः । वियस्तस्ताऽ३ । भारोदाऽ२३४-साइ ॥ हरिःपवाइ ॥ त्रेआऽ२व्यता । वेधानाऽ२३योऽ३ । नाऽ२३-इमाऽ३ । साऽ३४५दोऽ६"हाइ ॥

दी. ४. अनु. २. मा. ६. थू. ॥२४१॥

२०. साध्रम् ॥ साध्रः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसुन्वाऽ३नायअन्धसाः ॥ मर्तोनवाऽ२ । ष्टताऽ३४५त् । वा-ऽ२३४चाः । अपश्वानमराधसाऽ२३४५म् ॥ हाताओऽ२३४वा । माखाओ-ऽ२३४वा ॥ नभृऽ६गवाः ॥ श्रीः ॥ आजामाऽ३इरत्केअव्यता ॥ भुजाइन-पूऽ२त्र् । त्रओऽ३४५ । णीऽ२३४योः । सरजारोनयोषणाऽ२३४५म् ॥ वाराओऽ२३४वा । नायाओऽ२३४वा ॥ निमाऽ५सदाम् ॥ श्रीः ॥ सवीरो-ऽ३दक्षसाधनाः ॥ वियास्तस्ताऽ२ । म्भरोऽ३४५ । दाऽ२३४सी । हरिःप-वित्रेअव्यताऽ२३४५ ॥ वाइधाओऽ२३४वा । नायाओऽ२३४वा ॥ निमाऽ५सदाम् । होऽ५इ ॥डा॥

दी. १२. अनु. ३. मा. २४. जु. ॥२४२॥

प्रथमो विंशः ॥

षष्ठःप्रपाठकः ॥

१. [1]हाविष्मतम् ॥ हविष्मान् । गायत्री । पवमानस्सोमः ॥

हाउवृषापवस्वधारयाहाउ । मरुत्वताऽ३इ । चामत्साऽ२३४रा: । ऐऽ२होऽ१आऽ२३इही ॥ विश्वादाऽ३धा ॥ नओ । जाऽ२साऽ२३४औहोवा ॥ श्रीः ॥ हाउतन्त्वाधर्तारमोण्योहाउ ॥ पवमानाऽ३ । सूवर्दृऽ२३४शाम् । ऐऽ२होऽ१आऽ२३इही ॥ हिन्वेवाऽ३जाइ ॥ पुवा । जाऽ२इनाऽ२३४- औहोवा ॥ श्रीः ॥ हावयाचित्तोविपानयाहाउ ॥ ~~हरिस्पवाऽ२ । स्वाधरा~~- ऽ२३४या । ऐऽ२होऽ१आऽ२३इही ॥ युजाम्वाऽ३जाइ ॥ पुचो । दाऽ२या- ऽ२३४औहोवा ॥ हविष्मतेऽ२३४५ ॥ दी. २४. उत्. ७. मा. २१. थ. ॥२४३॥

२. यौक्ताश्वोत्तरम् ॥ युक्ताश्वः । गायत्री । पवमानस्सोमः ॥

वृषाओहोहोहाइ ॥ पवऽ३स्वाधाऽ१रायाऽ३ ॥ मारूऽ२त्वाऽ२३४- ताइ । चमाऽ३ । ओइ । चमाऽ२त्साऽ२३४रा: ॥ विश्वाओहोहोहाइ ॥ दधाऽ२नाऽ२३४ओ । जाऽ२साऽ२३४औहोवा ॥ श्रीः ॥ तन्त्वा- औहोहोहाइ ॥ धर्ताऽ३रामोऽ१णायोऽ३: । पावाऽ२माऽ२३४ना । सुवाऽ३ । ओइ । सुवाऽ२र्दृऽ२३४शाम् ॥ हिन्वाओहोहोहाइ ॥ वाजाऽ२- इषूऽ२३४वा । जाऽ२इनाऽ२३४औहोवा ॥ श्रीः ॥ अयाओहोहोहाइ ॥ चित्तोऽ३वाइपाऽ१नायाऽ३ । हाराऽ२इ४पाऽ२३४वा । स्वधाऽ३ । ओ । स्वधाऽ२राऽ२३४या ॥ युजाओहोहोहाइ ॥ वाजाऽ२इषूऽ२३४चो । दाऽ२- याऽ२३४औहोवा ॥ ओइ । जूऽ२३४वा ॥

दी. २२. उत्. ६ मा. २८. चै. ॥२४४॥

३. [1]माधुश्छन्दसम् ॥ मधुच्छन्दाः । बृहती । पवमानस्सोमः ॥

परीतोषा । होइ । चतासुताऽ६मै ॥ सोमोयऊ । ताम२हाऽ२३४- वीः । दधन्वायोनर्योअ । प्सुवान्तारा । औहोऽ३४वाहाइ ॥ सुषावासो । औहोऽ३४वाहा ॥ समद्राऽ२३इमाऽ३४३इः । ओऽ२३४५इ ॥डा॥

दी. १२. उत्. ५. मा. ९. भो. ॥२४५॥

४. [1]ऐडमायास्यम् ॥ अयास्यः । बृहती । पवमानस्सोमः ॥

आइपराइ ॥ तोपाइ । चतासुताम् । सोमोयऊऽ३१ । तम२हवाइः । दाधन्वायाऽ३१: । नर्याआ । प्सुवन्तरा ॥ सुषावमोऽ३१ ॥ समद्रा- ऽ२३इमाऽ३४३इः ॥ श्रीः ॥ आइनुपा ॥ वासो । समद्रिभाइः । मृषा- वसोऽ३१ । समद्रिभाइः । नूनंपुनाऽ३१ । नोअविभाइः । परिस्रवा ॥ आदब्धस्सूऽ३१ । रभिन्ताऽ२३राऽ३४३: ॥ श्रीः ॥ आअदा ॥ ब्धास्सू । रभिन्तराः । आदब्धस्सूऽ३१ । रभिन्तराः । सुतेचित्वाऽ३१ । प्सुमदा । मोअन्धसा ॥ आइणन्तोगोऽ३१ ॥ भिरुत्ताऽ२३राऽ३४३म् । ओ- ऽ२३४५इ ॥डा॥ दी. १० उत्. १२. मा. २८ के. ॥२४६॥

५. [2]त्रिणिधनमायास्यम् ॥ अयास्यः । बृहती । पवमानस्सोमः ॥

श्रीणन्तोगोभिरुहाउहोवा । ताग२श्राऽ२३४इणा । तोगोऽ२ । भिरूऽ३४५ । ताऽ२३४राम् ॥ पराऽ३४ । औहोवा ॥ स्वानबसरसेदाऽ२इ । वमाऽ३४५ । दाऽ२३४नाः ॥ क्रतूऽ३४ । औहोवा ॥ आइन्दूऽ२: । विचाऽ३४५ ॥ क्षाऽ२३४णाः ॥ दी. १२. उत्. २. मा. ८. कै. ॥२४७॥

६. [3]पार्थम् ॥ पृथुर्वैन्यः । त्रिष्टुप् । पवमानस्सोमः ॥

ओऽ२होऽ२होइ । वृषाशोणो । अभिक । निक्रदद्गाः ॥ नदयन्नाइ । पौऽ३पृपि । वीमुतयाम् ॥ इन्द्रस्येवा । वग्नुरा । शृण्वआजाउ ॥ प्रचोद- यान् । अर्षसि । वाऽ३४२ । चाऽ३माऽ४इ माऽ६५६म् ॥ श्रीः ॥ रसायियाः ।

[1] द्वे सामनी पञ्चपञ्चाशत्तमसूक्ते गीयेते ।
[2] अष्टनवत्युत्तरशततमसूक्तस्य प्रथमायां स्तोत्रीयायां गीयते ।

[1] अष्टनवत्युत्तरशततमसूक्ते गीयते ।
[2] अष्टनवत्युत्तरशततमसूक्तस्य द्वितीयायां चतुर्थपादे द्विपदाविराजि च गीयते ।
[3] षट्पञ्चाशत्तमसूक्ते गीयते ।

पयसा । पिन्वमानाः ॥ ईरयन्नाइ । पीऽ३मधु । मन्तम॰शूम् ॥ पवमाना ।
सन्तनिम् । एपिकृरवान् ॥ इन्द्रायसो । माऽ३परि । पाऽ३४३इ ।
च्याऽ३माऽ५"नाऽ६५६ः ॥ श्रीः ॥ एवापवा । स्वाऽ३मदि । रोमदाया ॥
उदग्राभा । स्याऽ३नम । यन्वघस्नूम् ॥ परिवर्णाम् । भरसा । पौरु-
शन्ताम् ॥ ओऽ३होऽ३होइ । गव्युर्नोअ्रा । पाऽ३परि । सोऽ३४३ ।
माऽ३साऽ५इ"क्ताऽ६५६ः ॥ दी. १५. उत्. १८. मा. २४. चौ. ॥२४८॥

७. [1]अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

अभाऽ३इप्राऽ३वस्सुराधसोवा ॥ आइन्द्रमर्च । यथावाऽ१इदा-
ऽ२इ । योजरित्रिऽ३१२३४ । भ्योमघवा । पुरूवाऽ१सुऽ२ः ॥ सहास्रेऽ१-
णाऽ२इ ॥ वशाऽ३इ । क्षाऽ२३४५ ॥ ताऽ२३४५इ ॥ श्रीः ॥ सहाऽ३-
स्रेऽ३णेवशिक्षतोवा ॥ साहस्रेणे । वशाइक्षाऽ१ताऽ२इ । शतानीका-
ऽ३१२३४इ । वप्रजिगा । तिधाघ्णुंऽ१याऽ२ ॥ हन्ताइवाऽ१त्रोऽ२ ॥
खिदाऽ२ । शूऽ२३४५ ॥ पाऽ२३४५इ ॥ श्रीः ॥ हन्ताऽ३इवाऽ३त्रोखि-
दाशुषोवा ॥ हान्तिवृत्रा । णिदाशूऽ१पाऽ२इ । गाइरेरिवाऽ३१२३४ ।
प्ररसाध्र । स्यपाइन्वाऽ१इराऽ२इ ॥ दत्राणाऽ१इपूऽ२ । रुभोऽ३ ।
जाऽ२३४५ ॥ साऽ२३४५ः ॥ दी. १२. उत्. ९ मा. २२ शा. ॥२४९॥

८. [2]शकु ॥ प्रजापतिः । ककुप् । पवमानस्सोमः ॥

पवस्वमा । एऽ२ । धुमा ॥ तमाः । इन्द्रायसोमक्रतुवित्तमोमा-
ऽ२३दाः ॥ माहीऽ२धूक्षाऽ२३ ॥ तमोऽ२३४वा । माऽ५दोऽ६"हाइ ॥
श्रीः ॥ महिधुक्षा । एऽ२ । तमाः ॥ मदो । यस्यतेपीत्वावृषभोवृषाया-
ऽ२३ताइ ॥ आस्याऽ२पाइत्वाऽ२३ ॥ सुवोऽ२३४वा । वाऽ५इदोऽ६"हाइ ॥

[1] अष्टपञ्चाशत्तमसूक्ते गीयते ।
[2] षोडशसूक्ते गीयते ।



२२४. सोभरिः काण्वः । ककुप्सतोबृहत्यौ । इन्द्रः ॥

७३९. अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
युधेदापित्वमिच्छसे ॥१॥

२२४. अभ्रातृव्यः । अ । भ्रातृव्यः । अना । त्वम् । अनापिः । अन । आपिः । इन्द्र । जनुषा । सनात् । असि । युधा । इत् । आपित्वम् । इच्छसे ॥

श्रीः ॥ अस्यपीत्वा । एऽ२ । सुवाः ॥ विदाः । ससुप्रकेतोअभियक्रमोदा-
ऽ२३इषाः ॥ आच्छाऽ२वाजाऽ२३म् ॥ नयोऽ२३४वा । ताऽ५-
शोऽ६"हाइ ॥ दी. १५. उत्. ४. मा. १६. भू. ॥२५०॥

९. [1]गौरीवितम ॥ गौरीवितिः । अनुष्टुप् । पवमानस्सोमः ॥

अयम् । पूषाऽ३ । रयिर्भगाः ॥ सोम॰पुनानोअर्षताऽ२३इ ।
पतिर्विश्वाऽ३१२३ । स्यभूऽ५मनाः ॥ वायस्यद्रोऽ३१२३ ॥ दसोवा ।
ऊऽ५भोऽ६"हाइ ॥ श्रीः ॥ सखु । प्रियाऽ३ः । अनूषता ॥ गावोमदाय-
घृष्वयाऽ२३ः । सोमास॰कृाऽ३१२३ । ण्वताऽ५इपथाः ॥ पावमाना-
ऽ३१२३ ॥ सश्रोवा । दाऽ५वोऽ६"हाइ ॥ श्रीः ॥ यओ । जिष्ठाऽ३ः ।
तमाभरा ॥ पवमानश्रवायियाऽ२३म् । यो॰पञ्चचाऽ३१२३ । पणाऽ५-
इरभाइ ॥ रायियेनाऽ३१२३ । वनोवा । माऽ५होऽ६"हाइ ॥
दी. १५. उत्. न. मा. १८. वै. ॥२५१॥

प्र. १.२२६

१०. उक्थ्यामहीयवम् ॥ असहीयुः । ककुप् । इन्द्रः ॥

अभ्रातृऽ३व्योअनातुवाम् । अनापाऽ१इराऽ२इ । द्रजनुषासना-
ऽ२३दसाइ ॥ युधेदापाइ ॥ त्वमाऽ२३इच्छसाउ । वाऽ३ ॥श्रीः॥ युधेदा-
ऽ३पित्वमिच्छसाइ ॥ नकाइराऽ१इवाऽ२ । त॰सखियायवाऽ२३इन्दसाइ ॥

[1] एकपञ्चाशत्तमसूक्ते गीयते ।

२. ¹ऐडं कावम् ॥ कविः । जगती । पवमानस्सोमः ॥

एऽ५ । अभिप्रियाऽ२ । णिपवताइ । एऽ५ । चनोहिताः ॥ एऽ५ । नामानियाऽ२ । ह्वोअधियाइ । एऽ५ । पुवर्द्धताइ ॥ एऽ५ । आसूरियाऽ२ । स्यबृहताः । एऽ५ । बृहन्नधी ॥ एऽ५ । रथंविष्वाऽ२ । चमरुहान् । एऽ५ । विचक्षणाः॥श्रीः॥ एऽ५ । ऋतस्यजाऽ२इ । ह्वापवताइ । एऽ५ । मधुप्रियाम् ॥ एऽ५ । वक्तापताऽ२इः । धियोअस्याः । एऽ५ । अदाभियाः ॥ एऽ५ । दधातिपूऽ२त् । त्रऽपित्रोः । एऽ५ । अपीचियाम् ॥ एऽ५ । नामतृताऽ२इ । यमधिरा । एऽ६ । चनन्दिवाः ॥ श्रीः ॥ एऽ५ । अवद्युताऽ२ । नऽकलशऽ । एऽ६ । अचिक्रदात् ॥ एऽ५ । नृभिर्येमाऽ२ । णऽकोशआ । एऽ६ । हिरण्ययाइ ॥ एऽ५ । अभीऋताऽ२ । स्यदोहनाः । एऽ५ । अनूषता ॥ एऽ६ । अधित्रिपाऽ२ । ष्ठुउपसाः । एऽ६ । विराजसाइ । होऽ५इ ॥ हा ॥ दी. १९. उत्. न. मा. ३०. लो. ॥३२४॥

३ ²समन्तम् ॥ अग्निः । बृहती । पवमास्सोमः ॥

परीतोपिञ्चतासुताम् ॥ सोमोयऊत्तम ऽहवाइः । दधन्वऽऽ२३याः । नारियोअ । प्सुवान्तारा । औहोऽ३४वाहाइ ॥ सु । पावाऽ२३सोऽ३ । होवाऽ३हा ॥ समद्राऽ२३इभाऽ३४३इः ॥ श्रीः ॥ सुपावसोममद्रिभाइः ॥ सुपावसोममद्रिभाइः ॥ नूनम्पूऽ२३ना । नोअविभिः । पराइस्रावा । औहोऽ३४वाहाइ ॥ अ । दाब्धाऽ२३स्सूऽ३ । होवाऽ३हा ॥ रभिन्ताऽ२३राऽ३४३ः ॥ श्रीः ॥ अदब्धस्सुरभिन्तराः ॥ अदब्धस्सुरभिन्तराः । सुतेचाऽ२३इत्वा । आप्सुमदा । मोआन्धासा । औहोऽ३४वाहाइ ॥ श्रीं ॥ यान्तोऽ२३गोऽ३ । होवाऽ३हाइ ॥ भिरुत्ताऽ२३राऽ३४३म् । औऽ२३४५इ ॥ हा ॥ दी. २०. उत्. ७. मा. २७. फे. ॥३२५॥

¹ एकोनविंशतितमसूक्ते गीयते । ² अष्टा... गीयते ।



४. ¹आसितासम् ॥ असितः । अनुष्टुप् । पवमानस्सोमः ॥

यओजिष्ठस्तमा ॥ भरा । पवमानश्रवाआऽ२३याम् । योऽपाऽ२श्चाचाऽ२ । पणीरभाइ ॥ रायीऽ२स्याइनाऽ२ ॥ वनोवाऽ३ओऽ२३४वा । माऽ५होऽ६हाइ ॥ दी. ४. उत्. २. मा. ७. थे. ॥३२६॥

५. ²ऐडं यामम् ॥ यमः । जगती । पवमानस्सोमः ॥

वृषामातीऽ२३ । नांपवाताऽ२३इ । एऽ३ । विचक्षणऽ३ ॥ सोमोआह्वाऽ२३म् । प्रतराइताऽ२३ । एऽ३ । उपसान्दिवऽ३ ॥ प्राणासाइन्धूऽ२३ । नाक्कलाशऽ२३ । एऽ३ । अचिक्रददेऽ३ ॥ इन्द्रस्याहाऽ२३ । दियावाइशाऽ२३न् । एऽ३ । मनीषिभिरेऽ३४३ ॥ श्रीः ॥ मनीषाइमाऽ२३इः । पवताइपूऽ२३ । एऽ३ । वियऽकविरेऽ३ ॥ नृभिर्यताऽ२३ः । परिकोशऽ२३ । एऽ३ । असिष्यददेऽ३ ॥ त्रितस्यानाऽ२३ । मजनायाऽ२३न् । एऽ३ । मधुक्षरन्ते ॥ इन्द्रस्यावाऽ२३ । युऽसखायाऽ२३ । एऽ३ । यवर्धयन्तेऽ३४३ ॥ श्रीः ॥ अयंपूनाऽ२३ । नउपासाऽ२३ः । एऽ३ । अरोचयदेऽ३ ॥ अयऽसाइन्धूऽ२३ । भ्योअभावाऽ२३न् । एऽ३ । उलोककृदेऽ३ ॥ अयन्त्राइस्साऽ२३ । मदुदूहाऽ२३ । एऽ३ । नआशिरमेऽ३ ॥ सोमोदार्दाऽ२३इ । पवताइचाऽ२३ । एऽ३ । ऋमत्सरऽ३४३ । औऽ२३४५इ ॥ हा ॥ दी. १७. उत्. २४. मा. २६. भू. ॥३२७॥

६. ³अभीवर्तः ॥ अभीवर्तः । बृहती । इन्द्रः ॥

वयाऽ३द्धाऽ२त्वासुतावन्तोवा ॥ आपोनवृ । क्तबार्हाऽ१इषाऽ२ः । पावित्रस्याऽ२१२३४ । प्रस्रवणे । पुवाताऽ१हाऽ२न् ॥ पराइस्तोऽ१ताऽ२ ॥ रआऽ३ । सोऽ२३४५ ॥ ताऽ२३४५इ ॥ श्रीः ॥ स्वराऽ३न्ताऽ३इत्वासुतन्-

¹ एकषष्टितमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
² द्विषष्टितमसूक्ते गीयते ।
³ ... गीयते ।

गेवा ॥ वासोनिरे । कऊक्थाऽ१इनाऽ२ः । कादागुताऽ३१२३४म् ।
तृपाणश्रो । कश्रागाऽ१माऽ२ः ॥ इन्द्रास्वाऽ१व्वीऽ२ ॥ ववाऽ३ । सा-
ऽ२३४५ । गाऽ२३४५ः ॥ श्रीः ॥ कण्वेऽ३भाऽ३इभृष्णवावृषोवा ॥
वाजन्दर्षि । सहास्राऽ१इणाऽ२म् । पाइशंगरूऽ३१२३४ । पम्मघवन् ।
विचार्पाऽ१खाऽ२इ ॥ मह्लगोऽ१माऽ२ ॥ तमाऽ३इ । माऽ२३४५ ॥
हाऽ२३४५इ ॥ दी. १०. उत्. ९. मा. २३. भि. ॥३२८॥

७. ¹सन्हितम् ॥ सन्हितः । गायत्री । पवमानस्सोमः ॥

तिस्रोवाचउत् । आऽ२इरताइ ॥ गावोऽ२ । माऽ२३इमा ।
तिवाऽ२इनावाः ॥ हाऽ२३रीः ॥ आऽ२इताइ । क्नाऽ२३ । हाउवाऽ३ ।
क्राऽ२३४दात् ॥श्रीः॥ अभिव्रजीर । नूऽ२पता ॥ यह्वाऽ२इः । आऽ२३र्ता ।
स्वमाऽ२तारः ॥ माऽ२३र्जा ॥ याऽ२न्ताइः । दिवाऽ२३ः । हाउवाऽ३ ।
शाऽ२३४इशुम् ॥ श्रीः ॥ रायस्समुद्रान् । चाऽ२तुरः ॥ अस्माऽ२ ।
स्याऽ२३न्सो । मवाऽ२इश्वाताः ॥ आऽ२३पा ॥ वाऽ२स्रा । सहाऽ२३ ।
हाउवाऽ३ । स्रीऽ२३४णाः ॥ दी. ६. उत्. ५. मा. २७. डे. ॥३२९॥

८. ²स्वारं त्वाष्ट्रीसाम ॥ त्वाष्ट्र्यः । अनुष्टुप् । पवमानस्सोमः ॥

सहस्रधाऽ२हा । रङ्पवाताऽ२इ ॥ समुद्रोवाऽ२हा । चर्मीह्वाया-
ऽ२ः ॥ सोमस्पताऽ२इहाइ । रयाइणाऽ२म् ॥ सखेन्द्रस्याऽ२हाइ । दिवाऽ३-
होऽ२३४ । वा । दाऽ५इवोऽ६"हाइ ॥ दी. ४. उत्. १. मा. ९. तो. ॥३३०॥

९. ³सत्रासाहीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

अस्याऽ३४ । प्रत्नामनुद्युतम् । ओऽ६वा ॥ शुक्रंदुदुहेअह्राऽ२याः ।
पाऽ२याः । साऽ२३हा ॥ ससोऽ२हो । वाहाऽ३४३इ ॥ ओऽ२३४वाँ-

¹ अष्टसप्ततितमसूक्ते गीयते ।
² एकोनाशीतितमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
³ एकोनचत्वारिंशत्तमसूक्ते गीयते ।



ऽ६"हाइ ॥ अयाऽ२४म् । सूर्यइवोपदृक् । ओऽ६वा ॥ अयन्मरन्सि-
धाऽ२ताइ । साऽ२सा । प्राऽ२३वा ॥ नसोऽ२हो । वाहाऽ३४३इ ॥
दाऽ२३४इवोऽ६"हाइ ॥श्रीः॥ अयाऽ२४म् । विश्वानितिष्ठति । ओऽ६वा ॥
पुनानोभुवनोपाऽ२राइ । सोऽ२मो । दाऽ२३इवाः ॥ नसोऽ२हो । वाहा-
ऽ३४३इ ॥ राऽ२३४योऽ६"हाइ ॥ दी. १६. उत्. न. मा. २०. ही. ॥३३१॥

१०. ¹उत्सेधः ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

तवाहन्सोमरारण । सख्ये । इन्दाऽ२४ओहोवा ॥ दिवेदिवाऽ२इ ।
हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ पुरूऽ२णिवा । ओहोवाहाइ । ब्रोनिचरा ।
तिमामव । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ पराऽ२इहीन्र । ओहोवाहाइ ॥
तितन्ऽ३आऽ५इहाऽ६५६इ ॥श्रीः॥ परिबोन्रतितान्इहि । परि । पीऽन्रा-
ऽ२४ओहोवा ॥ तिताऽइहाऽ२इ । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥
तवाऽ३हन्ना । ओहोवाहाइ ॥ कामुतसो । मतेदाइवा । हाऽ३१उवाऽ२३ ।
ऊऽ३४पा ॥ दुहाऽ३नोव । ओहोवाहाइ ॥ भ्रऊऽ२घाऽ५नाऽ६५६इ ॥
श्रीः ॥ दुहानोवभ्रऊधनि । दुहा । नोवाऽ२४ओहोवा ॥ भ्रऊधनाऽ२इ ।
हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ घृणाऽ२तपा । ओहोवाहाइ ॥ तामतिह्व ।
रियंपार । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ शक्रुऽ२नाज । ओहोवाहाइ ॥
वपाऽ३साऽ५इषाऽ६५६ ॥ ऊऽ२३४५ ॥
दी. २३. उत्. ६. मा. ३१. ट. ॥३३२॥

११. ²भरद्वाजस्य प्रश्निः ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

दुहानोऽ२३वभ्रऊधनिहाउ ॥ दुहानोवभ्रऊधनि । घृणातेऽ१-
पाऽ२३ । होवाऽ२हा । तामतिह्व । रियंपाऽ१राऽ२३ः । होवाऽ२हाइ ॥

¹ चतुर्नवतितमसूक्ते गीयते ।
² चतुर्नवतितमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।

शकुनाऽ१आऽ२३इ । होवाऽ३हाइ ॥ वापस्निम । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

दी. ५. उत्. ३. मा. ९. बो. ॥२३३॥

१२. [1]पार्थम् ॥ पृथुर्वैन्यः । त्रिष्टुप् । पवमानस्सोमः ॥

ओऽ२होऽ२होइ । शिशुंजज्ञा । नाऽ३ॅ९हर्य । तंमृजन्ताइ ॥ शुंभन्तिवाइ । प्राऽ३म्मरु । तोगणेना ॥ कविर्गीर्भीइः । काऽ३विये । नाकविस्सान् ॥ सोम ४ पवाइ । त्राऽ२मेति । आऽ३४३इ । तोऽ३राऽ५इ॑- भाऽ६५६न् ॥श्रीः॥ ऋपिमनाः । याऽ३ऋषि । कृत्सुवर्पाः ॥ सहस्रनाइ । थाऽ३ ४ पद । वी ४ कवीनाम् ॥ तृतीयंधा । माऽ३महि । पस्सिपासान् ॥ सोमोविरा । जाऽ३मनु । राऽ२४३ । जाऽ३ताऽ५इ॑ष्टूऽ६५६प् ॥ श्रीः ॥ चमूपच्छ्याइ । नाऽ३श्शकु । नोविभृत्वा ॥ गोविन्दुर्द्रा । प्साऽ३आयु । धानिबिभ्रत् ॥ अपामूर्मीइम् । सचमा । नस्समुद्राम् ॥ ओऽ२होऽ२होइ । तुरीयंधा । माऽ२महि । षोऽ२४३ । माऽ२इवाऽ५''क्साऽ६५६इ ॥

दी. १४. उत्. १२. मा. २७. दे. ॥३३४॥

१३. [2]सफम् ॥ देवाः । ककुप् । पवमानस्सोमः ॥

अभिसूऽ२३प्र । इषाऽ२३४शाः ॥ इषस्पताइदीऽ२ । दीहिदा- इवाऽ२दाऽ३इ । वाऽ२२३४यूम् ॥ विको ॥ शम्भाध्याऽ२शाऽ३म् । यूऽ२३५वोऽ६''हाइ ॥

दी. १. उत्. ४. मा. ७. घे. ॥३३५॥

१४. [3]शुध्यम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

प्राणाशिश्शूऽ२र्भ । हीनोवा ॥ हिन्वन्नृता । स्यदीधिताइम् । विश्वापरिश्रियाभुवद । धाऽ२३ । द्वितावा । श्रूथियाऽ२ ॥ एऽ२३हिया- ऽ२४३ । ओऽ२३४५इ ॥डा॥

दी. ७. उत्. २. मा. ४. छी. ॥३३६॥

[1] सप्तपद्युत्तरशततमसूक्ते गीयते ।
[2] द्वाविंशत्युत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[3] त्रयोविंशत्युत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।



२३९. नृमेधपुरुमेधावाङ्गिरसौ । अनुष्टुब्बृहत्यौ । इन्द्रः ॥

७७९. यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥१॥

७८०. तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥२॥

२३९. यत् । जायथाः । अपूर्व्य । अ । पूर्व्य । मघवन् । वृत्रहत्याय । वृत्र । हत्याय । तत् । पृथिवीम् । अप्रथयः । तत् । अस्तभ्नाः । उत । उ । दिवम् ॥ तत् । ते । यज्ञः । अजायत । तत् । अर्कः । उत । हस्कृतिः । तत् ।

१५. [1]निषेधः ॥ अङ्गिरसः । अनुष्टुप् । पवमानस्सोमः ॥

इन्दुरश्वोनाऽ२कृत्वियाः ॥ तन्दूरोषाम् । अमेनराऽ२ः । इहाऽ३ ॥ सोमाऽ३म्वाइश्वा । हाहोऽ२३४हा ॥ प्रियाथाऽ२३या । इहाऽ३ ॥ याज्ञाऽ३यासा । हाहोऽ२३४हा ॥ तुवाऽ३द्राऽ५याऽ६५६ः ॥ हेऽ२३४५ ॥

दी. ४. उत्. ३. मा. ५. तु. ॥३३७॥

१६. [2]कावम् ॥ कविः । जगती । पवमानस्सोमः ॥

घर्तावा ॥ दिव ४ पवतेका । त्रियोरासाऽ२ः । दक्षोदेवानामनुमा । दियोनृभाऽ२इः ॥ इरिस्सृजानोअतियो । नसत्वाभाऽ२इः ॥ वार्थाऽ२- पाजा । सिक्रणुषाऽ२३इ । नादाऽ२इपूऽ५॑वाऽ६५६ ॥ श्रीः ॥ शूरोवा ॥ नघचआयुधा । गभस्त्योऽ२ः । स्वस्तिपासन्नथिरो । गविष्टिषूऽ२ ॥ इन्द्रस्यशुष्ममीरयान् । अपस्युभाऽ२इः ॥ आइन्दूऽ३इन्वा । नोअज्या- ताऽ२३इ । मानाऽ२इपाऽ५इ॑भाऽ६५६ः ॥ श्रीः ॥ इन्द्रोवा ॥ स्वसोम- पदमा । नऊर्मीइणाऽ२ । तविष्यमाणोजठराइ । पुआवाइशाऽ२ ॥ प्रन ४ पिन्वविद्युदभ्रे । वरोदासाऽ२३इ ॥ धायाऽ३नोवा । जाऽउपामाऽ२३ । हीवाऽ३श्वाऽ५॑ताऽ६५६ः ॥

दी. २१. उत्. १५. मा. ३०. जौ. ॥३३८॥

[1] अष्टादशसूक्तस्य तृतीयस्तोत्रीयायां गीयते । [2] अष्टपञ्चाशदुत्तरशततमसूक्ते गीयते ।

७८१. आमासु पक्वमैरय आ सूर्यꣳ रोहयो दिवि ।
घर्मन्न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥३॥

धा. ३०. उ. १. स्व. ७. पे. ॥१९॥

२४०. अगस्त्यो मैत्रावरुणिः । स्कन्दोग्रीव्यनुष्टुभौ । इन्द्रः ॥

७८२. मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥१॥

७८३. आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः ।
सहावाँ इन्द्र सानसिः पृतनाषाडमर्त्यः ॥२॥

७८४. त्वꣳ हि शूरः सनिता चोदयो मनुषो रथम् ।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥३॥

धा. २५. उ. ३. स्व. ३. वि. ॥२०॥

षष्ठः खण्डः ॥

इति द्वादशोऽध्यायः ॥

षष्ठप्रपाठकस्य द्वितीयोऽर्धः ॥

---

विश्वम् । अभिभूः । अभि । भूः । असि । यत् । जातम् । यत् । च । जन्त्वम् ॥ आमासु । पक्वम् । ऐरयः । आ । सूर्यम् । रोहयः । दिवि । घर्मम् । न । सामन् । तपता । सुवृक्तिभिः । सु । वृक्तिभिः । जुष्टम् । गिर्वणसे । गिः । वनसे । बृहत् ॥

२४०. मत्सि । अपायि । ते । महः । पात्रस्य । इव । हरिवः । मत्सरः । मदः । वृषा । ते । वृष्णे । इन्दुः । वाजी । सहस्रसातमः । सहस्र । सातमः ॥ आ । नः । ते । गन्तु । मत्सरः । वृषा । मदः । वरेण्यः । सहावान् । इन्द्र । सानसिः । पृतनाषाट् । अमर्त्यः । अ । मर्त्यः । त्वम् । हि । शूरः । सनिता । चोदयः । मनुषः । रथम् । सहावान् । दस्युम् । अव्रतम् । अ । व्रतम् । ओषः । पात्रम् । न । शोचिषा ॥



अथ त्रयोदशोऽध्यायः ॥

षष्ठप्रपाठकस्य तृतीयोऽर्धः ॥

२४१. कविर्भार्गवः । गायत्री । पवमानः सोमः ॥

७८५. पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि । अयक्ष्मा बृहतीरिषः ॥१॥

७८६. तया पवस्व धारया यया गाव इहागमन् ।
जन्यास उप नो गृहम् ॥२॥

७८७. घृतं पवस्व धारया यज्ञेषु देववीतमः । अस्मभ्यं वृष्टिमा पव ॥३॥

७८८. स न ऊर्जे व्यऽ३व्ययं पवित्रं धाव धारया ।
देवासः शृणवन् हि कम् ॥४॥

७८९. पवमानो असिष्यदद्रक्षाꣳस्यपजङ्घनत् । प्रत्नवद्रोचयन्रुचः ॥५॥

धा. २२. उ. १. स्व. ४. चौ. ॥२१॥

२४२. भरद्वाजो बार्हस्पत्यः । अनुष्टुब्बृहत्यौ । इन्द्रः ॥

७९०. प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरङ्गमाय जग्मयेऽपश्चाद्दघ्वने नरः ॥१॥

७९१. एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिन्द्रꣳ सुतेभिरिन्दुभिः ॥२॥

---

२४१. पवस्व । वृष्टिम् । आ । सु । नः । अपाम् । ऊर्मिम् । दिवः । परि । अयक्ष्माः । अ । यक्ष्माः । बृहतीः । इषः ॥ तया । पवस्व । धारया । यया । गावः । इह । आगमन् । आ । गमन् । जन्यासः । उप । नः । गृहम् ॥ घृतम् । पवस्व । धारया । यज्ञेषु । देववीतमः । देव । वीतमः । अस्मभ्यम् । वृष्टिम् । आ । पव ॥ सः । नः । ऊर्जे । वि । अव्ययम् । पवित्रम् । धाव । धारया । देवासः । शृणवन् । हि । कम् ॥ पवमानः । असिष्यदत् । रक्षाꣳसि । अपजङ्घनत् । अप । जङ्घनत् । प्रत्नवत् । रोचयन् । रुचः ॥

२४२. प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरङ्गमाय । अरम् । गमाय । जग्मये । अपश्चाद्दघ्वने । अपश्चा । दघ्वने । नरः ॥ आ ।

७९२. यदी सुतेभिरिन्दुभिस्सोमेभिः प्रतिभूषथ ।
वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥३॥

७९३. अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत् ॥४॥

धा. २३. उ. २. स्व. १. ठ. ॥२॥

प्रथमः खण्डः ॥

२४३. असितः काश्यपो देवलो वा । गायत्री । पवमानस्सोमः ॥

७९४. बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥१॥

७९५. हस्तच्युतेभिरद्रिभिस्सुतं सोमं पुनीतन । मधावा धावता मधु ॥२॥

७९६. नमसेदुप सीदत दध्नेदभि श्रीणीतन । इन्दुमिन्द्रे दधातन ॥३॥

७९७. अमित्रहा विचर्षणिः पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ॥४॥

---

ईम् । एनम् । प्रत्येतन । प्रति । एतन । सोमेभिः । सोमपातमम् । सोम । पातमम् । असत्रेभिः । ऋजीषिणम् । इन्द्रम् । सुतेभिः । इन्दुभिः ॥ यदि । सुतेभिः । इन्दुभिः ॥ सोमेभिः । प्रतिभूषथ । प्रति । भूषथ । वेद । विश्वस्य । मेधिरः । धृषत् । तन्तम् । तम् । तम् । इत् । आ । इषते ॥ अस्माअस्मै । अस्मै । अस्मै । इत् । अन्धसः । अध्वर्यो । प्र । भर । सुतम् । कुवित् । समस्य । जेन्यस्य । शर्धतः । अभिशस्तेः । अभि । शस्तेः । अवस्वरत् । अव । स्वरत् ॥

२४३. बभ्रवे । नु । स्वतवसे । स्व । तवसे । अरुणाय । दिविस्पृशे । दिवि । स्पृशे । सोमाय । गाथम् । अर्चत ॥ हस्तच्युतेभिः । हस्त । च्युतेभिः । अद्रिभिः । अ । द्रिभिः । सुतम् । सोमम् । पुनीतन । पुनीत । न । मधौ । आ । धावत । मधु । नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि । श्रीणीतन । श्रीणीत । न । इन्दुम् । इन्द्रे । दधातन । दधात । न । अमित्रहा । अमित्र । हा । विचर्षणिः । वि । चर्षणिः । पवस्व । सोम । शम् । गवे । देवेभ्यः ।



७९८. इन्द्राय सोम पातवे मदाय परि षिच्यसे । मनश्चिन्मनसस्पतिः ॥५॥

७९९. पवमान सुवीर्यं रयिं सोम रिरीहि णः । इन्दविन्द्रेण नो युजा ॥६॥

घा. ३२. उ. न. स्व. ६. यू. ॥३॥

२४४. सुकक्ष आङ्गिरसः । गायत्री । इन्द्रः ॥

८००. उदु घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥१॥

८०१. नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधीत् ॥२॥

८०२. स न इन्द्रः शिवस्सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहते ॥३॥

घा. ९. उ. १. स्व. ४. सी. ॥४॥

द्वितीयः खण्डः ॥

२४५. विभ्राट् सौर्यः । जगती । सूर्यः ॥

८०३. विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति ॥१॥

---

अनुकामकृत् । अनुकाम । कृत् ॥ इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे । मनश्चित् । मनः । चित् । मनसः । पतिः ॥ पवमान । सुवीर्यम् । सु । वीर्यम् । रयिम् । सोम । रिरीहि । नः । इन्दो । इन्द्रेण । नः । युजा ॥

२४४. उत् । उ । घ । इत् । अभि । श्रुतामघम् । श्रुत । मघम् । वृषभम् । नर्यापसम् । नर्य । अपसम् । अस्तारम् । एषि । सूर्य ॥ नव । यः । नवतिम् । पुरः । बिभेद । बाह्वोजसा । बाहु । ओजसा । अहिम् । च । वृत्रहा । वृत्र । हा । अवधीत् ॥ सः । नः । इन्द्रः । शिवः । सखा । अश्वावत् । गोमत् । यवमत् । उरुधारा । उरु । धारा । इव । दोहते ॥

२४५. विभ्राट् । वि । भ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञपतौ । यज्ञ । पतौ । अविह्रुतम् । अवि । ह्रुतम् । वातजूतः । वात । जूतः । यः । अभिरक्षति । अभि । रक्षति । त्मना । प्रजाः । प्र । जाः । पिपर्ति ।

८०४. विभ्राड् बृहत्सुभृतं वाजसातमन्धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥

८०५. इदꣳश्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥३॥

धा. २७. उ. ३. स्व. ३. जि. ॥५॥

२४६. वसिष्ठो मैत्रावरुणिः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

८०६. इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥१॥

८०७. मा नो अज्ञाता वृजना दुराध्योऽ३ माशिवासोऽव क्रमुः ।
त्वया वयं प्रवतश्शश्वतीरपोऽति शूर तरामसि ॥२॥

धा. ९. उ. न. स्व. १. ल. ॥६॥

---

वहुधा । वि । राजति ॥ विभ्राट् । वि । भ्राट् । बृहत् । सुभृतम् । सु । भृतम् । वाजसातमम् । वाज । सातमम् । धर्मन् । दिवः । धरुणे । सत्यम् । अर्पितम् । अमित्रहा । अमित्र । हा । वृत्रहा । वृत्र । हा । दस्युहन्तमम् । दस्यु । हन्तमम् । ज्योतिः । जज्ञे । असुरहा । असुर । हा । सपत्नहा । सपत्न । हा ॥ इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्तमम् । विश्वजित् । विश्व । जित् । धनजित् । धन । जित् । उच्यते । बृहत् । विश्वभ्राट् । विश्व । भ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतम् । अ । च्युतम् ॥

२४६. इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । पुत्र । त्रेभ्यः । यथा । शिक्ष । नः । अस्मिन् । पुरुहूत । पुरु । हूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥ मा । नः । अज्ञाताः । अ । ज्ञाताः । वृजनाः । दुराध्यः । दुः । आध्यः । मा । अशिवासः । अ । शिवासः । अव । क्रमुः । त्वया । वयम् । प्रवतः । शश्वतीः । अपः । अति । शूर । तरामसि ॥

---

१७. महावैष्टम्भम् ॥ विष्टम्भः । बृहती । इन्द्रः ॥

इन्द्रक्रतोहाइ । नआभरोवा ॥ पाइतापुत्रे । भियोयाऽ१थाऽ२३ । होवाऽ३हाइ । शिक्षाणोअस्मिन्पुरुहू । तयामाऽ१नीऽ२३ । होवाऽ३हाइ ॥ जीवाज्योऽ१ताऽ२३इः । होवाऽ३हाइ ॥ अशी । माऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ जीवाज्ज्योतोहाइ । अशीमहोवा ॥ जाइवाज्योतिः । अशाइमाऽ१-हाऽ२३इ । होवाऽ३हाइ । मानोअज्ञाताबृजनाः । दुराधाऽ१याऽ२३ः । होवाऽ३हाइ ॥ माशाइवाऽ१साऽ२३ः । होवाऽ३हाइ ॥ अव । काऽ२मू-ऽ२३४औहोवा ॥ श्रीः ॥ माशिवासोहाइ । अवक्रमोवा ॥ माशिवासः । अवाकाऽ१मूऽ२३ः । होवाऽ३हाइ । त्वयावयंप्रवतश्श । श्वताइगाऽऽ१-पाऽ२३ः । होवाऽ३हाइ ॥ अताइमूऽ१साऽ२३ । होवाऽ३हाइ ॥ तरा । माऽ२साऽ२३४औहोवा ॥ दीऽ२३४शाः ॥

दी. ३१. उत्. १२. मा. ३५. सु. ३३६॥

१८. [1]पौष्कलम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

सखायाऽ३आनि । षीदाऽ२३४ता ॥ पुनानाया । प्रागाया-ऽ२३४ता ॥ शिशू॑न्नया । ज्ञेॐपाऽ२राऽ२३४५इमूऽ६५६ ॥ पतश्रिये-ऽ२३४५ ॥ श्रीः ॥ समीवाऽ३त्सन्न । मातृऽ२३४भाइः ॥ सुजाताना । यासाधाऽ२३४नाम् ॥ देवा॑वियाम् ॥ मदाऽ२माऽ२३४५भाऽ६५६इ ॥ द्विबवसाऽ२३४५म् ॥ श्रीः ॥ पुनाताऽ३दक्ष । साधाऽ२३४नाम् ॥ यथाशर्द्धा । यवीताऽ२३४याइ ॥ यथा॑मित्रा । यवाऽ२रूऽ२३४५वा-ऽ६५६ ॥ यशन्तमाऽ२३४५म् ॥ दी. ७. उत्. १२. मा. ११. ष. ॥३४०॥

१९. [2]श्यैतम् ॥ प्रजापतिः । बृहती । इन्द्रः ॥

इन्द्रक्रतुनआ । भराऽ३४औहोवा ॥ पाइतापुत्रे । भियोयथा-ऽ२३४ । औऽ३हा । शिक्षाणोअस्मिन् । पूरूऽ२३हू । तयाऽ२ । मा-

[1] एकवद्‌द्विरुत्तरत्रातनमुखे गीयते ।   [2] षष्ठ्यन्तानीतियुतरहितततमसुखे गीयते ।

ऽ२३४नी ॥ जीवाज्योताइऽ२३शा ॥ हुम्माइ । माऽ२हाऽ२३४औहोवा ॥
श्रीः ॥ जीवाज्योतिरशा । महाऽ२३४औहोवा ॥ जाइवाज्योतिः । अशाइ-
महाऽ२३४इ । औऽ६हा । मानोअज्ञाताः । वार्जाऽ२३नाः । दुराऽ२ ।
घाऽ२३४याः ॥ माशिवासोआऽ२वा ॥ हुम्माइ । क्राऽ२मूऽ२३४औहोवा ॥
श्रीः ॥ माशिवासोअव । क्रमूऽ३४औहोवा ॥ माशिवासः । अवाक्रमू-
ऽ२३४ः । औऽ६हा । त्वयावयंप्र । वाताऽ२३शा । श्वताऽ२इः ।
आऽ२३४पाः ॥ अतिशूराताऽ२रा । हुम्माइ । माऽ२साऽ२३४औहोवा ॥
वाऽ२३४इ ॥ दी. ३८. उत्. ३. मा. २९. डो. ॥३४१॥

२०. [1]श्रुध्यम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रमच्छाऽ२सु । ताइमोवा ॥ वृषणंया । तुहरयाः । श्रुष्टेजाता-
सइन्दवस्सु । वाऽ२३ः । विदाउवा । श्रूधियाऽ२ ॥ श्रीः ॥ अयंभराऽ२य ।
सानसीवा ॥ इन्द्रायपा । वतेसुताः । सोमोजैत्रस्यचेततिय । थाऽ२३ ।
विदाउवा ॥ श्रूधियाऽ२ ॥ श्रीः ॥ अस्येदिन्द्रोऽ२य । देषुवोवा ॥
ग्राभंगृभ्णा । तिसानसाइम् । वज्रंचवृषणंभरत्सम् । आऽ२३ । प्सुजाउवा ॥
श्रूधियाऽ२ ॥ एऽ२३हियाऽ३४३ । औऽ२३४५इ ॥डा॥
दी. १८. उत्. ६. मा. १२. टा. ॥३४२॥

षष्ठो विंशः ॥

नवमस्यार्धप्रपाठकः ॥

१. [2]नौधसम् ॥ नोधाः । बृहती । इन्द्रः ॥

औऽ२३४३ । इन्द्रतुन्नशा । भारा ॥ पितापुत्रे । भीऽ२योवा-
ऽ३था । शोऽ२३इशा । णोअस्मिन् । पुरु । हू । तायामाऽ२३४नी ॥
जाऽ२३इवाः ॥ ज्योतिरशोऽ२३४वा ॥ माऽ२३४ही ॥श्रीः॥ जाऽ२३४इ ।
वाज्योतिरशी । माहाइ ॥ जीवाज्योताइः । आऽ२शाइमाऽ२हाइ । मा-

[1] सप्तदशसूक्ते गीयते ।
[2] षट्चत्वारिंशदुत्तरद्विशततमसूक्ते गीयते ।



ऽ२३नौ । आज्ञाताः । वृज । नाः । दुरायाऽ२३४याः ॥ मोऽ२३शाइ ॥
वासोअवोऽ२३४वा ॥ क्राऽ२३४मूः ॥ श्रीः ॥ माऽ२३४ । शिवासोअव ।
क्रामूः ॥ माशिवासो । आऽ२३वाक्राऽ३मूः । त्वाऽ२३या । वायंप्र । वतः ।
शा । श्वाताइराऽ२३४पाः ॥ आऽ२३ताइ ॥ शूरतरोऽ२३४वा ॥
माऽ२३४सी ॥
दी. १६. उत्. ३. मा. २६. गू. ॥३४३॥

२. [1]पौष्कलम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ।

पवतेऽ३हर्य । तोहाऽ२३४राइः ॥ अतिह्वरा । साइरंहाऽ२३४याः ॥
अभ्यर्षा । स्तोतृऽ२भ्योऽ२३४५वाऽ६५६इ । रवयशाऽ२३४५ः ॥
दी. १. उत्. ४. मा. ६. घू. ॥३४४॥

३. [2]आमहीयवम् ॥ अमहीयुः । गायत्री । पवमानस्सोमः ॥

अस्यप्रत्नामनुद्युताम् ॥ शुक्रान्दूऽ१दूऽ२ । हेआऽ२३ह्याः ॥
पयस्सहा ॥ स्साऽ२३मूषाउ । वाऽ३ ॥ श्रीः ॥ अयंपूऽ३यंइवोपदृक् ॥
अयाऽसाऽ१राऽ२ । सिषाऽ२३वताइ ॥ सद्मवा ॥ नआऽ२३दिषाउ ।
वाऽ३ ॥श्रीः॥ अयंवाऽ३इवानितिष्ठताइ ॥ पुनानोऽ१भूऽ२ । वनोऽ२३-
पराइ ॥ सोमोदेवाः । नखूऽ२३रियाउ । वाऽ३ । स्तोभेऽ२४५ ॥
दी. ८. उत्. ६. मा. १४. टी. ॥३४५॥

४. [3]कालेयम् ॥ कलिः । बृहती । पवमानस्सोमः ॥

परीतोऽ२षिञ्चतासुताम् ॥ सोमोयउ । त्तमंहवाऽ२३इः । दध-
न्वाँयाऽ३ः । नाऽ२३४ । र्योअप्सुव । वाऽ२रा ॥ सुषावसौ ।
वाऽ४२३औऽ२३४वा ॥ मेमाऽ५द्रिभाइः । हौऽ५इ ॥डा॥
दी. ५. उत्. १. मा. १०. पी. ॥३४६॥

[1] पञ्चचत्वारिंशत्तमसूक्तस्य गमयन्तस्तोभीयायां गीयते ।
[2] एकोनचत्वारिंशत्तमसूक्ते गीयते ।
[3] अष्टनवत्युत्तरशततमसूक्तस्य प्रथमस्तोभीयायां गीयते ।

२४७. भर्गः प्रागाथः। बृहतीसतोबृहत्यौ। इन्द्रः॥

८०८. अद्याद्या श्वश्व इन्द्र त्रास्व परे च नः।
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तश्च रक्षिषः ॥१॥

८०९. प्र भङ्गी शूरो मघवा तुवीमघस्संमिश्लो वीर्याय कम्।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥२॥
धा. १५. उ. न. स्व. ४. वी. ॥७॥

तृतीयः खण्डः॥

२४८. वसिष्ठो मैत्रावरुणिः। गायत्री। सरस्वान्॥

८१०. जनीयन्तो न्वग्रवः पुत्रीयन्तस्सुदानवः। सरस्वन्तꣳ हवामहे ॥१॥
धा. ३. उ. न. स्व. न. रौ. ॥८॥

२४९. भरद्वाजो बार्हस्पत्यः। गायत्री। सरस्वती॥

८११. उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा। सरस्वती स्तोम्या भूत् ॥१॥
धा. १. उ. न. स्व. न. ही. ॥९॥

२५०. विश्वामित्रो गाथिनः, मेधातिथिः काण्वः, शतं वैखानसाः।
गायत्री। सविता, ब्रह्मणस्पतिः, अग्निः पवमानः॥

८१२. तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥१॥

२४७. अद्याद्य। अद्य। अद्य। श्वश्वः। श्वः। श्वः। इन्द्र। त्रास्व। परे। च। नः। विश्वा। च। नः। जरितॄन्। सत्पते। सत्। पते। अहा। अ। हा। दिवा। नक्तम्। च। रक्षिषः॥ प्रभङ्गी। प्र। भङ्गी। शूरः। मघवा। तुवीमघः। तुवि। मघः। संमिश्लः। सम्। मिश्लः। वीर्याय। कम्। उभा। ते। बाहू इति। वृषणा। शतक्रतो। शत। क्रतो। नि। या। वज्रम्। मिमिक्षतुः॥

२४८. जनीयन्तः। नु। अग्रवः। पुत्रीयन्तः। पुत्र। ईयन्तः। सुदानवः। सु। दानवः। सरस्वन्तम्। हवामहे॥

२४९. उत। नः। प्रिया। प्रियासु। सप्तस्वसा। सप्त। स्वसा। सुजुष्टा। सु। जुष्टा। सरस्वती। स्तोम्या। भूत्॥



८१३. सोमानꣳ स्वरणं (कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः) ॥२॥

८१४. अग्न आयूꣳषि पवस (आ सुवोर्जमिषं च नः।
आरे बाधस्व दुच्छुनाम्) ॥३॥
धा. २. उ. न. स्व. १. य. ॥१०॥

२५१. यजत आत्रेयः। गायत्री। मित्रावरुणौ॥

८१५. ता नः शक्तं पार्थिवस्य (महो रायो दिव्यस्य। महि वां क्षत्रं देवेषु) ॥१॥

८१६. ऋतमृतेन सपन्तेषिरं दक्षमाशाते। अद्रुहा देवौ वर्धेते ॥२॥

८१७. वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः। बृहन्तं गर्तमाशाते ॥३॥
धा. ५. उ. १. स्व. २. पा. ॥११॥

२५२. मधुच्छन्दा वैश्वामित्रः। गायत्री। इन्द्रः॥

८१८. युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि ॥१॥

८१९. युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा ॥२॥

२५०. तत्। सवितुः। वरेण्यम्। भर्गः। देवस्य। धीमहि। धियः। यः। नः। प्रचोदयात्। प्र। चोदयात्॥ सोमानाम्। स्वरणम्। कृणुहि। ब्रह्मणः। पते। कक्षीवन्तम्। यः। औशिजः॥ अग्ने। आयूꣳषि। पवसे। आ। सुव। ऊर्जम्। इषम्। च। नः। आरे। बाधस्व। दुच्छुनाम्॥

२५१. ता। नः। शक्तम्। पार्थिवस्य। (महः। रायः। दिव्यस्य। महि। वाम्। क्षत्रम्। देवेषु)॥ ऋतम्। ऋतेन। सपन्ता। इषिरम्। दक्षम्। आशाते इति। अद्रुहा। अ। द्रुहा। देवौ। वर्धेते इति। वृष्टिद्यावा। वृष्टि। द्यावा। रीत्यापा। रीति॥ आपा। इषः। पती इति। दानुमत्याः। बृहन्तम्। गर्तम्। आशाते इति॥

२५२. युञ्जन्ति। ब्रध्नम्। अरुषम्। चरन्तम्। परि। तस्थुषः। रोचन्ते। रोचना। दिवि॥ युञ्जन्ति। अस्य। काम्या। हरी इति। विपक्षसा। वि। पक्षसा। रथे। शोणा। धृष्णू इति। नृवाहसा। नृ। वाहसा॥ केतुम्। कृण्वन्। अकेतवे।

८२०. केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥३॥

धा. ७. उ. न. स्व. १. य. ॥१२॥

चतुर्थः खण्डः ॥

२५३. उशना काव्यः । त्रिष्टुप् । पवमानः सोमः ॥

८२१. अय॰सोम इन्द्र तुभ्य॰सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्व॰ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥१॥

८२२. स ई॰रथो न भुरिषाडयोजि महः॰पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥२॥

अ । केतवे । पेशः । मर्याः । अपेशसे । अ । पेशसे । सम् । उषद्भिः ।
अजायथाः ॥

२५३. अयम् । सोमः । इन्द्र । तुभ्यम् । सुन्वे । तुभ्यम् । पवते । त्वम् ।
अस्य । पाहि । त्वम् । ह । यम् । चकृषे । त्वम् । ववृषे । इन्दुम् । मदाय ।
युज्याय । सोमम् ॥ सः । ईम् । रथः । न । भुरिषाट् । अयोजि । महः ।
पुरूणि । सातये । वसूनि । आत् । ईम् । विश्वा । नहुष्याणि । जाता । स्वर्षाता ।

५. पार्थम् ॥ पृथुर्वैन्यः । त्रिष्टुप् । इन्द्रः ॥

ओऽ२होऽ२होइ । अय॰सोमाः । इन्द्रतु । भ्य॰सुन्वाइ ॥
तुभ्यंपवा । ताऽ२इतुवम् । अस्यपाही ॥ तुव॰हयाम् । चकृषे । त्वंव-
वृषाइ ॥ इन्दुम्मदा । याऽ२युजि । याऽ२४२ । याऽ२सोऽ५"आऽ६५६म् ॥
श्रीः ॥ सई॰रथो । नभुरि । षाडयोजी ॥ महः॰पुरू । णीऽ२सात ।
याइवसूनी ॥ आदींविश्वा । नहुषि । याणिजाता ॥ सुवर्षाता । वनऊ ।
र्ध्वाऽ२४२ । नाऽ२वाऽ५"न्ताऽ६५६ ॥ श्रीः ॥ शुष्मीशर्धो । नमारु ।
तंपवस्वा ॥ अनभिशा । स्ताऽ२दिवि । यायथाविद् ॥ आपोनमा ।



८२३. शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः॰पृतनाषाण्न यज्ञः ॥३॥

धा. २६. उ. ४. स्व. ४. घी. ॥१३॥

स्वः । साता । वने । ऊर्ध्वा । नवन्त ॥ शुष्मी । शर्धः । न । मारुतम् । पवस्व ।
अनभिशस्ता । अन् । अभिशस्ता । दिव्या । यथा । विट् । आपः । न । मक्षु ।
सुमतिः । सु । मतिः । भव । नः । सहस्राप्साः । सहस्र । अप्साः । पृतना-
षाट् । न । यज्ञः ॥

क्षूऽ२सुम । तिर्भवानाः ॥ ओऽ२होऽ२होइ । सहस्राप्साः । पृतना ।
षाऽ२४२द् । नाऽ२याऽ५"ज्ञाऽ६५६ः ॥

दी. १४. उत्. १९. मा. १७. बे. ॥३४७॥

६. [1]स॰हितम् ॥ स॰हितः । गायत्री । पवमानस्सोमः ॥

परिसुवानः । गाऽ२इरिष्ठाः ॥ पवाऽ२इ । त्रेऽ२३सो । सोमाऽ२-
क्षारात् ॥ श्रीः ॥ तुवंविप्रस्तु । वाऽ२म्कवाइः ॥ मधूऽ२ । प्राऽ२३जा ।
तमाऽ२न्धासाः ॥ श्रीः ॥ तुवेविश्वे । जोऽ२षसाः ॥ देवाऽ२ ।
साऽ२३४पी । तिमाऽ२शाता ॥ माऽ२३दाइ ॥ षूऽ२सा । देवाऽ२३ः ।
हाउवाऽ३ ॥ आऽ२३४सी ॥ दी. ५. उत्. ३. मा. १३. वि. ॥३४८॥

७. [2]सत्रासाहीयम् ॥ इन्द्रः । ककुप् । पवमानस्सोमः ॥

पवाऽ२४ । स्वमधुमत्तमः । ओऽ६वा ॥ इन्द्रायसोमक्रतुवित्त-
मोमाऽ२दाः । माऽ२हाइ । षूऽ२३सा ॥ तमोऽ२हो । वाहाऽ२४३इ ॥
माऽ२३४होऽ६"हाइ ॥ श्रीः ॥ महाऽ२४इ । द्युक्षतमोमदः । ओऽ६वा ॥
यस्यतेपीत्वावृषभोवृषायाऽ२ताइ । आऽ२स्या । पाऽ२३इवा ॥ सुवोऽ२हो ।

[1] एकचत्वारिंशदुत्तरशततममूक्ते गीयते ।
[2] षोडशसूक्ते गीयते ।

वाहाऽ३४३इ ॥ वाऽ२३४इदोऽ६"हाइ॥श्रीः॥अस्याऽ३४। पीत्वासुवविंदः ।
ओऽ६वा ॥ ससुप्रकेतोअभियक्रमीदाऽ२इपाः । आऽ२च्छा । वाऽ२३जाम् ।
नओऽ३हो । वाहाऽ३४३इ ॥ ताऽ२३४शोऽ६"हाइ ॥
दी. २०. उत्. न. मा. २०. वौ. ॥३४९॥

८. [1]महावामदेव्यम् ॥ वामदेवः । त्रिपदानुष्टुप्पिपीलिकामध्या । पवमानस्सोमः ॥

पाऽ५रि । ऊषूऽ३णाऽ३धन्वाना ॥ जा । सातयेपरिवृत्राणिसक्ष-
णिर्द्धिपस्त । रा । औऽ३होहाइ । जा । सातयेपरिवृत्राणिसक्षणिर्द्धिपस्त ।
रा । औऽ३होहाइ । धियाऽ२३ऋणयाः ॥ नओहोऽ३ । हुम्माऽ२ ॥
राऽ२सोऽ३५"हाइ ॥ श्रीः ॥ आऽ५जी । जनोऽ३हाऽ३इपवमा ॥ ना ।
यरियंविधारेशक्मनापयोगोजीर । या । औऽ३होहाइ । ना । यरियं-
विधारेशक्मनापयोगोजीर । या । औऽ३होहाइ ॥ र७हाऽ२३माणाः ॥
पुरोहोऽ३ । हुम्माऽ२ ॥ धाऽ२योऽ३५"हाइ ॥श्रीः॥ आऽ५नु । हित्वाऽ३-
युऽ३त७सोमा ॥ भा । दामसिमहेसमर्यराज्येवाजा७अ । भा । औऽ३हो-
हाइ । भा । दामसिमहेसमर्यराज्येवाजा७अ । भा । औऽ३होहाइ ।
पवाऽ२३माना ॥ अगोहोऽ३ । हुम्माऽ२ ॥ हाऽ२सोऽ३५"हाइ ॥
दी. ४६. उत्. न. मा. १६. हू. ॥३५०॥

९. [2]यद्वाहिष्ठीयोत्तरम् ॥ अग्निः । अनुष्टुप् । पवमानस्सोमः ॥

इन्दुरश्वोनकृत्वियः । इन्दुरश्वोवा ॥ नकृत्वियाः । तन्दुरोऽ२३-
पाम् । अभीनराः । सोमंवाऽ२३इश्वा । धियाधिया ॥ यज्ञायाऽ२३सा ॥
तुवद्राऽ२३याऽ३४३ः । ओऽ२३४५इ ॥ डा ॥
दी. ५. उत्. ५. मा. ७. मे. ॥३५१॥

[1] षोडशोत्तरद्विशततमसूक्ते गीयते ।
[2] अष्टादशसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।



१०. [1]वारवन्तीयम् ॥ इन्द्रः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

परिप्रधाओहोहाइ ॥ न्वाईऽ२३४न्द्रा । यसोमाऽ२३४हाइ । स्वादु-
मित्राऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४या ॥ पू । ष्णाइ-
भगाऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । या ।
एहियाऽ६हा ॥ श्रीः ॥ एवामृताओहोहाइ ॥ यामाऽ२३४हे । क्षयाया-
ऽ२३४हाइ । सशुक्रोआऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ-
२३४र्पा ॥ दि । व्या४पीयूऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहो-
ऽ३१२३४ । षाः । एहियाऽ६हा ॥ श्रीः ॥ इन्द्रस्तेसोओहोहाइ ॥
मायूऽ२३४ता । स्यपेयाऽ२३४हाइ । क्रत्वेदक्षाऽ३४ । ओहोवा । इहाऽ२३४-
हाइ । उहुवाऽ२३४या ॥ वि । श्वाइपदाऽ३४ । ओहोवा ॥ इहाऽ२३४-
हाइ । ओहोऽ३१२३४ । वाः । एहियाऽ६हा । होऽ५इ ॥ डा ॥
दी. ३२. उत्. ६. मा. २२. चा. ॥३५२॥

११. [2]कावम् ॥ कविः । जगती । पवमानस्सोमः ॥

सूर्योवा ॥ स्येवरश्मयोद्रा । वयिवावाऽ२ः । मत्सरास४प्रसुतस्सा ।
कर्मीरातवाऽ२इ ॥ तन्तुन्ततंपरिसर्गा । सआशावाऽ२३ः ॥ नेन्द्राऽ३दातेइ ।
पवताइधाऽ२३ । मोकाऽ३इश्वाऽ५"नाऽ६५६ ॥ श्रीः ॥ उपोवा ॥
मति४पृच्यतेसाइ । च्यतेमायूऽ२ । मन्द्राजनीचोदतेआ । तरासानाऽ२इ ॥
पवमानस्सन्तनिस्सा । न्वतामाइवाऽ२३ ॥ मायूऽ३मान्द्रा । पस४पराइवा-
ऽ२३ । शमाऽ३र्षोऽ५"ताऽ६५६इ ॥ श्रीः ॥ उक्षोवा ॥ मिमेतिप्रतिया ।
तिधेनावाऽ२ः । देवस्यदेवीरुपया । तिनिष्कार्ताऽ२म् ॥ अत्यक्रमीदर्जुनंवा ।
रमव्यायाऽ२३म् ॥ आत्काऽ३नानी । कंपराइसोऽ२३ । मोआऽ३ण्णा-
ऽ५"ताऽ६५६ ॥
दी. २१. उत्. १५. मा. १८. कं. ॥३५३॥

[1] सप्तदशोत्तरद्विशततमसूक्ते गीयते । [2] अष्टादशोत्तरद्विशततमसूक्ते गीयते ।

१२. [1]पौरुमीढम् ॥ पुरुमीढः । बृहती । पवमानस्सोमः ॥

पवमा । नाभाऽ३४औहोवा ॥ आर्षसि । पवमाना । श्रियर्षाऽ२३आइ । पुनानोवा । रेयवाऽ२३मा । नोअव्ययाइ ॥ वृषोआऽ२३चाइ ॥ क्रदह्वाऽ२३४५नाऽ६५६इ ॥ दक्षाऽ२याऽ२३४५ ॥

दी. ११. उत्. ४. मा. ७. घे. ॥३५४॥

१३. [2]मानवाद्यम् ॥ मनुः । बृहती । पवमानस्सोमः ॥

मन्द्रयाया ॥ तिवाराऽ२३४या । ताइधाराऽ२३४या । मान्द्रयाया । तिवाराऽ१याऽ२ । अ । नू । पे । गोमान्गोऽ३ । भाऽ२इरा-ऽ२३४क्षाः ॥ सोमोदुग्धाऽ२३ ॥ भाऽ२इराऽ२३४औहोवा ॥ श्राऽ२३४क्षाः ॥

दी. ११. उत्. १. मा. ६. कू. ॥३५५॥

१४. [3]जनित्राद्यम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

परियाऽ३इ श्रातिता इहाइ ॥ हुवेहोऽ२इ । परिषीरतित आ-ऽ१इहाऽ२इ । तवाहभक्तसुतसोऽ२ । मताइदाऽ२३४इवा ॥ दुहाऽ३होइ । नोवाऽ२हो ॥ अऊ । घाऽ२नाऽ२३४औहोवा ॥ जनित्राऽ२३४५म् ॥

दी. ७. उत्. ३. मा. १३. जि. ॥३५६॥

१५. [4]भारद्वाजम् ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

अभिसोमा ॥ सआयाऽ१वाऽ२ः । पावन्तेमदंमदम् । समुद्रा-ऽ१स्याऽ२ । धाइविष्टपे । मनाइषाऽ१इणाऽ२ः ॥ मत्साराऽ१साऽ२३ः ॥ भाऽ२दाऽ२३४औहोवा ॥ च्यूऽ२३४ताः ॥

दी. ५. उत्. २. मा. १०. फौ. ॥३५७॥

[1] चत्वारिंशदुत्तरशततमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[2] सप्तदशोत्तरशततमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[3] चतुर्नवतितमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[4] त्रिसप्ततितमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।



१६. [1]इडावासिष्ठम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

उत्सोदेवोहिर । ण्ययाओऽ२३४वा । इयाहाइ ॥ हुवेहोऽ२इ । उत्सोदेवोहिरण्याऽ१याऽ२ः । दुहानऊधर्दिवियम् । मधुप्राऽ१याऽ२म् । ईऽ३या ॥ प्रत्नसाऽ२३४घा ॥ स्थमासाऽ२३४५दाऽ६५६त् ॥ श्रव-ऽ३साऽ२३४५इ ॥

दी. ९. उत्. ३. मा. ९. दो. ॥३५८॥

१७. [2]गौङ्गवम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

प्रसोमाऽ३देववीतयाइ ॥ साइन्धूऽ२ः । नपिप्येआऽ३ । णासा । अंशोःपयसामदाऽ२३इरोऽ२ । नजाऽ३गृवीः । अंशोःपयसामदिरः । नजाऽ३गृवीः ॥ आच्छाको । शा । ओऽ३हो ॥ मधोऽ२३४वा । श्चूऽ५तोऽ६हाइ ॥

दी. १०. उत्. ३. मा. ९. बो. ॥३५९॥

१८. पदनिधनशुद्धाशुद्धीयम् ॥ इन्द्रः । बृहती । पवमानस्सोमः ॥

प्रसोमदेववीतयाइ ॥ सिन्धुर्नपिप्येअर्णाऽ२३सा । अंशोःपय-सामदिरोनजागृऽ२३वीः ॥ अच्छाकोऽ२३शाऽ३म् ॥ माऽ२ । धुश्चू-ऽ३४औहोवा ॥ ताऽ२३४५म् ॥

दी. ११. उत्. १. मा. ६. कू. ॥३६०॥

१९. [3]पौरुमीढम् । पुरुमीढः । बृहती । इन्द्रः ॥

इन्द्रक्र । तुवाऽ३४औहोवा ॥ आभर । पितापुत्रे । भ्यियोया-ऽ२३था । शिक्षाणोअ्रा । स्मिन्पुरुऽ२३ । तयामनाइ ॥ जीवाज्यो-ऽ२३तीः ॥ अशीमाऽ२३४५हाऽ६५६इ ॥श्रीः॥ जीवाज्यो । तिराऽ३४-औहोवा ॥ शाइमहि । जीवाज्योतिः । अशीमाऽ२३हाइ । मानोअज्ञा । ताइजाऽ२३नाः । दुराधियाः ॥ माशिवाऽ२३साः ॥ अवक्राऽ२३४५-

[1] नवमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[2] त्रिचत्वारिंशत्तमसूक्तस्य प्रथमस्तोत्रीयायां द्वे सामनी गीयेते ।
[3] षड्चत्वारिंशदुत्तरद्विशततमसूक्ते गीयते ।

मूऽ६५६:॥श्रीः॥ साशिवा । सोआऽ३४औहोवा ॥ वाक्रमुः । माशिवासः ।
अवक्राऽ२३मूः । त्वयावयाम् । भवतार३श्शा । श्वतीरपाः ॥ अतिशू-
ऽ२३रा ॥ तरासाऽ२३४५साऽ६५६इ ॥ दक्षाऽ३याऽ२३४५ ॥

दी. ३५. उत्. १३ मा. २९. वा. ॥३६१॥

२०. [1]शुध्यम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

तंवस्सखाऽ२यः । सदायोवा ॥ पुनानक्षा । भिगायता । शिशु-
न्हव्यैस्स्वदयन्त । गूऽ२३ । तिभाउवा ॥ श्रूधियाऽ२ ॥ एऽ२३हिया-
३४३ । ओऽ२३४५इ ॥डा॥

दी. ५. उत्. २. मा. ३. फि. ॥३६२॥

सप्तमो विंशः ॥

नवसत्वार्द्धः द्वितीयो विभागः ॥

१. [2]मानवायम् ॥ मनुः । बृहती । इन्द्रः ॥

इन्द्रक्रतूम् ॥ नआभाऽ२३४रा । नआभाऽ२३४रा । पाइतापुत्रे ।
भियोयाऽ१थाऽ२ । शि । क्षा । णोअ । स्माइन्पुरुहूऽ३ । तयाऽ२सा-
ऽ२३४नी ॥ जीवाज्योताऽ२३इः ॥ आऽ२शाऽ२३४औहोवा ॥ मा-
ऽ२३४ही ॥श्रीः॥ जीवाज्योताइः ॥ अशीमाऽ२३४हाइ । अशाइमाऽ२३४-
हाइ । जाइवाज्योतिः । अशाइमाऽ१हाऽ२इ । मा । नः । अज्ञा ।
ताद्वृजनाऽ३ः । दुराऽ२घाऽ२३४याः ॥ माशिवासाऽ२३ः ॥ आऽ२वा-
ऽ२३४औहोवा ॥ क्राऽ२३४मूः ॥श्रीः॥ माशिवासाः ॥ अवक्राऽ२३४मूः ।
अवाक्राऽ२३४मूः । माशिवासः । अवाक्राऽ१मूऽ२ः । त्व । या । वयम् ।
प्रावतश्शाऽ३ । श्वताऽ२इराऽ२३४पाः ॥ अतिशूराऽ२३ ॥ ताऽ२रा-
ऽ२३४औहोवा ॥ साऽ२३४सी ॥

दी. २९. उत्. ३. मा. ३३. दि. ॥३६३॥

[1] सप्तचत्वारिंशदुत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[2] षट्चत्वारिंशदुत्तरद्विशततमसूक्ते गीयते ।



२. [1]पौष्कलम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

प्राणाशाऽ३इशुः । माहाऽ२३४इनाम् ॥ हिन्वानृता । स्वादा-
इयोऽ२३४तीम् ॥ विश्वा परा इ । प्रियाऽ२भूऽ२३४५वाऽ६५६त् ॥ अच-
क्रिताऽ२३४५ ॥श्रीः॥ उपत्रीऽ३तस्य । पापाऽ२३४योः ॥ अभाक्तयात् ।
गूहापाऽ२३४दाम् ॥ यज्ञा स्यसा । मघाऽ२साऽ२३४५भाऽ६५६इः ॥
अघप्रियाऽ२३४५म् ॥ श्रीः ॥ त्रीणित्रीऽ३तस्य । धाराऽ२३४या ॥
पृष्ठाइपुवाइ । रायद्राऽ२३४याइम् ॥ मिमाइ तेआ । स्वयोऽ२जाऽ२३४५-
नाऽ६५६ ॥ विसुक्रतूऽ२३४५ः ॥

दी. ४. उत्. १२. मा. २१. थ. ॥३६४॥

३. [2]जनित्रायम् ॥ वसिष्ठः । बृहती । इन्द्रः ॥

इन्द्रक्राऽ३तुन्नआभरा ॥ हुवेहोऽ२इ । पितापुत्रेभियोयाऽ१थाऽ२ ।
शिक्षाणोअस्मिन्पुरुहूऽ२ । तयामाऽ२३४नी ॥ जीवाऽ३होइ । ज्योता-
ऽ३इहों ॥ अशी । माऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ जीवाज्योऽ३तिरशी-
महाइ ॥ हुवेहोऽ२इ । जीवाज्योतिरशाइमाऽ१हाऽ२इ । मानोअज्ञाता-
वृजनाऽ२ः । दुराघाऽ२३४याः ॥ माशाऽ३इहोइ । वासाऽ२हो ॥ अव ।
क्राऽ२मूऽ२३४औहोवा ॥ श्रीः ॥ माशिवाऽ३सोअवक्रमूः ॥ हुवेहोऽ२इ ।
माशिवासोअवाक्राऽ१मूऽ२ः । त्वयावयंप्रवतश्शाऽ२ । श्वताइराऽ२३४-
पाः ॥ अताऽ२इहोइ । शूराऽ२हो ॥ तरा । भाऽ२साऽ२३४औहोवा ॥
जनित्राऽ२३४५म् ॥

दी. ३४. उत्. ७ मा. २७. पे. ॥३६५॥

४. [3]शुध्यम् ॥ प्रजापतिः ॥ उष्णिक् । पवमानस्सोमः ॥

सोम×पुनाऽ२नः । ऊर्मिणोवा ॥ अव्यंवारम् । विधावताइ ।
अग्रेवाच×पवमान×क । नाऽ२३इ । क्रदाउवा ॥ श्रूधियाऽ२ ॥ श्रीः ॥

[1] त्र्यशीतिचतुरुत्तरशततमसूक्ते गीयते ।
[2] षट्चत्वारिंशदुत्तरद्विशततमसूक्ते गीयते । [3] एकोत्तरशततमसूक्ते गीयते ।

र्घोभिर्मृजाऽ२न्ति । वाजिनोवा ॥ वनेक्रीडा । तमत्यवाइम् ॥ अभित्रि-
पृष्ठंमतयस्सम् । आऽ२३ । स्वराउवा ॥ अूधियाऽ२ ॥ श्रीः ॥ असजि-
क्राऽ२ल । शा॰अभोवा ॥ मीढ्वान्त्सप्ताइः । नवाजयूः । पुनानोवा-
चञ्जनयन । साऽ२३इ । ष्यदाउवा ॥ अूधियाऽ२ ॥ एऽ२३ह्रियाऽ३४३ ।
ओऽ२३४५इ ॥डा॥ दी. २१. उत्. ८. मा. १६. नू. ॥३६६॥

५. [1]भारद्वाजम् ॥ भरद्वाजः । बृहती । इन्द्रः ॥

इन्द्रक्रतूम् ॥ नआभाऽ१राऽ२ । पाइतापुत्रेभ्योयथा । शिक्षाणो-
ऽ१आऽ२ । स्माइन्पुरुहू । तयामाऽ१नीऽ२ ॥ जीवाज्योऽ१तार३इः ॥
आऽ२ञाऽ२३४औहोवा ॥ माऽ२३४ही ॥ श्रीः ॥ जीवाज्योताइः ॥
अशाइमाऽ१हाऽ२इ । जाइवाज्योतिरशीमहि । मानोआऽ१ज्ञाऽ२ । ताद्र-
जनाः । दुरावाऽ१याऽ२ः ॥ माशाइवाऽ१साऽ२३ः ॥ आऽ२वा-
२३४औहोवा ॥ क्राऽ२३४मूः ॥श्रीः॥ माशिवासाः । अवाक्राऽ१मूऽ२ः ।
माशिवासोअवक्रमुः । त्वयावाऽ१याऽ२म् । शाबतरश । श्वताइराऽ१-
पाऽ२ः ॥ अताइशूऽ१राऽ२३ ॥ ताऽ२राऽ२३४औहोवा ॥ णाऽ२३४सी ॥
दी. २५. उत्. ६. मा. २६. पो. ॥३६७॥

६. [2]मैधातिथम् । मैधातिथिः । बृहती । पवमानस्सोमः ॥

अभिसोमोहाइ ॥ सआऽ३यावाः । पवन्ताऽ२होऽ१इ । माऔ-
ऽ३हो ॥ दायाउवा । मादाउवा ॥ समुद्रस्याधिविष्टपाऔऽ३हो ॥ माना-
उवा । पाइणाउवा ॥ मत्सरासाऔऽ३हो । मदा । औहो । वाहोऽ२३४-
वा । च्यूऽ५तोऽ६"हाइ ॥ श्रीः ॥ मत्सरासोहाइ ॥ मदाऽ३च्युताः ।
मत्सराऽ२होऽ१इ । साऔऽ३हो ॥ मादाउवा । च्युताउवा ॥ तरत्समुद्रं-
पवमाऔऽ३हो ॥ नाआउवा । माइणाउवा ॥ राजादेवाऔऽ३हो ॥

[1] पद्यत्वारिंशदुत्तरद्विशततमसूक्ते गीयते । [2] त्रिसप्ततितमसूक्ते गीयते ।



ऋता । औहो । वाहोऽ२३४वा । बृऽ५होऽ६"हाइ ॥श्रीः॥ राजादेवोहाइ ॥
ऋताऽ३म्बृहात् । राजादाऽ२होऽ१इ । वाऔऽ३हो ॥ आताउवा । बृहा-
उवा ॥ अर्पामित्रस्यवरुणाऔऽ३हो ॥ स्याधाउवा । साणाउवा ॥
प्रहिन्वानाऔऽ३हो । ऋता । औहो । वाहोऽ२३४वा । बृऽ५होऽ६"हाइ ॥
दी. २०. उत्. ९. मा. ३७. भे. ॥३६८॥

७. [1]बार्हदुक्थम् ॥ बृहदुक्थः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्च । ताऽ२सुताम् ॥ सोमोयउत्तम॰हाऽ२३वाइः ।
दाधन्व॰याऽ२ः । नारियोआऽ२ । प्सुवन्तरा ॥ सुपावाऽ२३सो ॥
ममद्राऽ२३इभाऽ३४३ः ॥ श्रीः ॥ सुपावसोमम् । आऽ२द्रिभाइः ॥ सुपाव-
सोममद्राऽ२३इभाइः । नूनंपूनाऽ२ । नोअवाइभाऽ२इः । परिस्रवा ॥
अदब्धाऽ२३स्सू ॥ रभिन्ताऽ२३राऽ३४३ः ॥श्रीः॥ अदब्धस्सुर । भाऽ२-
इन्तराः ॥ अदब्धस्सुरभिन्ताऽ२३राः । सुतेऽ१चाइत्वाऽ२ । आप्सु-
मादाऽ२ । मोअन्धसा ॥ श्रीणन्तोऽ२३गो ॥ भिरुत्ताऽ२३राऽ३४३म् ।
ओऽ२३४५इ ॥ डा ॥ दी. ११. उत्. ७. मा. २७. ये. ॥३६९॥

८. [2]आध्वर्द्दवं॰सोमसाम ॥ सोमः । गायत्री । पवमानस्सोमः ॥

यस्तेमदोवरेणियाऽ३ए ॥ तेनापवस्वान्धसा ॥ देवावीराऽ२३ ।
हाइ । घाशाउवा । साहाउवाऽ३ ॥ श्रीः ॥ जघ्निर्वृत्रममित्रियाऽ३से ॥
सस्निर्वाजंदिवेदिवाइ ॥ गोषातिराऽ२३ । हा ॥ श्वासाउवा । आसा-
उवाऽ३ ॥ श्रीः ॥ संमिश्लोअरुषोभुवाऽ३ए ॥ सूपस्थाभिर्नधेनुभाइः ॥
सीदञ्छ्येनाऽ२३ः । हाइ ॥ नायाउवा । नाइभाउवाऽ३ ॥ उऽ३२३४पा ॥
दी. २०. उत्. ४. मा. १६. मू. ॥३७०॥

९. [3]ऐडं मारुतम् ॥ सोमक्रतुः । बृहती । पवमानस्सोमः ॥

अदब्धस्सूऽ२ । रभिन्तराऽ२ः । ऐहीऽ२ । ऐहीऽ२ । ऐहिहाऽ२इ ।

[1] अष्टचत्वारिंशदुत्तरशततमसूक्ते गीयते । [2] दशमसूक्ते गीयते ।
[3] अष्टचत्वारिंशदुत्तरशततमसूक्तस्य तृतीयतमांशेविचारो गीयते ।

उवाऽ२इ । ईऽ३या । (सप्त । द्विः) सुतेचित्वाप्सुमदाऽ२ । मोअन्धसाऽ२ ।
एहीऽ२ (द्विः) एहिहाऽ२इ । उवाऽ२इ । ईऽ३या ॥ श्रीणन्तोगोऽ२ ।
भिरुत्तराऽ२म् । एहीऽ२ (द्विः) एहिहाऽ२इ । उवाऽ२इ । ईऽ३याऽ३४३ ।
ओऽ२३४५इ ॥ डा ॥ दी. १७. उत्. ना. मा. १३. चि. ॥३७१॥

१०. [1]जराबोधीयम् ॥ अग्निः । गायत्री । पवमानस्सोमः ॥

अस्यप्रत्नीवा ॥ आनुद्युताम् । शुक्रान्दूऽ२३दू । हेअहायाः ॥
पयास्साऽ१हाऽ२३स्ना । सास् । अपोऽ२३४५इ॥ डा ॥श्रीः॥ अयꣳसूर्योवा ॥
आइवापदृक् । अयाꣳसाऽ२३श । सिधावाताइ ॥ सप्ताप्राऽ१वाऽ२३ताः ।
आ । दिवोऽ२३४५इ ॥ डा ॥श्रीः॥ अयंविश्वोवा ॥ नाइतिष्ठताइ । पुनानो-
ऽ२३भू । वनोपाराइ ॥ सोमोदाऽ१इवाऽ२३ना । स्व । रियोऽ२३४५इ ॥डा॥
दी. ९. उत्. ९. मा. १५. धु. ॥३७२॥

११. [2]रौरवम् ॥ रुरुः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चाऽ२ताऽ२३४तम् ॥ सोमोयउत्तमꣳहविर्दधन्वाꣳयोन-
र्योअप्सुवाऽ२न्तरा । ओहाऽ२उवा ॥ सुषावसोममाऽ२३हाइ । ओहाऽ३-
उवा ॥ द्रिभाइः । औऽ२३होवा॥श्रीः॥ सुषावसोमाऽ२मद्राऽ२३४इभाइः ॥
सुषावसोममद्रिभिर्नूनंपुनानोअविभिꣳपराऽ२इस्रवा । ओहाऽ२उवा ॥
अदब्धस्सुरभाऽ२३इहाइ । ओहाऽ३उवा ॥ तरा । औऽ३होवा ॥ श्रीः ॥
अदब्धस्सुराऽ३भिन्ताऽ२३४शः ॥ आदब्धस्सुरभिन्तरस्सुतेचित्वाप्सुमदामो-
आऽ२न्धसा । ओहाऽ२वा ॥ श्रीणन्तोगोभिरूऽ२३हाइ । ओहाऽ३उवा ॥
तराम् । औऽ२३होवा । होऽ५इ ॥डा॥ दी. २२. उत्. ३. मा. २४. जी. ॥३७३॥

१२. निहवः ॥ वसिष्ठः । जगती । विश्वे देवाः ॥

आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाइ । विश्वे-

[1] एकोनचत्वारिंशत्तमसूक्ते गीयते । [2] अष्टमचत्वारिंशत्तमसूक्ते गीयते ।



देवाममभृण्वन्तुऽ३याज्ञाऽ३म् । याज्ञाम् । यज्ञा । ओऽ२३४वा । हाइ ॥
उभेरोदसीअपान्नपाचऽ३मान्माऽ३ । मान्मा । मन्मा । ओऽ२३४वा । हाइ ॥
मावोवचाꣳसिपरिचक्ष्याणिऽ३वोचाऽ३म् । वोचाम् । वोचा । ओऽ२३४वा ।
हाइ ॥ सुम्नेष्विद्वोअन्तमामऽ३दाइमाऽ३ । दाइमा । देमा । ओऽ२३४वा ।
हाइ । आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाऽ३४ ।
ओहोवा ॥ ईऽ२३४५ ॥[1]
दी. २१. उत्. न. मा. १७. हे. ॥३७४॥

नवमःप्रपाठकः ॥

संवत्सरपर्व सम्पूर्णम् ॥

[1] इदं साम पूर्वार्चिकस्थमपि गीयते । सा चर्क् ऋषिच्छन्दोदेवतापदपाठसहिता प्रदर्श्यते—

ऋजिश्वा भारद्वाजः जगती (निचृज्जगती) । विश्वे देवाः ॥

विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपान्नपाच्च मन्म ।
मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥

विश्वे । देवाः । मम । शृण्वन्तु । यज्ञम् । उभे इति । रोदसी इति । अपाम् । नपात् । च । मन्म । मा । वः । वचांसि । परिचक्ष्याणि । परि । चक्ष्याणि । वोचम् । सुम्नेषु । इत् । वः । अन्तमाः । मदेम ॥

२५४. भरद्वाजो बार्हस्पत्यः । गायत्री । अग्निः ॥

८२४. त्वमग्ने यज्ञाना॰होता विश्वेषा॰हितः । देवेभिर्मानुषे जने ॥१॥

८२५. स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च ॥२॥

८२६. वेत्था हि वेधो अध्वनःपथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥३॥

धा. ६. उ. न. स्व. न. ही. ॥१४॥

२५५. विश्वामित्रो गाथिनः । गायत्री । अग्निः ॥

८२७. होता देवो अमर्त्यःपुरस्तादेति मायया । विदथानि प्रचोदयन् ॥१॥

---

२५४. त्वम् । अग्ने । यज्ञानाम् । होता । विश्वेषाम् । हितः । देवेभिः । मानुषे । जने ॥ सः । नः । मन्द्राभिः । अध्वरे । जिह्वाभिः । यज । महः । आ । देवान् । वक्षि । यक्षि । च ॥ वेत्थ । हि । वेधः । अध्वनः । पथः । च । देव । अञ्जसा । अग्ने । यज्ञेषु । सुक्रतो । सु । क्रतो ॥

२५५. होता । देवः । अमर्त्यः । अ । मर्त्यः । पुरस्तात् । एति

---

॥ श्रीः ॥

१. [1]नानदम् ॥ इन्द्रः । अनुष्टुप् । इन्द्रः ॥

ॐ॥ प्रत्यस्मैपिपी । षताऽ३इ । षाऽ२३४इ । ख्रानिविदुषे । भारा ॥ अरङ्गमायज । ग्मयोऽ२३४हाइ ॥ आपश्चादा ॥ ध्वनोऽ२३४वा । नाऽ५रोऽ६"हाइ ॥श्रीः॥ एमेनंप्रत्ये । तनाऽ३ । सोऽ२३४ ॥ मेभिस्सो । मपा । तासाम् ॥ अमत्रेभिर्ऋजी । पिणोऽ२३४हाइ । अमत्रेभिर्ऋजी । पिणोऽ२३४हाइ ॥ आइन्द्र॰सुताइ ॥ भिरोऽ२३४वा । इऽ५भोऽ६"हाइ । श्रीः ॥ यदीसुतेभिरि । दुभाऽ३इः । सोऽ२३४ । मेभिःप्रतिभृ । षाया । वेदाविश्वस्यमे । धिरोऽ२३४हाइ । वेदाविश्वस्यमे । धिरोऽ२३४हाइ । धार्षतान्ताम् । इदोऽ२३४वा । षाऽ५तोऽ६"हाइ ॥

दी. २५. अ. ३. मा. १६. षू. ॥२०॥

---

[1] द्विपदार्धगान्तद्विवारमनुक्ते गीयते ।

८२८. वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥२॥
८२९. धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरन्तना ॥३॥
धा. १३. उ. न. स्व. २. रा. ॥१५॥

पञ्चमः खण्डः ॥

२५६. हर्यतः प्रागाथः । गायत्री । अग्निः । हवींषि वा ।
८३०. आ सुते सिञ्चत श्रियꣳरोदस्योरभिश्रियम् । रसा दधीत वृषभम् ॥१॥
८३१. ते जानत स्वमोक्य ३ꣳसं वत्सासो न मातृभिः ।
मिथो नसन्त जामिभिः ॥२॥
८३२. उप स्रक्केषु बप्सतः कृण्वते धरुणन्दिवि । इन्द्रे अग्ना नमः स्वः ॥३॥
धा. १२. उ. १. स्व. १. च. ॥१६॥

२५७. बृहद्दिव आथर्वणः । त्रिष्टुप् । इन्द्रः ॥
८३३. तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥१॥
८३४. वावृधानश्शवसा भूर्योजाश्शत्रुर्दासाय भियसन्दधाति ।
अव्यनच्च व्यनच्च सस्नि सन्ते नवन्त प्रभृता मदेषु ॥२॥

मायया । विदधानि । प्रचोदयन् । प्र । चोदयन् ॥ वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते । विप्रः । वि । प्रः । यज्ञस्य । साधनः ॥ धिया । चक्रे । वरेण्यः । भूतानाम् । गर्भम् । आ । दधे । दक्षस्य । पितरम् । तना ॥
२५६. आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभिश्रियम् । अभि । श्रियम् । रसा । दधीत । वृषभम् ॥ ते । जानत । स्वम् । ओक्यम् । सम् । वत्सासः । न । मातृभिः । मिथः । नसन्त । जामिभिः ॥ उप । स्रक्केषु । बप्सतः । कृण्वते । धरुणम् । दिवि । इन्द्रे । अग्ना । नमः । स्वश्इति ।
२५७. तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषनृम्णः । त्वेष । नृम्णः । सद्यः । स । द्यः । जज्ञानः । नि । रिणाति । शत्रून् ।



८३५. त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोस्स्वादीयस्स्वादुना सृजा समदस्सु मधु मधुनाभि योधीः ॥३॥
धा. २३. उ. ५. स्व. ४. णी ॥१७॥

२५८. गृत्समदः शौनकः । अष्टिः । इन्द्रः ॥
८३६. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् । स ईं ममाद महि कर्म कर्तवे महामुरुꣳसैनꣳसश्चद्देवो देवꣳसत्य इन्दुस्सत्यमिन्द्रम् ॥१॥
८३७. साकञ्जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैस्सासहिर्मृधो विचर्षणिः । दाता राधस्तुवते काम्यं वसु प्रचेतन सैनꣳसश्चद्देवो देवꣳसत्य इन्दुस्सत्यमिन्द्रम् ॥२॥

ओजाः । शत्रुः । दासाय । भियसम् । दधाति । अव्यनत् । अ । व्यनत् । च । व्यनत् । वि । अनत् । च । सस्नि । सम् । ते । नवन्त । प्रभृता । प्र । भृता । मदेषु ॥ त्वे इति । क्रतुम् । अपि । वृञ्जन्ति । विश्वे । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः । स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि । योधीः ॥
२५८. त्रिकद्रुकेषु । त्रि । कद्रुकेषु । महिषः । यवाशिरम् । यव । आशिरम् । तुविशुष्मः । तुवि । शुष्मः । तृम्पत् । सोमम् । अपिबत् । विष्णुना । सुतम् । यथावशम् । यथा । वशम् । सः । ईम् । ममाद । महि । कर्म । कर्तवे । महाम् । उरुम् । सः । एनम् । सश्चत् । देवः । देवम् । सत्यः । इन्दुः । सत्यम् । इन्द्रम् ॥ साकम् । जातः । क्रतुना । साकम् । ओजसा । ववक्षिथ । साकम् । वृद्धः । वीर्यैः । सासहिः । मृधः । विचर्षणिः । वि । चर्षणिः । दाता । राधः । स्तुवते । काम्यम् । वसु । प्रचेतन । प्र । चेतन । सः । एनम् । सश्चत् । देवः । देवम् । सत्यः । इन्दुः । सत्यम् । इन्द्रम् ॥ अध । त्विषिमान् । अभि । ओजसा । कृविम् । युधा । अभवत् । आ । रोदसी इति । अपृणात् । अस्य । मज्मना ।

८३८. अध त्विषीमाँ अभ्योजसा क्रिविं युधा भवदा रोदसी अपृणदस्य मज्मना प्र वावृधे । अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैन᳚सश्चद्देवो देव᳚सत्य इन्दुस्सत्यमिन्द्रम् ॥३॥
धा. ५४. उ. २. स्व. १३. थि. ॥१८॥

षष्ठः खण्डः ॥

इति त्रयोदशोऽध्यायः ॥

षष्ठप्रपाठके तृतीयोऽर्धः ॥

षष्ठः प्रपाठकः समाप्तः ॥

अथ चतुर्दशोऽध्यायः ॥

सप्तमप्रपाठकस्य प्रथमोऽर्धः ॥

२५९. प्रियमेध आङ्गिरसः । गायत्री । इन्द्रः ॥

८३९. अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनु᳚सत्यस्य सत्पतिम् ॥१॥

८४०. आ हरयस्ससृज्रिरेऽरुषीरधि बर्हिषि । यत्राभि सन्नवामहे ॥२॥

८४१. इन्द्राय गाव आशिरन्दुदुहे वज्रिणे मधु । यत्सीमुपह्वरे विदत् ॥३॥
धा. ११. उ. न. स्व. २. द्दा. ॥१॥

---

प्र । वावृधे । अधत्त । अन्यम् । अन् । यम् । जठरे । प्र । ईम् । अरिच्यत । प्र । चेतय । सः । एनम् । सश्चत् । देवः । देवम् । सत्यः । इन्दुः । सत्यम् । इन्द्रम् ॥

२५९. अभि । प्र । गोपतिम् । गो । पतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे । सूनुम् । सत्यस्य । सत्पतिम् । सत् । पतिम् ॥ आ । हरयः । ससृज्रिरे । अरुषीः । अधि । बर्हिषि । यत्र । अभि । सन्नवामहे । सम् । नवामहे ॥ इन्द्राय । गावः । आशिरम् । आ । शिरम् । दुदुहे । वज्रिणे । मधु । यत् । सीम् । उपह्वरे । उप । ह्वरे । विदत् ॥



२६०. नृमेधपुरुमेधावाङ्गिरसौ । बृहतीसतोबृहत्यौ । इन्द्रः ॥

८४२. आ नो विश्वासु हव्यमिन्द्र᳚समत्सु भूषत । उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥१॥

८४३. त्वन्दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् । तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२॥
धा. १७. उ. न. स्व. २. या. ॥२॥

---

२६०. आ । नः । विश्वासु । हव्यम् । इन्द्रम् । समत्सु । स । मत्सु । भूषत । उप । ब्रह्माणि । सवनानि । वृत्रहन् । वृत्र । हन् । परमज्याः । परम । ज्याः । ऋचीषम ॥ त्वम् । दाता ॥ प्रथमः । राधसाम् । असि । असि । सत्यः । ईशानकृत् । ईशान । कृत् । तुविद्युम्नस्य । तुवि । द्युम्नस्य । युज्या । आ । वृणीमहे । पुत्रस्य । पुत् । त्रस्य । शवसः । महः ॥

---

२. श्यैतम् ॥ प्रजापतिः । बृहती । इन्द्रः ॥

आनोविश्वासु । हव्याऽ२३४औहोवा ॥ आइन्द्र᳚सम । त्सुभूषता-ऽ२३४ । औऽ६हा । उपब्रह्माणि । सावाऽ२३ना । निवाऽ२ । त्राऽ२३४-हान् ॥ परमज्याआऽ३र्चा ॥ हुम्माइ । पाऽ२माऽ२३४औहोवा ॥ श्रीः ॥ परमज्यागृचा । षमाऽ२३४औहोवा ॥ पारमज्याः ॥ ऋचाइषमाऽ२३४ । औऽ६हा । त्वंदाताप्र । थामोऽ२३रा । धसाऽ२म् । आऽ२३४सी ॥ असिसत्याईऽ३शा ॥ हुम्माइ । नाऽ२काऽ२३४औहोवा ॥ श्रीः ॥ असि-सत्यइशा । नकाऽ२३४औहोवा ॥ आसिसत्यः । ईशानकाऽ२३४ । औ-ऽ६हा । तुविद्युम्नस्य । युजाऽ२३या । वृणाऽ२इ । माऽ२३४हाइ ॥ पुत्रस्यशावाऽ३साः ॥ हुम्माइ । माऽ२हाऽ२३४औहोवा ॥ वाऽ२३४स्र ॥
दी. २४. उत्. ४. मा. २५. पा. ॥२७३॥

३. [1]औदलम् ॥ उदलः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजिताइ ॥ वोआऽरन्धसाः । सुतायमाऽ३ । दायित्राऽ२३४-
वाइ ॥ अपश्वानाम् ॥ श्नाथाऽरइष्टना । सखायोऽ२३दीऽ३ । घाऽ२३जाऽ३इ ।
हाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ सखायोदाइ ॥ वाजाऽरइहियाम् । योवा-
र्याऽ३ । पावकाऽ२३४या ॥ परिप्रस्या । दाताऽरइसुताः । इन्दुराऽ२३-
श्वाऽ३ः । नाऽ२३काऽ३ । त्वाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ इन्दुरश्वाः ॥
नाकाऽरत्वियाः । तन्दुरोपाऽ३म् । आसाइनाऽ२३४राः ॥ सोमंविश्वा ॥
चायाऽरधिया । वज्ञायाऽ२३साऽ३ । तूऽ२३वाऽ३ । द्राऽ३४५योऽ६"हाइ ॥
दी. ११. उत्. ६. मा. २१. क. ॥३७॥

४. [2]श्यैतम् ॥ प्रजापतिः । पङ्क्तिः । इन्द्रः ॥

स्वादोरित्थाविषू । वताऽ३४औहोवा ॥ मावोऽपिब । तिगौ-
रियाऽ२३४ः । ओऽ६हा । याइन्द्रेणसयावरीर्वृ । ष्णामाऽ२३दा । विशोऽ२ ।
भाऽ२३४था ॥श्रीः॥ ताअस्यपृशना । युवाऽ३४औहोवा ॥ सोमᳪश्रीण ।
तिपृश्नयाऽ२३४ः । ओऽ६हा । प्रियाइन्द्रस्यधेनवोव । ज्ञाᳪहाऽ२३-
इन्वा । तिसाऽ२ । याऽ२३४काम् ॥ श्रीः ॥ ताअस्यनमसा । सहाऽ३४-
औहोवा ॥ सापर्यन्ति । प्रचाइतसाऽ२३४ः । ओऽ६हा । व्रतान्यस्य-
सश्चिरेपु । रूणाऽ२३इपू । र्वचाऽरइ । ताऽ२३४याइ ॥ वस्वीरनुस्वाऽ३रा ।
हुम्माइ । जाऽरयाऽ२३४औहोवा ॥ ज्ञाऽ२३४ह्य ॥
दी. २८. उत्. ५. मा. १८. खे. ॥३८॥

५. [3]इडानाᳪसंक्षारः ॥ इडा । ककुप् । पवमानस्सोमः ॥

औहोइहुवाऽ३होइ । पवस्वमाऽ३धूऽ३मत्तमः ॥ इन्द्रायसोमक्रतुवि-
ऽ३इत्ताऽ३मोमदः ॥ औहोइहुवाऽ३होइ । महाद्यूऽ२३४क्षा ॥ तमोमदः ।

[1] अष्टादशसूक्ते गीयते ।
[2] विशत्युत्तरशततमसूक्ते गीयते ।
[3] षोडशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।



२६१. त्र्यरुणत्रैवृष्णः, त्रसदस्युः पौरुकुत्सः । सतोबृहती । पवमानः सोमः ॥

८४४. प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानᳪसमस्वरन् ॥१॥

८४५. आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
दिवो न वारᳪसविता व्यूर्णुते ॥२॥

८४६. अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
यूथे न निष्ठा वृषभो वि राजसि ॥३॥
धा. १६. उ. २. स्व. ६. मू. ॥३॥

२६१. प्रत्नम् । पीयूषम् । पूर्व्यम् । यत् । उक्थ्यम् । महः । गाहात् ।
दिवः । आ । निः । अधुक्षत । इन्द्रम् । अभि । जायमानम् । सम् । अस्वरन् ॥
आत् । ईम् । के । चित् । पश्यमानासः । आप्यम् । वसुरुचः । वसु । रुचः ।
दिव्याः । अभि । अनूषत । दिवः । न । वारम् । सविता । वि । ऊर्णुते ॥
अध । यत् । इमे इति । पवमान । रोदसी इति । इमा । च । विश्वा । भुवना ॥
अभि । मज्मना । यूथे । न । निष्ठाः । निः । स्थाः । वृषभः । वि । राजसि ॥

इडाऽ२३भाऽ३ । एहीडा । होऽ५इ ॥डा॥ दी. ८. उत्. १. मा. १०. टौ. ॥३७९॥

६. यौवाजयम् ॥ युवाजित् । सतोबृहती । पवमानस्सोमः ॥

प्रत्नाऽ३१म् । पीऽ३यू । षम् । पूर्वाऽ२३४याम् ॥ यदूऽ३ ।
क्थियाऽ२म् । महोऽ३४५ । गाऽ२३४हात् । दिवाअनाइः । अ ।
धुक्षताऽ२ । इन्द्राऽ३४५म् । आऽ२३४भी ॥ जायाऽ२ ॥ मानाऽ२म् ।
समाऽ३४५ ॥ स्वाऽ२३४रान् ॥ श्रीः ॥ आदाऽ३१इम् । काऽ२इचित् ।
प । श्यामाऽ२३४ना ॥ साओऽ३ । पियाऽ२म । वसूऽ३४५ । रुऽ२३४-
चाः । दिव्याअभाइ । अ । नूषताऽ२ । दिवोऽ३४५ । नाऽ२३४वा ॥
रᳪसाऽ२ ॥ विताऽ२ । वियूऽ३४५ ॥ र्णुऽ२३४ते ॥ श्रीः ॥ अधाऽ३१ ।
याऽ३दि । मे । पावाऽ२३४मा ॥ नारोऽ३ । दसीऽ२ । इमाऽ३४५ ।

चाऽ२३४वाइ । श्वाभूवना । भि । मज्मनाऽ२ । गृथेऽ३४५ । नाऽ२३४-
नोः । स्थावाऽ२ ॥ पशोऽ२ । विराऽ३४५ ॥ जाऽ२३४सी ॥

दी. ८. उन्. ६. मा. २२. दा. ॥३८०॥

७. [1]महावामदेव्यम् ॥ वामदेवः ॥ त्रिष्टुप् । पवमानस्सोमः ॥

शाऽ५इशुम् । जज्ञाऽ३नाऽ३ऽहर्यताम् ॥ मा । जन्तिशुम्भन्ति-
विप्रंमरुतोगणेनकविर्गीर्भि ऽकाव्येनाकविस्सन्त्सोमः । पा । औऽ३होहाइ ।
वित्राऽ२३मताइ ॥ एत्योहोऽ३ । हुम्माऽ२ ॥ राऽ२इमोऽ३ऽ"हाइ ॥श्रीः॥
आऽ५र्षि । मनाऽ३याऽ३ऋषिकृत् ॥ सू । वर्षास्सहस्रनीथ ऽपदवी ऽक-
वीनान्तृतीयन्धाममहिषस्सिषासन्त्सोमः । या । औऽ३होहाइ । राजाऽ२३-
मन् ॥ राजोहोऽ३ । हुम्माऽ२ ॥ ताऽ२इष्टोऽ३५"हाइ ॥श्रीः॥ चाऽ५मू ।
पच्छ्याऽ३इनाऽ३श्शकुनाः ॥ वाइ । भृत्वागोविन्दुर्द्रप्सआयुधानिबिभ्र-
दपामूर्मिऽसचमानस्समुद्रन्तुरी । या । औऽ३होहाइ । घामाऽ२३महाइ ॥
पावोहोऽ३ । हुम्माऽ२ ॥ वाऽ२क्तोऽ३५"हाइ ॥

दी. ३६. उन्. न. मा. २१. हृ. ॥३८१॥

८. [2]स्वारसौपर्णम् ॥ सुपर्णः । गायत्री । इन्द्रः ॥

कयानश्चित्रआभूऽ३वात् ॥ ऊतीसदावृधाः । हुम् । साऽ२३४खा ॥
कायाऽ३उवा ॥ शचि । ष्ठयोऽ२३४वा । वाऽ५र्तोऽ६"हाइ ॥ श्रीः ॥
कस्त्वासत्योमदाऽ३नाम् ॥ मऽहिष्ठोमत्सदा । हुम् । घाऽ२३४साः ॥
दार्ढोऽ३उवा ॥ चिदा । रुजोऽ२३४वा । वाऽ५सोऽ६"हाइ ॥ श्रीः ॥
अभीषुणस्सखीऽ३नाम् ॥ अविताजरा । हुम् । तृऽ२३४णाम् ॥ शाता-
ऽ३उवा ॥ भवा । सियोऽ२३४वा । ताऽ५योऽ६"हाइ ॥

दी. १५. उन्. ६. मा. १६. पू. ॥३८२॥

[1] सप्तषष्ट्युत्तरशततमसूक्ते गीयते ।

[2] द्वादशसूक्ते गीयते ।



९. [1]सफम् ॥ देवाः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

परिप्राऽ३घ्व । न्वाईऽ२३४न्द्रा ॥ यसोमाऽ२३ । स्वाऽ३२३४दुः ॥
मित्रा ॥ यपूष्णेऽ३भाऽ३ । गाऽ३४५योऽ६"हाइ ॥

दी. न. उन्. ३. मा. ३. सि. ॥३८३॥

१०. [2]स्वारसौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

उच्चातेजातमन्धाऽ३साः ॥ दिविसद्भूमिया । हुम् । दाऽ२३४-
दाइ ॥ उग्राऽ३उवा ॥ शर्म । महोऽ२३४वा । श्राऽ५वोऽ६"हाइ ॥श्रीः॥
सनइन्द्रायायज्याऽ३वाइ ॥ वरुणायमरु । हुम् । द्भ्याऽ२३४याः ॥ वाग-
ऽ३उवा ॥ वोवित् । परोऽ२३४वा । स्वाऽ५वोऽ६"हाइ ॥श्रीः॥ एनाविश्वा-
न्यर्याऽ३आ । द्युम्नानिमानू । हुम् । षाऽ२३४णाम् ॥ साइषाऽ३उवा ॥
सन्ताः । वनोऽ२३४वा । माऽ५होऽ६"हाइ ॥

दी. १६. उन्. ६. मा. १९. को. ॥३८४॥

११ शाकरवर्णम् ॥ शाकरवर्णः । गायत्री । पवमानस्सोमः ॥

ऊचा ॥ तेजातमन्धसाः । दिविसत् । भूमियाऽ२ । ददाऽ३१-
उवाऽ२३ । ऊऽ३४पा ॥ उग्रऽशाऽ२३र्मा ॥ महिश्रवाऽ३१उवाऽ२३ ॥
श्रीः ॥ सानाः ॥ इन्द्रायायज्यवाइ । वरुणा । यमरूऽ२ । द्भ्याऽ३१-
उवाऽ२३ । ऊऽ३४पा ॥ वरिवोऽ२३वीत् ॥ परिस्रवाऽ३१उवाऽ२३ ॥
श्रीः ॥ आइना ॥ विश्वान्यर्यआ । द्युम्नानि । मानूऽ२ । षाणाऽ३माउवा-
ऽ२३ । ऊऽ३४पा ॥ सिषासाऽ२३न्ताः ॥ वनामहाऽ३१उवाऽ२३ ॥ ऊ-
ऽ३२३४पा ॥

दी. ११. उन्. ९. मा. १४. धी. ३८५॥

१२. [3]महावैष्टम्भम् ॥ विष्टम्भः । बृहती । पवमानस्सोमः ॥

पुनानस्सोहाइ । मधारयोवा ॥ आपोवसा । नोआर्षाऽ१साऽ२३इ ।

[1] सप्तदशोत्तरद्विशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[2] अष्टमसूक्ते द्वे सामनी गीयेते ।

[3] नवमसूक्ते द्वे सामनी गीयेते ।

इहाऽ२३४हाइ । उहुवाऽ२३४ताइ ॥ अयादु । वोवनवाऽ३४ । औहोवा ॥
इहाऽ२३४हाइ । औहोऽ३१२३४ । साइ । एहियाऽ६हा ॥
दी. ३४. उत्. ९. मा. ३२. धा. ॥५०७॥

१३. ¹इन्द्रः । उष्णिक् । इन्द्रः ॥

तन्तेमदाऔहोहाइ ॥ गार्णीइमाऽ२३४साइ । वृषाणाऽ२३४ऽहाइ ।
पृक्षुसासहिमुलोकाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४कृ ॥
लुमद्रि । वोहरिश्राऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ ।
याम् । एहियाऽ६हा ॥श्रीः॥ येनज्योताऔहोहाइ ॥ पीआयाऽ२३४वाइ ॥
मनावाऽ२३४इहाइ । चविविदिथमन्दानाऽ३४ ॥ औहोवा ॥ इहाऽ२३४-
हाइ । उहुवाऽ२३४आ ॥ स्यचहि । पोविराजाऽ३४ । औहोवा ॥ इहा-
ऽ२३४हाइ । औहोऽ३१२३४ । साइ । एहियाऽ६हा ॥ श्रीः ॥ तद्याचा-
औहोहाइ ॥ ताउक्थाऽ२३४इनाः । अनूष्टूऽ२३४हा । वन्तिपूर्वथावृषपा-
ऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४त्तीः ॥ अपोज ।
यादिवेदाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । वाइ ।
एहियाऽ६हा ॥
दी. ३७. उत्. ९. मा. २७. के. ॥५०८॥

१४. ²इन्द्रः । अनुष्टुप् । इन्द्रः ॥

श्रुधीहवाऔहोहाइ ॥ ताइरश्चाऽ२३४याः । इन्द्रयस्त्वासपर्यती-
ऽ२३४हाइ । सुवीर्यस्यगोमाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवा-
ऽ२३४ताः ॥ रायस्पू । धाइमहाऽआऽ३४ । औहोवा ॥ इहाऽ२३४हाइ ।
औहोऽ३१२३४ । साइ । एहियाऽ६हा ॥ श्रीः ॥ यस्तइन्द्राऔहोहाइ ॥
नावीयाऽ२३४साइम् । गिरस्मन्द्रामजीजानोऽ२३४हाइ । चिकित्विन्मन-
सन्धाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४याम् ॥ प्रत्नाम् ।

¹ इन्द्रीतित्मनूक्ते गीयते । ² इन्द्रीतित्मनूक्ते गीयते ।



तास्यपिप्यूऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । पीम् ।
एहियाऽ६हा ॥ श्रीः ॥ तमुष्टवाऔहोहाइ ॥ मायज्ञाऽ२३४इराः । इन्द्र-
मुक्थानिवावृधोऽ२३४हाइ । पुरूण्यस्यपौऽसाऽ३४ । औहोवा । इहा-
ऽ२३४हाइ । उहुवाऽ२३४या ॥ सिषास । तावनामाऽ३४ । औहोवा ॥
इहाऽ२३४हाइ । औहोऽ३१२३४ । हाइ । एहियाऽ६हा । हाऽ५इ ॥डा॥
दी. ४०. उत्. ९. मा. ३०. गो ॥५०९॥

१५ ¹उत्सेधः ॥ अङ्गिरसः । बृहती । इन्द्रः ॥

पिबासुतस्यरसिनः । मत्स्वा । नआऽ२३४औहोवा ॥ द्रगोमताऽ२ः ।
हाऽ३१उवाऽ२३ । ऊऽ२३४पा ॥ आपाऽ३इर्नोबो । औहोवाहाइ । धाइस-
घमा । दियेवार्धे । हाऽ३१उवाऽ२३ । ऊऽ२३४पा ॥ अस्मऽऽ३अव ।
औहोवाहाइ ॥ तुताऽ३इधाऽ५याऽ६५६ः ॥ श्रीः ॥ अस्माऽअवन्तुतेधियो ।
स्मान् । अवाऽ३४औहोवा ॥ तुतेधियाऽ२ः । हाऽ३१उवाऽ२३ । ऊ-
ऽ२३४पा ॥ भूयाऽ३मता । औहोवाहाइ ॥ वृमतोवा । जिनोघापथ ।
हाऽ३१उवाऽ२३ । ऊऽ२३४पा ॥ मानाऽ३स्तर । औहोवाहाइ ॥ भिमा-
ऽ३ताऽ५याऽ६५६इ ॥ श्रीः ॥ मानस्तरभिमातये । मानः । स्तराऽ३४-
औहोवा ॥ भिमातयाऽ२इ । हाऽ३१उवाऽ२३ । ऊऽ२३४पा ॥ अस्माऽ३-
न्नित्रा । औहोवाहाइ । भाइरवतात् । अभिष्टाइभिः । हाऽ३१उवाऽ२३ ।
ऊऽ२३४पा ॥ आनाऽ३सुम्ने । औहोवाहाइ ॥ पुयाऽ३माऽ५याऽ६५६ ॥
ऊऽ२३४५ ॥
दी. २५. उत्. ६. मा. २४. पी. ॥५१०॥

१६. निषेधः ॥ अङ्गिरसः । बृहती । इन्द्रः ॥

पिबासुतस्याऽ३रसिनाः ॥ मत्स्वानआइ । द्रगोमताऽ२ः ।
इहाऽ३ ॥ आपाऽ३इर्नोबो । हाहोऽ२३४हा ॥ धाइसधमा । दियेवाऽ२३

¹ बृहत्यिनसुतरमिति सामनी गीयते ।

द्वौइ। इहाऽ३ ॥ आस्मˇऽ३आवा । हाहोऽ२३४हा ॥ तुताऽ३-
इघाऽ५याऽ६५६: ॥ श्रीः ॥ अस्माˇअवन्तूऽ३तेघियाः ॥ अस्मˇअवा।
तुतेघियाऽ२: । इहाऽ३ ॥ भूयाऽ३माताइ । हाहोऽ२३४हा ॥ सुमतोवा।
जिनोवाऽ२३याम् । इहाऽ३ ॥ मानाऽ३स्तारा । हाहोऽ२३४हा ॥ भिमा-
ऽ३ताऽ५याऽ६५६इ ॥ श्रीः ॥ मानस्तरभीऽ३मातयाइ । मानास्तरा।
भिमात्याऽ२इ । इहाऽ३ । आस्माऽ३न्चाइत्रा । हाहोऽ२३४हा ॥ भाइरव-
तात् । अभिष्टाऽ२३इभाइः । इहाऽ३ ॥ आनाऽ३स्सुम्नाइ । हाहोऽ२३४हा ॥
पुयाऽ३माऽ५याऽ६५६ ॥ हेऽ२३४५ ॥ दी. १२. उत्. ९. मा. २६. भू. ॥५११॥

१७. [1]ऐडं सौपर्णम् ॥ सुवर्णः । गायत्री । पवमानस्सोमः ॥

उच्चातेजोवा ॥ तामन्धाऽ२३४साः । दिवाइसद्भू । मियाऽ२दा-
ऽ२३४दाइ ॥ ऊऽ२ग्राम् । शाऽ२३र्सा ॥ माहिश्रवा । औऽ३होवा ॥श्रीः॥
सनइन्द्रोवा ॥ यायज्याऽ२३४वाइ । वरूणाया । मरूऽ२द्भ्याऽ२३४याः ॥
वाऽ२राइ । वोऽ२३वीत् ॥ पारिस्रवा । औऽ३होवा ॥ श्रीः ॥ एना-
विश्वोवा ॥ नाअर्योऽ२३४आ । द्युम्नानिमा । नूऽ२षाऽ२३४णाम् ॥
साऽ२इषा । साऽ२३न्ताः ॥ वानामहा । औऽ३होवा । होऽ५इ ॥डा॥
दी. ६. उत्. ६. मा. १५. कु. ॥५१२॥

१८. [2]समन्तम् ॥ अग्निः । सतोबृहती । पवमानस्सोमः ॥

दुहानऊधर्दिवियाम् ॥ मधुप्रियाम्प्रत्नˇसधस्थमासदात् । आपृच्छा-
ऽ२३याम् । धारुणम्वा । जियार्षासा । औहोऽ३४वाहाइ । नृ । भाइर्वो-
ऽ२३ताऽ३: । होवाऽ३हाइ ॥ विचक्षाऽ२३णाऽ३४३: । औ-
ऽ२३४५इ ॥डा॥
दी. ७. उत्. ३. मा. १०. जौ. ॥५१३॥

१९. [3]वरुणसाम ॥ वरुणः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारयोवा । ओवा ॥ आपोवसा । नोआर्षाऽ१साऽ२इ ।

[1] अष्टमसूक्ते गीयते । [2] नवमसूक्तस्य द्वितीयमन्त्रे गीयते ।
[3] नवमसूक्ते गीयते ।



आऽ२३रा । ताऽ२३घाः । योनिमृत । स्यसाऽ२३हाइ । दसाऽ३आ ॥
उत्सोदेवोहिरण्ययः । ऊऽ२३त्साः ॥ दाइवोहिरोऽ३ । होऽ३१२३४ । वा ।
ण्याऽ५योऽ६"हाइ ॥श्रीः॥ उत्सोदेवोहिरण्ययोवा । ओवा ॥ उत्सोदेवः ।
हिरण्याऽ१याऽ२: । दूऽ२३हा । नाऽ२३ऊ । धर्दिवियम् । मधूऽ२३हाइ ।
प्रियाऽ३मा ॥ प्रत्नˇसधस्थमासदत् । प्राऽ२३त्नाम् ॥ साधस्थमोऽ३ ।
होऽ३१२३४ । वा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ प्रत्नˇसधस्थमासदोवा ।
ओवा ॥ प्रात्नˇसध । स्थमासाऽ१दाऽ२त् । आऽ२३पा । छाऽ२३याम् ।
धरुणम्वा । जियाऽ२३हा । पसाऽ३आ ॥ नृभिर्धौतोविचक्षणः । नृऽ२३-
भीः ॥ धौतोविचोऽ३ । होऽ३१२३४ । वा । क्षाऽ५णोऽ६"हाइ ॥
दी. २२. उत्. ७. मा. २३. छि. ॥५१४॥

सप्तमो विˇशः ॥

त्रयोदशस्यार्द्धःप्रपाठकः ॥

१. [1]समन्तम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

तवाहˇसोमरारणा ॥ सख्यइन्दोदिवेदिवाइ । पुरूणाऽ२३इवा ।
ओनिचर । तिमामावा । औहोऽ३४वाहाइ ॥ प । राइधाऽ२३इˇराऽ३ ।
होवाऽ३हाइ ॥ तिताˇआऽ२३इहाऽ३४३इ ॥श्रीः॥ परिधीˇरतिताˇइहाइ ॥
परिधीˇरातिताˇइहाइ । तवाहाऽ२३वा । क्रामुतसो । मताइदाइवा ।
औहोऽ३४वाहाइ ॥ दु । हानोऽ२३बाऽ३ । होवाऽ३हा ॥ भ्रऊधाऽ२३-
नाऽ३४३इ ॥ श्रीः ॥ दुहानोवभ्रऊधनाइ ॥ दुहानोवाभ्रऊधनाइ । घृणाता-
ऽ२३पा । तामतिद्रू । रियाम्पारा । औहोऽ३४वाहाइ ॥ श । कुनाऽ२३-
आऽ३इ । होवाऽ३हाइ ॥ वपताऽ२३इभाऽ३४३ । औऽ२३४५इ ॥डा॥
दी. २७. उत्. ८. मा. २९. जौ. ॥५१५॥

[1] चतुर्नवतितमसूक्ते द्वे सामनी गीयेते ।

२. यौधाजयम् ॥ युधाजित् । बृहती । पवमानस्सोमः ॥

तवाऽ३१ । हाऽ३ग्नो । म । राराऽ२३४णा ॥ मारुयाऽ३इ ।
इन्दोऽ२ । दिवाऽ३४५इ । दीऽ२३४वे । पुरुणिया । श्रो । निचराऽ२ ।
तिमाऽ३४५म् । आऽ२३४वा ॥ पराऽ२इ ॥ धाइराऽ२ । तित ऽ३४५ ॥
ईऽ२३४ही ॥श्रीः॥ पराऽ३१इ । धाऽ३इर । ति । तआऽ२३४इहाइ ॥
पारीऽ३ । धीराऽ२ । तितऽ३४५ । ईऽ२३४ही ॥ तवाहन्ना । ऽम् ।
उतसोऽ२ । मताऽ३४५इ । दीऽ२३४वा ॥ दुहाऽ२ ॥ नोवाऽ२ ।
भ्रऊऽ३४५ ॥ धाऽ२३४नी ॥ श्रीः ॥ दुहाऽ३१ । नोऽ३व । श्रो ।
ऊवाऽ२३४नाइ ॥ दूहाऽ३ । नोवाऽ२ । भ्रऊऽ३४५ । धाऽ२३४नी ।
घृणातपा । तम् । अतिसूऽ२ । रियाऽ३४५म् । पाऽ२३४राः ॥ शक्रूऽ२ ॥
नाभ्राऽ२इ । वपाऽ३४५ ॥ सीऽ२३४मा ॥

दी. ४. उत्. ६. मा. २०. तौ. ॥५२६॥

३. वामदेव्यम् ॥ वामदेवः । गायत्री । इन्द्रः ॥

रैऽ५व । तीर्नाऽ३स्साऽ३धमादाइ ॥ आइ । द्रेसन्तुतुविवा ।
जा । औऽ३होहाइ । क्षुमाऽ२३न्तोया ॥ भिर्मौहोऽ३ । हुम्माऽ२ ॥
दाऽ२इमोऽ३५ हाइ ॥ श्रीः ॥ आऽ५व । त्वावाऽ३न्माऽ३नायुक्तः ॥
स्तो । तृभ्योधृष्णवीया । नो । औऽ३होहाइ । भ्रणोऽ२३रक्षाम् ॥
नचौहोऽ३ । हुम्माऽ२ ॥ क्राऽ२योऽ३५ हाइ ॥ श्रीः ॥ आऽ५यत् । दुवा-
ऽ३श्वाऽ३तक्रताउ ॥ आ । कामञ्जरितृ । णाम् । औऽ२३होहाइ ।
भ्रणोऽ२३रक्षाम् ॥ नचौहोऽ३ । हुम्माऽ२ ॥ चाऽ२इमोऽ३५ हाइ ॥

दी. १८. उत्. न. मा. १६. ह. ॥५२७॥

[1] द्विचत्वारिंशदुत्तरशततमसूक्ते गीयते ।



३१८. गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । गायत्री । इन्द्रः ॥

६८९. यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥१॥

६९०. व्य१न्तरिक्षमतिरन्मदे सोमस्य रोचना । इन्द्रो यदभिनद्वलम् ॥२॥

६९१. उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।
अर्वाञ्चं नुनुदे वलम् ॥३॥

धा. २०. उ. १. स्व. ४. पी. ॥६॥

३१९. श्रुतकक्षः सुकक्षोवाङ्गिरसः । गायत्री । इन्द्रः ।

६९२. त्यमु वस्सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥१॥

६९३. युध्मꣳसन्तमनर्वाणꣳसोमपामनपच्युतम् । नरमवार्यक्रतुम् ॥२॥

६९४. शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम । अवा नः पार्ये धने ॥३॥

धा. १४. उ. १. स्व. २. ता. ॥१०॥

३१८. यज्ञः । इन्द्रम् । अवर्धयत् । यत् । भूमिम् । व्यवर्तयत् । वि ।
अवर्तयत् । चक्राणः । ओपशम् । ओप । शम् । दिवि ॥ वि । अन्तरिक्षम् ।
अतिरत् । मदे । सोमस्य । रोचना । इन्द्रः । यत् । अभिनत् । वलम् ॥ उत् ।
गाः । आजत् । अङ्गिरोभ्यः । आविः । आ । विः । कृण्वन् । गुहा । सतीः ।
अर्वाञ्चम् । नुनुदे । वलम् ॥

३१९. त्यम् । उ । वः । सत्रासाहम् । सत्रा । साहम् । विश्वासु । गीर्षु ।
आयतम् । आ । यतम् । आ । च्यावयसि । ऊतये ॥ युध्मम् । सन्तम् ।
अनर्वाणम् । अन् । अर्वाणम् । सोमपाम् । सोम । पाम् । अनपच्युतम् । अन् ।
अपच्युतम् । नरम् । अवार्यक्रतुम् । अवार्य । क्रतुम् ॥ शिक्ष । नः । इन्द्र ।
रायः । आ । पुरु । विद्वान् । ऋचीषम । अव । नः । पार्ये । धने ॥

४. सत्रासाहीयम् ॥ इन्द्रः । गायत्री । इन्द्रः ॥

त्याऽ३४म् । उवस्सत्रासाहम् । ओऽ६वा ॥ विश्वासुगीर्ष्वाया-
ऽ२ताम् । आऽ२च्या । वाऽ२३या ॥ सियोऽ३हो । वाहाऽ३४३इ ॥

३२०. गोषूक्त्यश्वसूक्तिनौ काण्वायनौ। उष्णिक्। इन्द्रः॥

९९५. तव त्यदिन्द्रियं बृहत्तव दक्षमुत क्रतुम्।
वज्रꣳशिशाति धिषणा वरेण्यम् ॥१॥

९९६. तव द्यौरिन्द्र पौꣳस्यं पृथिवी वर्द्धति श्रवः।
त्वामापः पर्वतासश्च हिन्विरे ॥२॥

९९७. त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः।
त्वाꣳशर्द्धो मदत्यनु मारुतम् ॥३॥

धा. १३. उ. २. स्व. ४. ठी. ॥११॥

तृतीयः खण्डः॥

३२०. तव। त्यत्। इन्द्रियम्। बृहत्। तव। दक्षम्। उत। क्रतुम्। वज्रम्। शिशाति। धिषणा। वरेण्यम्॥ तव। द्यौः। इन्द्र। पौꣳस्यम्। पृथिवी। वर्धति। श्रवः। त्वाम्। आपः। पर्वतासः। च। हिन्विरे॥ त्वाम्। विष्णुः। बृहन्। क्षयः। मित्रः। मि। त्रः। गृणाति। वरुणः। त्वाम्। शर्द्धः। मदति। अनु। मारुतम्॥

ताऽ२३४योऽ६"हाइ ॥श्रीः॥ युध्माऽ२४म्। सन्तमनर्वाणम्। ओऽ६वा॥ सोमपामनपच्यूऽ२ताम्। नाऽ२राम्। आऽ२३वा॥ रियौऽ३हो। वाहाऽ३४३इ॥ क्राऽ२३४तोऽ६"हाइ॥ श्रीः॥ शिक्षाऽ३४। यइन्द्रायञा। ओऽ६वा॥ पुरुविद्वाꣳसञ्चीपाऽ२सा। आऽ२वा। नाऽ२३४पा॥ रियौऽ३हो। वाहाऽ३४३इ॥ धाऽ२३४नोऽ६"हाइ॥

दी. १८. उत्. न. मा. १६. ह्र. ॥५१८॥

५. सौभरम्॥ सुभरिः। उष्णिक्। इन्द्रः॥
तवाऽ३त्याऽ३दिन्द्रियम्बृहोवा॥ तवदक्षमुतक्राऽ२तूम्वज्राऽ२३म्। हाइ। शाऽ२३४इशा। तिधिषणा। वराऽ२हाऽ३इ॥ णाऽ२याऽ२३४औहोवा॥ श्रीः॥ तवाऽ३द्यौऽ३रिन्द्रपौꣳसियोवा॥ पृथिवीवर्द्धतिश्राऽ२-



वास्तुवाऽ२३म्। हाइ। आऽ२३४पाः॥ पर्वतासः। चहाऽ३हाऽ३इ॥ न्वाऽ२इराऽ२३४औहोवा॥ श्रीः॥ तुवाऽ३म्वाऽ३इष्णुर्बृहन्क्षयोवा॥ मित्रोगृणातिवरूऽ२णास्तुवाऽ२३म्। हाइ। शाऽ२३४र्द्धः॥ मदत्य। नुमाऽ३हाऽ३॥ रूऽ२ताऽ२३४औहोवा॥ ऊऽ२३४५॥

दी. १२. उत्. न. मा. १८. पे. ॥५१९॥

६. [1]वैखनꣳसोमसाम॥ सोमः। अनुष्टुप्। पवमानस्सोमः॥
पुरोजाऽ३इतीवोअन्धसाः॥ सुतायामाऽ२। दायाइत्नवे। ओऽ३४। हाहोइ॥ अपश्वानꣳश्नऽ३थाइष्टन। ओऽ३४। हाहोइ॥ सखायोदीर्घजिह्वियम्। दुराऽ२। तिनाऽ३४औहोवा॥ श्रीः॥ सखायोऽ३दीर्घजिह्वियाम्॥ योधारायाऽ२। पावाकया। ओऽ३४। हाहोइ॥ परिप्रस्यन्दऽ३ताइसुतः। ओऽ३४। हाहोइ॥ इन्दुरश्वोनकृत्वियः। दुराऽ२। तिनाऽ३४औहोवा॥ श्रीः॥ इन्दुराऽ३श्वोनकृत्वियाः॥ तन्दुरोषाऽ२म्। अभाइनरः। ओऽ३४। हाहोइ॥ सोमव्विश्वाचिऽ३याधिया। ओऽ३४। हाहोइ॥ यज्ञायसन्त्वद्रयः। दुराऽ२। तिनाऽ३४औहोवा॥ ऊऽ२३४पा॥

दी. ३५. उत्. ६. मा. २४ पी. ॥५२०॥

७. [2]आमहीयवम्॥ अमहीयुः। गायत्री। पवमानस्सोमः॥
प्रत्नम्पीऽ३यूषम्पूर्वियाम्॥ यदुक्थ्याऽ१याऽ२म्। महोऽ२३गाहात्॥ दिवाअनाइः॥ अधूऽ२३क्षताउ। वाऽ३॥ स्तौपेऽ२३४५॥

दी. ५. उत्. २. मा. ७. के. ॥५२१॥

८. ऐडꣳसौपर्णम्॥ सुपर्णः। गायत्री। पवमानस्सोमः॥
इन्द्रमच्छोवा॥ जायामाऽ२३४नाम्। समास्वरान्। आदाऽ२इत्थाऽ२३४इवीत्॥ पाऽ२२या। माऽ२२ना॥ सावापियाम्। ओऽ२३४वा। होऽ५इ॥डा॥

दी. २. उत्. २. मा. ८. छे. ॥५२२॥

[1] अष्टादशसूक्ते गीयते।
[2] इमानि त्रीणि सामान्येकषष्ट्यधिकद्विशततमसूक्तस्य प्रथमद्वितीययोः ऋचोर्गीयन्ते। तत्र च द्वे तृचोद्भूत्रयो तिस्रो गायत्रीः कृत्वा क्रमेण गीयन्ते।

९. सत्रासाहीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

वसुऽ३४ । रुचादिव्याअ । भोऽ६वा ॥ अनूपतदिवोनाऽ२वा । गाऽ२७सा । वाऽ२३इता ॥ वियोऽ२हो । वाहाऽ३४३इ ॥ णूऽ२३४- तोऽ६हाइ ॥

दी. ६. उन. न. मा ४. ही. ॥५२३॥

१०. [1]सदोविशीयम् ॥ प्रजापतिः । सतोबृहती । पवमानस्सोमः ॥

अघयदिमेपवसाओहाओहाऽ३ए । औहोऔहोऽ३वा ॥ नरोदसी- इमाचवाइ । औऽ३हा । श्राभुवनाभिसञ्मनायूथेननाइ । ओऽ३हा ॥ स्वावार्पाऽ१भाऽ२ः । औऽ३हा । ओऽ३हाऽ३ए । औऽ३होइ । ओऽ३- हाऽ३वा ॥ विरा । जाऽ२साऽ२३४औहोवा ॥ सदोविशाऽ२३४५ः ॥

दी. २१. उन्. ५. मा. १२. जा ॥५२४॥

११. [2]उत्सेधः ॥ अङ्गिरसः । सतोबृहती । पवमानस्सोमः ॥

प्रत्नम्पीयूषम्पूर्व्यम्यदु । क्थियाऽ२४औहोवा ॥ महोगाहाऽ२त् । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ दिवाऽ३अना । औहोवाहाइ ॥ आधु- क्षता । इन्द्रमाभि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ जायाऽ३मानम् । औहोवाहाइ ॥ समाऽ३स्वाऽ५राऽ६५६न् ॥श्रीः॥ आदीङ्किचित्पश्यमाना । सआ । पियाऽ३४औहोवा ॥ वसुरुचोऽ२ । हाऽ३१उवाऽ२३ । ऊ- ऽ३४पा ॥ दिव्याऽ३अभा । औहोवाहाइ ॥ आनूपता । दिवोनावा । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ र७साऽ३विता । औहोवाहाइ ॥ वियूऽ३णू- ऽ५ताऽ६५६इ ॥ श्रीः ॥ अघयदिमेपवसा । नरो । दसाऽ३४औहोवा । इमाचवाऽ२इ । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ श्राभूऽ३वना । औहोवाहाइ ॥ भाइमज्मना । यूथेनानि । हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ स्वावाऽ३पभः । औहोवाहाइ ॥ विराऽ३जाऽ५साऽ६५६इ ॥ ऊऽ२३४५ ॥

दी. ३७. उन्. ६. मा. २६. चू. ॥५२५॥

[1] एकषष्ट्यधिकद्विशततमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
[2] एकषष्ट्यधिकद्विशततमसूक्ते गीयते ।



३२१. विरूप आङ्गिरसः । गायत्री । अग्निः ॥

९९८. नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय ॥१॥
९९९. कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥२॥
१०००. मा नो अग्ने महाधने परावर्ग्भारभृद्यथा । संवर्ग७सं७रयिं जय ॥३॥

धा. १५. उ. १. स्व. १. प. ॥१२॥

३२१. नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः । अमैः । अमित्रम् । अ । मित्रम् । अर्दय ॥ कुवित् । सु । नः । गविष्टये । गो । इष्टये । अग्ने । संवेषिषः । सम् । वेषिषः । रयिम् । उरुकृत् । उरु । कृत् । उरु । नः । कृधि ॥ मा । नः । अग्ने । महाधने । महा । धने । परा । वर्क् । भारभृत् । भार । भृत् । यथा । सम्वर्गम् । सम् । वर्गम् । सम् । रयिम् । जय ॥

१२. [1]श्यैनम् ॥ प्रजापतिः । त्रिष्टुप् । इन्द्रः ॥

तदिदासभुव । नेषूऽ३४औहोवा ॥ ज्याइष्ठम्यतोजज्ञउग्रः । त्वेषानृम्णाऽ२३४ः । ओऽ६हा । सद्योजज्ञानः । नाइराऽ२३इणा । तिशा- ऽ२ । त्रूऽ२३४ना ॥ नुयम्बिश्वाइमाऽ३दा ॥ हुम्माइ । त्यूऽ२माऽ२३४- औहोवा ॥ श्रीः ॥ वावृधानश्शव । साभूऽ३४औहोवा ॥ गओजा- श्शत्रुर्दासायभिय । सन्दाधाऽ१ताऽ२३४इ । ओऽ६हा । अव्यनच्च्य । नाचाऽ२३सा । स्निमाऽ२म् । ताऽ२३४इना ॥ बन्तप्रभार्ताऽ३मा ॥ हुम्माइ । दाऽ२इपूऽ२३४औहोवा ॥ श्रीः ॥ त्वेकतुमपिवृ । जन्ताऽ३४- औहोवा ॥ वाइश्वेद्वियदेतेत्रिर्भ । वन्ताऊऽ१माऽ२३४ः । ओऽ६हा । स्वादो- स्वादीयस्वादु । नासाऽ२३जो । समाऽ२ । दाऽ२३४स्व ॥ मधुमधूना- ऽ३भा ॥ हुम्माइ । योऽ२धाऽ२३४औहोवा । वाऽ२३४ष ॥

दी. ३४. उन्. ५. मा. २५. सु. ॥५२६॥

१३. [2]सुरूपोत्तरम् ॥ सुरूपः । गायत्री । पवमानस्सोमः ॥

रक्षोहावौहोऽ२ । इया ॥ श्ववर्पणाऽ२इः । अभियोनौहोऽ२ ।

[1] सप्तपञ्चाशदुत्तरद्विशततमसूक्ते गीयते । [2] पञ्चदशसूक्तस्य द्वितीयस्तोत्रीयायां गीयते ।

३२२. वत्सः काण्वः । गायत्री । इन्द्रः ॥

१००१. समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
समुद्रायेव सिन्धवः ॥१॥

१००२. वि चिद्वृत्रस्य दोधतश्शिरो बिभेद वृष्णिना ।
वज्रेण शतपर्वणा ॥२॥

१००३. ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥३॥

धा. १४. उ. १. स्व. न. नौ. ॥१३॥

३२३. शुनश्शेपः । गायत्री । इन्द्रः ॥

१००४. सुमन्मा वस्वी रन्ती सूनरी ॥१॥

---

३२२. सम् । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः । समुद्राय । सम् । उद्राय । इव । सिन्धवः ॥ वि । चित् । वृत्रस्य । दोधतः । शिरः । बिभेद । वृष्णिना । वज्रेण । शतपर्वणा । शत । पर्वणा ॥ ओजः । तत् । अस्य । तित्विषे । उभे इति । यत् । समवर्तयत् । सम् । अवर्तयत् । इन्द्रः । चर्म । इव । रोदसी इति ॥

३२३. सुमन्मा । सु । मन्मा । वस्वी । रन्ती । सूनरी । सु । नरी ॥

---

इया । अयोहाताऽ२इ ॥ द्रोणेसधोहोऽ२ । इया ॥ स्थमासाऽ२३दा-ऽ३४३त् । ओऽ२३४५इ ॥डा॥ दी. ७. उत्. ६. मा. ५. चु. ॥२२७॥

१४. वारवन्तीयम् ॥ इन्द्रः । गायत्री । इन्द्रः ॥ ( पवमानस्सोमः ) ?

साओहोहाइ ॥ माऽ२३४न्मा । वाऽ२३४हाइ । स्वाइराऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४न्ती ॥ सूनाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ ॥ औहोऽ३१२३४ ॥ राइ । एहियाऽ६हा ॥ श्रीः ॥ सरूपवाओहोहाइ ॥ पानागाऽ२३४ही । इमौभाऽ२३४हा । द्रौधुर्यावाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । उहुवाऽ२३४भी ॥ ताविमौ । ऊपसर्पाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । ताः । एहियाऽ६हा ॥



१००५. सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि । ताविमा उप सर्पतः ॥२॥

१००६. नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति ।
शृङ्गेभिर्दशभिर्दिशन् ॥३॥

धा. ७. उ. न. स्व. ३. चि. ॥१४॥

चतुर्थः खण्डः ॥

इति सप्तदशोऽध्यायः ॥

अष्टमप्रपाठकस्य प्रथमोऽर्धः ॥

---

सरूप । स । रूप । वृषन् । आ । गहि । इमौ । भद्रौ । धुर्यौ । अभि । तौ । इमौ । उप । सर्पतः ॥ नि । इव । शीर्षाणि । मृढ्वम् । मध्ये । आपस्य । तिष्ठति । शृङ्गेभिः । दशभिः । दिशन् ॥

---

श्रीः ॥ नीवशीर्षाओहोहाइ ॥ णाइमार्द्वऽ२३४वाम् । मध्याआऽ२३४हा । पस्यतिष्ठाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४ताइ ॥ शृङ्गेभिः । दाशभिर्दाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । शान् । एहियाऽ६हा । होऽ५इ ॥डा॥ दी. ३३. उत्. ७. मा. २३. ठि. ॥२२८॥

१५. [1]वैयश्वम् ॥ व्यश्वः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारयाऽ३ए ॥ अपोवसाऽ२नोअर्षसाऽ२३इ । होवा-ऽ३हाइ । आरत्नधायोनिमृताऽ२ । स्यासाऽ३हाइ । दाऽ२३४साइ ॥ उत्सोदेवोहिराऽ२३हो ॥ ण्यया । औऽ३होवा । होऽ५इ ॥डा॥ दी. ११. उत्. २. मा. ७. खे. ॥२२९॥

१६. [2]वषट्कारणिधनम् ॥ प्रजापतिः । बृहती । पवमानस्सोमः ॥

उत्सोदेवोहिरण्ययः । उत्सोदाऽ३इवोहिरण्ययाः ॥ उत्सोदेवोहि-ऽ३राण्ययाऽ२ः । हिराण्याऽ१याऽ२३ः । ओमोऽ३वा ॥ दुहानऊधर्दि-वियम्मऽ३धुप्रियाऽ२म् । मधुप्राऽ१याऽ२३म् । ओमोऽ३वा ॥ प्रत्नꣳसधस्थ-

---

[1] नवमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[2] नवमसूक्तस्य सप्तमस्तोत्रीयायां गीयते ।

ऽ३मासदाऽरत् । स्थसामाऽ१दाऽ२३त् । ओम् । ओऽर । वाऽ२३४ ।
औहोवा ॥ ऊऽ२३४पा ॥ दी. १५. उत्. ३. मा. ११. व. ॥५३०॥

१७. [1]सत्रासाहीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

यस्तेऽ३४ । मदोवरेणियः । ओऽ६वा ॥ तेनापवस्वान्धाऽ२सा ।
दाऽ२इवा । वाऽ२३इरा ॥ घशोऽ३हो । वाहाऽ३४३इ ॥ साऽ२३४हो-
ऽ६"हाइ ॥ श्रीः ॥ जघ्नाऽ३४इः । वृत्रममित्रियम् । ओऽ६वा ॥ सस्निर्वा-
जन्दिवेदाऽ२इवाइ । गोऽ१पा । ताऽ२३इरा ॥ श्वसोऽ३हो । वाहाऽ३४३इ ॥
आऽ२३४सोऽ६"हाइ ॥ श्रीः ॥ सम्माऽ३४इ । श्रोअरुपोशुवः । ओऽ६वा ॥
सूपस्याभिर्नधेनूऽ२भाइः । साऽ२इदान् । श्याऽ२३इनाः ॥ नयोऽ३हो ।
वाहाऽ३४३इ ॥ नाऽ२३४इसोऽ६"हाइ ॥ दी. १८. उत्. न. मा. २५. रु. ॥५३१॥

१८. [2]प्रतीचीनेडं काशीतम् ॥ काशीतः । ककुप् । पवमानस्सोमः ॥

पवस्वमधु । माऽ२त्तमाः ॥ आइन्द्रायसोमक्रतुवित् । तमोमदा-
ऽ२३४ः । हाहोइ ॥ महिद्युक्षाताऽ३माः ॥ मदा । औऽ३होवा ॥ श्रीः ॥
महिद्युक्षत । मोऽ२मदाः ॥ यास्यतेपीत्वावृषभः । वृषायताऽ२३४इ ।
हाहोइ । अस्यपीत्वासुऽ३वाः ॥ विदा । औऽ३होवा ॥ श्रीः ॥ अस्यपीत्वासु ।
वाऽ२विंदाः ॥ सासुप्रकेतोअभिय । क्रमाइदिषाऽ२३४ः । हाहोइ ।
अध्वावाजान्नाऽ३ए ॥ तशा । औऽ३होवा ॥ ईडा ॥
दी. १५. उत्. ७. मा. १७. फे. ॥५३२॥

अष्टमो विंशः ॥

त्रयोदशःप्रपाठकः ॥

इत्यूहगान एकाहपर्व सम्पूर्णम् ॥

[1] षष्टितमसूक्ते गीयते ।
[2] षोडशसूक्ते गीयते ।

अथोहगाने चतुर्थमहीनपर्व ॥

## अथाष्टादशोऽध्यायः ॥

अष्टमप्रपाठकस्य द्वितीयोऽर्धः ॥

३२४. मेधातिथिः काण्वः प्रियमेधश्चाङ्गिरसः । गायत्री । इन्द्रः ॥

१००७. पन्यंपन्यमित्सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥१॥

१००८. एह हरी ब्रह्मयुजा शग्मा वक्षतस्सखायम् ।
इन्द्रं गीर्भिर्गिर्वणसम् ॥२॥

१००९. पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नि यमते शतमूतिः ॥३॥

धा. १४. उ. १. स्व. ३. ति. ॥१॥

---

३२४. पन्यंपन्यम् । पन्यम् । पन्यम् । इत् । सोतारः । आ । धावत । मद्याय । सोमम् । वीराय । शूराय ॥ आ । इह । हरी इति । ब्रह्मयुजा । ब्रह्म । युजा । शग्मा । वक्षतः । सखायम् । स । खायम् । इन्द्रम् । गीर्भिः । गिर्वणसम् । गिः । वनसम् ॥ पाता । वृत्रहा । वृत्र । हा । सुतम् । आ । घ । गमत् । न । आरे । अस्मत् । नि । यमते । शतमूतिः । शतम् । ऊतिः ॥

---

श्रीः ॥

१. श्रौतकक्षम् ॥ श्रुतकक्षः । गायत्री । इन्द्रः ॥

पन्यम्पन्यमित्सोतारः । पन्यम्पन्योवा ॥ आऽ३इत्सोताऽ३राः । आधाव । ताऽ२३ । हाऽ३हाऽ२ । मादीऽ२याऽ२३४या ॥ सोमम्वीराऽ३ । हाऽ३हा ॥ यशूराऽ२३याऽ२३४३ ॥ श्रीः ॥ एहहरीब्रह्मयुजे । हहरोवा ॥ ब्राऽ३ह्मायूऽ३जा । शग्माव । शाऽ२३ । हाऽ३हाऽ२ । तास्माऽ२खा-ऽ२३४याम् ॥ आइन्द्रङ्गीर्भीऽ३इः । हाऽ३हाइ ॥ गिर्वणाऽ२३सा-ऽ३४३म् ॥ श्रीः ॥ पाताव्रत्रहासुतम् । पातावोवा ॥ आऽ३हाघ्ऽ३ताम् । आघाग । मोऽ२३त् । हाऽ३हाऽ३इ । नारेऽ२आऽ२३४स्मात् ॥ नाइय-मताऽ३इ । हाऽ३हाइ ॥ शतमुऽ२३तीऽ३४३ः । औऽ२३४५इ ॥डा॥

दी. १८. उत्. ६. मा. २०. डी. ॥५२३॥

३२५. श्रुतकक्षः सुकक्षो वाङ्गिरसः । गायत्री । इन्द्रः ॥

१०१०. आ त्वा विशन्त्विन्दवस्समुद्रमिव सिन्धवः ।
न त्वामिन्द्राति रिच्यते ॥१॥

१०११. विव्यक्थ महिना वृषन्भक्ष ँसोमस्य जागृवे । य इन्द्र जठरेषु ते ॥२॥

१०१२. अरन्त इन्द्र कुक्षये सोमो भवतु वृत्रहन् । अरन्धामभ्य इन्दवः ॥३॥

धा. ११. उ १. स्व. १. क. ॥२॥

---

३२५. आ । त्वा । विशन्तु । इन्दवः । समुद्रम् । सम् । उद्रम् । इव । सिन्धवः । न । त्वाम् । इन्द्र । अति । रिच्यते ॥ विव्यक्थ । महिना । वृषन् । भक्षम् । सोमस्य । जागृवे । यः । इन्द्र । जठरेषु । ते । अरम् । ते । इन्द्र । कुक्षये । सोमः । भवतु । वृत्रहन् । वृत्र । हन् । अरम् । धामभ्यः । इन्दवः ॥

---

२. आष्टादँष्ट्रम्पूर्वम् ॥ अष्टादंष्ट्रः । अनुष्टुप् । इन्द्रः ॥

आत्वाविशन्त्विन्दवः । ऐयाहाइ ॥ समूद्राऽ१माऽ२इ । वसा-इन्धाऽ१वाऽ२३ः । ऐयाऽ२३हाइ ॥ नत्वामाऽ१इन्द्राऽ२ । तिराइच्याऽ१-ताऽ२३इ । ऐयाऽ२३हाइ ॥ नत्वामाऽ१इन्द्राऽ२ । तिराइच्याऽ१-ताऽ२३इ । ऐयाऽ२३हाऽ३४३इ ॥ श्रीः ॥ विव्यक्थमहिनावृषन् । ऐयाहाइ ॥ भक्षा ँसोऽ१माऽ२ । स्यजागृऽ१वाऽ२३इ । ऐयाऽ२३हाइ ॥ यआइन्द्राऽ१जाऽ२ । ठराइषूऽ१ताऽ२३इ । ऐयाऽ२३हाइ ॥ यआइन्द्रा-ऽ१जाऽ२ । ठराइषूऽ१ताऽ२३इ । ऐयाऽ२३हाऽ३४३इ ॥श्रीः॥ अरन्तइन्द्र-कुक्षये । ऐयाहाइ ॥ सोमोभाऽ१वाऽ२ । तुवात्राँऽ१हाऽ२३न् । ऐया-ऽ२३हाइ ॥ अरान्धाऽ१माऽ२ । भ्यआइन्दाऽ१वाऽ२३ः । ऐयाऽ२३हाइ ॥ अरान्धाऽ१माऽ२ । भ्यआइन्दाऽ१वाऽ२३ः । ऐयाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. १४. उत्. १९. मा. ४१. ॥५३४॥



३२६. शुनश्शेप आजीगर्तिः । गायत्री । अग्निः ॥

१०१३. जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोम ँरुद्राय दृशीकम् ॥१॥

---

३. [1]सुरूपोत्तरम् ॥ सुरूपः । गायत्री । पवमानस्सोमः ॥

परिस्वोहोऽ२ । इया ॥ नोगिराइष्ठाऽ२ः । पवित्रेसोहोऽ२ । इया । सोअक्षाराऽ२त् ॥ श्रीः ॥ तुवम्विप्रोहोऽ२ । इया ॥ तुवङ्कावा-ऽ२इः । मधुप्रजोहोऽ२ । इया । तमन्धासाऽ२ः ॥ श्रीः ॥ तुवेविश्वो-होऽ२ । इया ॥ सजोषासाऽ२ः । देवास ँपोहोऽ२ । इया । तिमाशानाऽ२ ॥ मदेषुसोहोऽ२ । इया ॥ वेधाआऽ२३साऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. १०. उत्. १४. मा. ११. भ. ॥५३५॥

४. [2]स्वर्निधनसौहविषम् ॥ सुहविः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

परीऽ३होइ । प्रधाऽ२३४न्वा ॥ इन्द्राऽ३हो । यसोऽ२३४मा । स्वादूऽ३होइ । मित्राऽ२३४या । पूष्णेऽ३होइ । भगाऽ२३४या ॥ पूष्णे-भगाय ॥ पूष्णेऽ३४३ । होऽ३४३इ । भाऽ३गाऽ५याऽ६५६ ॥ श्रीः ॥ एवाऽ३होइ । अमृताऽ२३४या ॥ महेऽ३होइ । क्षयाऽ२३४या । सशु-ऽ३हो । क्रोआऽ२३४र्णा । दिव्याऽ३होइ । पीयूऽ२३४षाः ॥ दिव्य ँ-पीयूषः ॥ दिव्याऽ३४३ः ॥ होऽ३४३इ । पीऽ३यूऽ५षाऽ६५६ः ॥ श्रीः ॥ इन्द्राऽ३हो । तेसोऽ२३४मा ॥ सुताऽ३हो । स्यपेऽ२३४यात् । क्रत्वे-ऽ३होइ । दक्षाऽ२३४या । विश्वेऽ३होइ । चदाऽ२३४इवाः ॥ विश्वे-चदेवाः ॥ विश्वेऽ३४३ । होऽ३४३इ । चाऽ३देऽ५इवाऽ६५६ः ॥ एऽ३ । सुवर्ज्योतिःऽ२३४५ ।

दी. १५. उत्. न. मा. २२. चा. ॥५३६॥

---

[1] पञ्चचत्वारिंशदुत्तरशततमसूक्ते गीयते ।

[2] सप्तदशोत्तरद्विशततमसूक्ते गीयते ।

१०१४. स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ॥२॥

१०१५. स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥३॥

धा. ११. उ. न. स्व. १. हृ. ॥३॥

३२७. शंयुर्बार्हस्पत्यः । गायत्री । इन्द्रः ॥

१०१६. तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥१॥
१०१७. न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप श्रवद्गिरः ॥२॥

---

३२६. जराबोध । जरा । बोध । तत् । विविड्ढि । विशेविशे । विशे । विशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥ सः । नः । महान् । अनिमानः । अ । निमानः । धूमकेतुः । धूम । केतुः । पुरुश्चन्द्रः । पुरु । चन्द्रः । धिये । वाजाय । हिन्वतु ॥ सः । रेवान् । इव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः । उक्थैः । अग्निः । बृहद्भानुः । बृहत् । भानुः ॥

३२७. तत् । वः । गाय । सुते । सचा । पुरुहूताय । पुरु । हूताय । सत्वने । शम् । यत् । गवे । न । शाकिने ॥ न । घ । वसुः । नि । यमते । दानम् । वाजस्य । गोमतः । यत् । सीम् । उप । श्रवत् । गिरः ॥ कुवित्सस्य ।

---

५. जराबोधीयम् ॥ अग्निः । गायत्री । अग्निः ॥

जराबोधोवा ॥ तद्विविड्ढाइ । विशाइवाऽ२३इशे । यज्ञियाया ॥ स्तोमाऽरुद्राऽ२३ँया । दृ । शीकोऽ३४५इ ॥ डा ॥ श्रीः ॥ सनोमहोवा ॥ आनिमानाः । धूमाकाऽ२३इतूः । पुरुश्चान्द्राः ॥ धियेवाऽ१जाऽ२३ँया । हि । न्वतोऽ३४५इ ॥ डा ॥ श्रीः ॥ सरेवाऽओवा ॥ वाविश्पताइः ॥ दैव्याःकाऽ२३इतूः । शृणोतूनाः ॥ उक्थाइराऽ१ग्नाऽ२३इँबृ । हत् । भानोऽ३४५इ ॥डा॥

दी. १३. उत्. ९. मा. १९. टो. ॥३७॥



१०१८. कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् ।
शचीभिरप नो वरत् ॥३॥

धा. १५. उ. २. स्व. ४. फी. ॥४॥

प्रथमः खण्डः ॥

३२८. मेधातिथिः काण्वः । गायत्री । विष्णुः ॥

१०१९. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुले ॥१॥
१०२०. त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥२॥

---

कुवित् । सस्य । प्र । हि । व्रजम् । गोमन्तम् । दस्युहा । दस्यु । हा । गमत् । शचीभिः । अप । नः । वरत् ॥

३२८. इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् । समूढम् । सम् । ऊढम् । अस्य । पांसुले ॥ त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । गो । पाः । अदाभ्यः । अ । दाभ्यः । अतः । धर्माणि । धारयन् । विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य ।

---

६. मार्गीयवम् ॥ मृगयुः । गायत्री । इन्द्रः ॥

तद्वोहोवा ॥ गायाऽ२ । सुताइसाऽ२३४चा । पुरुहूता । यसा-त्वाऽ१नाऽ२इ ॥ शंयत् । हा । औऽ३होइ । गाऽ२३४वाइ ॥ नाऽ२-शाऽ२३४औहोवा ॥ एऽ३ । किनेऽ२३४५ ॥श्रीः॥ नघोहोवा ॥ वासुऽ२ः । नियामाऽ२३४ताइ । दानंवाज । स्यगोमाऽ१ताऽ२ः ॥ यत्सीम् । हा । औऽ३होइ । ऊऽ२३४पा ॥ श्राऽ२वाऽ२३४औहोवा । एऽ३ । गिरा-ऽ२३४५ः ॥ श्रीः ॥ कुवोहोवा ॥ सास्याऽ२ । प्रहिव्राऽ२३४जाम् । गोमन्तन्द । स्युहागाऽ१माऽ२त् ॥ शचो । हा । औऽ३होइ । भाऽ२३४-इरा ॥ पाऽ२वाऽ२३४औहोवा ॥ एऽ३ । वराऽ२३४५त् ॥

दी. १६. उत्. ६. मा. १९. फी. ॥३८॥

१०२१. विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यस्सखा ॥३॥
१०२२. तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥४॥
१०२३. तद्विप्रासो विपन्युवो जागृवाꣳसस्समिन्धते ।
विष्णोर्यत्परमं पदम् ॥५॥
१०२४. अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधि सानवि ॥६॥

धा. ३३. उ. २. स्व. ६. ठ. ॥१॥

युज्यः । सखा । स । खा ॥ तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिवि । इव । चक्षुः । आततम् । आ । ततम् ॥ तत् । विप्रासः । वि । प्रासः । विपन्युवः । जागृवाꣳसः । सम् । इन्धते । विष्णोः । यत् । परमम् । पदम् ॥ अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विचक्रमे । वि । चक्रमे । पृथिव्याः । अधि । सानवि ॥

७. वारवन्तीयम् ॥ इन्द्रः । गायत्री । विष्णुः ॥

इदंविष्णाओहोहाइ ॥ वाइचक्राऽ२३४माइ । त्रेधानाऽ२३४इहाइ । दधेपाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४दाम् ॥ समूढम् । आस्यपाꣳसुऽ३४ । औहोवा ॥ इहाऽ२३४इाइ । ओहोऽ३१२३४ । लाइ । एहियाऽ६हा ॥ श्रीः ॥ त्रीणिपदाओहोहाइ ॥ वाइचक्राऽ२३४माइ । विष्णुर्गोऽ२३४हा । पाअदाभाऽ३४ । औहोवा । इहाऽ२३४इाइ । उहुवाऽ२३४याः ॥ अतोध । माणिधाराऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । यान् । एहियाऽ६हा ॥श्रीः॥ विष्णोः कर्माओहोहाइ ॥ णाइपश्याऽ२३४ता । यतोव्राऽ२३४हा । तानिपस्पाऽ३४ । औहोवा । इहाऽ२३४इाइ । उहुवाऽ२३४शाइ ॥ इन्द्रस्य । यूजियस्साऽ३४



औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । खा । एहियाऽ६हा । होऽ५इ ॥३॥

दी. ३५. उत्. ९. मा. २७. जे. ॥४३॥

८. धुरासाकमश्वम् ॥ साकमश्वः । ककुप् । पवमानस्सोमः ॥

पवस्वमाऽ३ । होऽ३होऽ३१ ॥ धुमत्तमाऽ३ः । होऽ३होऽ३१इ ॥ इन्द्रायसोऽ३ । होऽ३होऽ३१ ॥ मक्रतुवित्तमोमदाऽ३ः । होऽ३होऽ३१इ ॥ महिद्युक्षाऽ२ । होऽ३होऽ३१ ॥ तमोमदाऽ३ः । होऽ३होऽ३१२३४५इ ॥८॥

दी. ३. उत्. न. मा. ६. ल. ॥४०॥

९. जनित्रावम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ॥

अभिसोऽ३मासआयवाः ॥ हुवेहोऽ२इ । पवन्तेमदिराम्माऽ१दाऽ२म् । समुद्रस्याधिविष्टपाऽ२इ । मनाइषाऽ२३४इणाः ॥ मत्साऽ३होइ । रासाऽ३हो ॥ मद । च्युऽ२ताऽ२३४औहोवा ॥ श्रीः ॥ मत्सराऽ३सोमदच्युताः ॥ हुवेहोऽ२इ । मत्सरासोमदाच्युऽ१ताऽ२ः । तरत्समुद्रंपवमाऽ२नऊर्माऽ२३४इणा ॥ राजाऽ३होइ । देवाऽ३हो ॥ ऋतम् । बृऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ राजादाऽ३इवऋतंबृहात् ॥ हुवेहोऽ२इ । राजादेवऋतांबृऽ१हाऽ२त् । अर्षामित्रस्यवरुणाऽ२ । स्यधर्माऽ२३४णा ॥ प्रहाऽ३इहोइ । स्वानाऽ३हो । ऋतम् । बृऽ२हाऽ२३४औहोवा ॥ जनित्राऽ२३४५म् ॥

दी. २२. उत्. ७ मा. २९. ठो. ॥४१॥

१०. जनित्रोत्तरम् ॥ वसिष्ठः । बृहती । पवमानस्सोमः ।

तंवोदस्ममृती । षहाऽ३म् । वसोर्मा ॥ होइ । (द्विः) । दाना मन्धासाऽ२३४ः । अभिवत्सन्नस्वसरे । धुषाऽ३इनावाः ॥ आइन्द्रङ्गीर्भिर्नवोऽ३ । होऽ३१इ ॥ साऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ इन्द्रङ्गीर्भिर्नवा । महाऽ३इ । इन्द्रङ्गाइ ॥ होइ । (द्विः) । भिर्नावाऽ१माहाऽ२३४इ । द्युक्षꣳमु-

१ घोडवसूनाख्य प्रथमसप्तविंशत्यां गीयते ।
२ विवाचलितिमनुक्ते गीयते । ३ त्रयोदशी सूक्ते गीयते ।

दानुन्तविपी । भिराऽ२त्रार्ताम् ॥ गाइरिन्नपुरुभोऽ३ । होऽ३१इ ॥ जाऽ२-
माऽ२३४ओहोवा ॥ श्रीः ॥ गिरिन्नपुरुभो । जसाऽ३म् । गिरिन्ना ॥ होइ
(द्विः) । पुरुभोऽ१जासाऽ२३४म् । क्षुमन्तंवाज॰शतिनम् । सहाऽ३स्राइ-
णाम् ॥ माक्षूगोमन्तमोऽ३ । होऽ३१इ ॥ माऽ२हाऽ२३४ओहोवा ॥
जनिऽ३त्राऽ२३४५म् ॥ दी. २०. उन्. न. मा. २८. वै. ॥५४२॥

११. [1]जराबोधीये ॥ अग्निः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रमच्छोवा ॥ सुताइमाइ । वृषाणाऽ२३म्या । तुहरयश्शुष्टे-
जाता ॥ सख्याइन्दाऽ१वाऽ२३"स्सू । वः । विदोऽ३४५इ ॥ डा ॥ श्रीः ॥
अयंभरोवा ॥ यासानसाइः । इन्द्रायाऽ२३पा । वतेसुतस्सोमाजेत्रा ॥
स्यचाइताऽ१ताऽ२३इ"या । धा । विदोऽ३४५इ ॥ डा ॥ श्रीः ॥ अस्ये-
दिन्द्रोवा ॥ मादेषुवा । ग्राभाङ्गाऽ२३म्णा । तिसानसिंवज्रश्चवा ॥
पणाम्भाऽ१राऽ२३"त्साम् । अ । प्सुजोऽ३४५इ ॥डा॥
दी. १३. उन्. ९. मा. १३. डि. ॥५४३॥

१२. [2]अग्निः । गायत्री । पवमानस्सोमः ॥

प्रसोमासोवा ॥ वाइपश्चिताः । अपोनाऽ२३या । तऊर्मायाः ॥
वनानाऽ१इमाऽ२३"हाइ । षाः । इवोऽ३४५इ ॥डा॥श्रीः॥ अभिद्रोणोवा ॥
नाइवभ्रवाः । शुक्राआऽ२३र्ता । स्यधाराया ॥ वाजाङ्गोऽ१माऽ२३"न्ताम् ।
अ । क्षरोऽ३४५इ ॥डा॥श्रीः॥ सुताइन्द्रोवा ॥ यावायवाइ । वरूणाऽ२३-
या ॥ मरुद्भायाः । सोमाआऽ१र्षाऽ२३"न्तू । वि । ष्णवोऽ३४५इ ॥डा॥
दी. १०. उन्. ९. मा. १८. भै. ॥५४४॥

१३. सोमसाम ॥ सोमः । गायत्री । पवमानस्सोमः ॥

प्रसोमासाः ॥ विपाश्चिताः । आपोनायाऽ३न्ताऽ२इ । ऊर्मयाः ॥

[1] सप्तदशे सूक्ते गीयते ।

[2] द्विचत्वारिंशत्तमसूक्ते त्रीणि सामानि गीयन्ते ।



वानानाइमाऽ३४ । हाउ ॥ हिपाऽ५इवा ॥श्रीः॥ अभाइद्रोणा ॥ निवाभ्रवाः ।
शुक्राआर्ताऽ३स्याऽ३ । धारया ॥ वाजाङ्गोमाऽ३४ । हाउ ॥ तमाऽ५-
क्षरन् ॥श्रीः॥ सुताइन्द्रा ॥ यवायवाइ । वारुणायाऽ३माऽ३ । रुद्भ्रयाः ॥
सोमाआर्षाऽ३४ । हाउ ॥ तुवाऽ५इष्णवाइ । होऽ५इ ॥डा॥
दी. ४. उन्. न. मा. २०. ली. ॥५४५॥

१४. रोहितकूलीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

प्रसोमासोविपाः ॥ चिताऽ२ः । अपोनयन्तऊर्माऽ२३याः ॥
वानाऽ२नाइमाऽ२३ ॥ हिषोऽ२३४वा । आऽ५इवोऽ६' हाइ ॥ श्रीः ॥
अभिद्रोणानिवा ॥ भ्रवाऽ२ः । शुक्राऋतस्यधाराऽ२३या ॥ वाजाऽ२-
ङ्गोमाऽ२३ ॥ तमोऽ२३४वा । क्षाऽ५रोऽ६''हाइ ॥श्रीः॥ सुताइन्द्रायवा ॥
यवाऽ२इ । वरुणायमरुद्भ्याऽ२३याः ॥ सोमाऽ२आर्षाऽ२३ ॥ तुवो-
ऽ२३४वा । ष्णाऽ५वोऽ६''हाइ ॥ दी. १२. उन्. ८. मा. १५. जु. ॥५४६॥

१५. [1]आचारान्तं यौधाजयम् ॥ युधाजित् । बृहती । पवमानस्सोमः ॥

प्रसोऽ३१ । भाऽ३दे । व । वाइताऽ२३४याइ ॥ साइन्धूऽ३ः ।
नपाऽ२इ । ष्येअर्णाऽ३४५ । साऽ२३४५ । अ॰शोॅपया । सा । मदि-
रोऽ२ । नजागृऽ३४५ । वीऽ२३४५ः ॥ अच्छाऽ२ ॥ कोशाऽ२म् ।
मधुश्चूऽ३४५ ॥ ताऽ२३४५म् ॥ श्रीः ॥ अच्छाऽ३१ । कोऽ३शम् ।
म । धृश्चूऽ२३४ताम् ॥ आच्छाऽ३ । कोशाऽ२म् । मधुश्चूऽ३४५ । ता-
ऽ२३४५म् । आहार्यतो । अ । जुनोआऽ२ । स्केअन्याऽ३४५ ।
ताऽ२३४५ ॥ प्रियाऽ२ः ॥ सूनूऽ२ः । नमर्जाऽ३४५ । याऽ२३४५ः ॥
श्रीः ॥ प्रियाऽ३१ः । सूऽ३नुः । न । मार्जाऽ२३४याः ॥ प्रायाऽ३ः ।
सूनूऽ२ः । नमर्जाऽ३४५ । याऽ२३४५ः । तमाइ॰हिन्वा । ति । अप-

[1] त्रिचत्वारिंशत्तमसूक्ते गीयते ।

मोऽ२ । यथाराऽ३४५ । थाऽ२३४५म् ॥ नदाऽ२इ ॥ पूवाऽ२ । गभस्ताऽ३४५ । योऽ२३४५: ॥ दी. ९. उत्. ६. मा. २८. ते. ॥५४७॥

१६. [1]स्वारं सौपर्णम् ॥ सुपर्णः । गायत्री । इन्द्रः ॥

उद्घेदभिश्रुतामाऽ३घाम् ॥ वृषभन्नर्या । हुम् । पाऽ२३४माम् ॥ आस्ताऽ३उवा ॥ रामाइ । पिबूऽ२३४वा । राऽ५योऽ६"हाइ ॥ श्रीः ॥ नवयोनवतिपूऽ३राः ॥ विभेदबाहुवो । हुम् । जाऽ२३४मा ॥ आहाऽ३उवा ॥ चवृ । त्रहोऽ२३४वा । वाऽ५घोऽ६"हाइ ॥श्रीः॥ सनइन्द्रशिवस्साऽ३खा ॥ अश्वावद्गोमद्या । हुम् । वाऽ२३४मात् ॥ ऊगाऽ३उवा ॥ धारे । वदोऽ२३४वा । हाऽ५तोऽ६"हाइ ॥

दी. १३. उत्. ६. मा. १५. डु. ॥५४८॥

१७. [2]आक्षारम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

इन्द्रम् । अच्छाऽ३४ । औहोऽ५सुताइमाइ ॥ वृषणंयन्तुहराऽ२३याऽ३४: ॥ श्रुष्टाऽ३४इजाता ॥ सइन्दवाः । सूऽ३वर्वि ॥ दाऽ२३४५: ॥ श्रीः ॥ अयम् । भराऽ३४ । औहोऽ५यसानसाइः ॥ इन्द्रायपवतेमूऽ२३ताऽ३४: ॥ सोमोऽ३४जैत्रा ॥ स्यचेतताइ । याऽ३थावि ॥ दाऽ२३४५इ ॥ श्रीः ॥ अस्येद् । इन्द्रोऽ३४ । औहोऽ५मदेपुवा ॥ ग्राभंगृभ्णातिसानाऽ२३साऽ३४इम् ॥ वज्राऽ३४श्चवा ॥ पर्णभरात् । साऽ२मप्सु ॥ जीऽ२३४५त् ॥ दी. १७. उत्. ३. मा. १९. जो. ॥५४९॥

१८. [3]वैखानसम् ॥ वैखानसाः । जगती । पवमानस्सोमः ॥

अभिप्रोऽ३याणिपवताइ ॥ चनोहिताः । नामानियाऽ२३ । हाअधियाइ । पुवार्द्धताइ । आबुरिया । स्यवृऽ२हतोऽऽ२३ । बृहद्भधाइ ॥

[1] चतुश्चत्वारिंशदुत्तरद्विशततमसूक्ते गीयते ।

[2] सप्तदशेसूक्ते गीयते ।

[3] एकोनविंशतितमसूक्ते गीयते ।



रथोविष्वा । चमरुहाऽ२३त् ॥ विचक्षणाऽ३४३: ॥श्रीः॥ ऋतस्याऽ३जिह्वापवताइ ॥ मधुप्रियाम् । वक्तापताऽ२३इः । धियोअस्याः । अदाभियाः । दधातिपूत्र । त्र ऽपाऽ२इत्रोऽ२३: । अपीचियाम् ॥ नामानृताइ । यस्विरोऽ२३ ॥ चनन्दिवाऽ३४३: ॥ श्रीः ॥ अवद्युऽ३तान ऽकलशान् ॥ अचाइक्रदान् । नृभिर्यमाऽ२३ । ण ऽकोशआ । हिरण्ययाइ । अभीमृता । स्यदोऽ२हनाऽ२३: । अनूषता ॥ अधाइत्रिपा । धुउपसोऽ२३ ॥ विराजसाऽ३४३इ । ओऽ२३४५इ ॥डा॥ दी. १८. उत्. ६. मा. ३२. डा ॥५५०॥

१९. [1]आशुभार्गवम् ॥ भृगुः । गायत्री । पवमानस्सोमः ॥

अस्यप्रताम । नुघृऽ३ताम् ॥ शुक्रंदुदूऽ३ । हेआऽ२हाऽ२३४याः ॥ पयास्साऽ१हाऽ२ ॥ समाऽ३म् । आऽ२३४पोऽ६"हाइ ॥श्रीः॥ अयऽसूर्यः । इवोपाऽ३दृक् ॥ आयऽसराऽ३ । साइयाऽ२वाऽ२३४ताइ ॥ समाप्राऽ१वाऽ२ ॥ तआऽ३ । दाऽ२३४इवोऽ६"हाइ ॥ श्रीः ॥ अवंविश्वानि । तिष्ठाऽ३ताइ ॥ पूनानोभुऽ३ । वानोऽ२पाऽ२३४राइ ॥ सोमोदाऽ१इवाऽ२: ॥ नसूऽ३ । राऽ२३४योऽ६"हाइ ॥

दी. ७. उत्. ३. मा. १७. जे. ॥५५१॥

२०. मार्गीयवम् ॥ मृगयुः । गायत्री । पवमानस्सोमः ॥

अस्योहोवा ॥ प्रत्नाऽ२म् । अनूद्युऽ२३४ताम् । शुक्रंदुदु । हेआहाऽ१याऽ२: ॥ पयः । हा । ओऽ३होइ । साऽ२३४हा ॥ साऽ२साऽ२३४औहोवा ॥ एऽ३ । ऽघाऽ२३४५इव् ॥ श्रीः ॥ अयोहोवा ॥ सूर्योऽ२: । इवोपाऽ२३४दृक् । अयऽसरा । सिवाबाऽ१ताऽ२इ ॥ सम । हा । औऽ३होइ । प्राऽ२३४वा ॥ ताऽ२आऽ२३४औहोवा ॥ एऽ३ । दिवाऽ२३४५म् ॥ श्रीः ॥ अयोहोवा ॥ वाइश्वाऽ२ । निताइष्ठाऽ२३४ताइ ।

[1] एकोनचत्वारिंशत्तमसूक्ते षट् सामानि गीयन्ते ।

पुनानोसु । वनोपाऽ१राऽ२इ ॥ सोमः । हा । औऽ३होइ । दाऽ२३४-
इवाः ॥ नाऽ२सूऽ२३४औहोवा ॥ एऽ३ । रियाऽ२३४५ः ॥

दी. १४. न. ८. मा. २६. दू. ॥५५२॥

प्रथमो विंशः ॥

चतुर्दशस्यार्द्धप्रपाठकः ॥

१. सौमित्रम् ॥ सुमित्रः । गायत्री । पवमानस्सोमः ॥

अस्यप्रत्नामनुद्युताऽ३मे ॥ शुक्रंदुदुहे । आऽ२१२३ । ह्रया-
ऽ३४३ः ॥ पोऽ२३याः ॥ सहाऽ२ओऽ२३ । स्नसोवा । आऽ५र्पोऽ६"हाइ ॥
श्रीः ॥ अयꣳसूर्यइवोपदृऽ३गे ॥ अयꣳसराꣳसि । धाऽ२१२३ । वता-
ऽ३४३इ ॥ सोऽ२३स्ता ॥ प्रवाऽ२ओऽ२३ । तओवा । दाऽ५इवोऽ६"हाइ ॥
श्रीः ॥ अयंविश्वानितिष्ठताऽ३ए ॥ पुनानोभुव । नोऽ२१२३ । परा-
२४३इ ॥ सोऽ२३माः ॥ देवाऽ२ओऽ२३ । नसोवा । राऽ५योऽ६"हाइ ॥

दी. ९. उन्. ५. मा. १५. नु. ॥५५३॥

२. ऐटतम् ॥ इटन्वा । गायत्री । पवमानस्सोमः ॥

अस्य । एआस्या ॥ प्रत्नाम । नूऽ३ । आऽ२नूऽ२३४औहोवा ।
घूऽ२३४ताम् ॥ शुक्रांदूऽ२३४दू ॥ हेआऽ३ । हेऽ२आऽ२३४औहोवा ।
हाऽ२३४याः ॥ पयास्साऽ२३४हा ॥ स्तसाऽ३ । स्ताऽ२साऽ२३४-
औहोवा ॥ आऽ२३४र्षीम् ॥श्रीः॥ अयम् । एआयाम् । सूयइ । वाऽ३ ।
आऽ२इवाऽ२३४औहोवा । पाऽ२३४दृक् ॥ अयाꣳसाऽ२३४रा ॥ सिया-
ऽ३ । साऽ२इयाऽ२३४औहोवा । वाऽ२३४ती ॥ सत्नाप्राऽ२३४वा ॥
तआऽ३ । ताऽ२आऽ२३४औहोवा ॥ दीऽ२३४वाम् ॥ श्रीः ॥ अयम् ।
एआयाम् ॥ विश्वानि । ताऽ३इ । नोऽ२इताऽ२३४औहोवा । ष्ठाऽ२३४ती ॥
पुनानोऽ२३४भू ॥ वनोऽ३ । वाऽ२नोऽ२३४औहोवा । पाऽ२३४री ॥



सोमोदाऽ२३४इवाः ॥ नसूऽ३ । नाऽ२सूऽ२३४औहोवा ॥ रीऽ२३४याः ॥

दी. २३. उन्. न. मा. ३३. रि. ॥५५४॥

३. धुरासाकमश्वम् ॥ साकमश्वः । गायत्री । पवमानस्सोमः ॥

अस्यप्रत्नाऽ३म् । हौऽ३होऽ३१इ ॥ अनुद्युताऽ३म् । हौऽ३हो-
ऽ३१इ ॥ शुक्रंदुदूऽ३ । हौऽ३होऽ३१ ॥ हेअह्रयाऽ३ः । हौऽ३हो-
ऽ३१इ ॥ पयस्सहाऽ३ । हौऽ३होऽ३१ ॥ स्नसामृषाऽ३इम् । हौऽ३हो-
ऽ३१२३४५इ ॥डा॥ श्रीः ॥ अयꣳसूर्याऽ३ः । हौऽ३होऽ३१इ ॥ इवोपदृ-
ऽ३क् । हौऽ३होऽ३१इ ॥ अयꣳसराऽ३ । हौऽ३होऽ३१ । सिधाव-
ताऽ३इ । हौऽ३होऽ३१इ ॥ सतप्रवाऽ३ । हौऽ३होऽ३१ ॥ तआदिवा-
ऽ३म् । हौऽ३होऽ३१२३४५इ ॥ डा ॥ श्रीः ॥ अयंविश्वाऽ३ । हौऽ३हो-
ऽ३१ ॥ नितिष्ठताऽ३इ । हौऽ३होऽ३१इ ॥ पुनानोभूऽ३ । हौऽ३-
होऽ३१ ॥ वनोपराऽ३इ । हौऽ३होऽ३१इ ॥ सोमोदेवाऽ३ः । हौऽ३-
होऽ३१ ॥ नसूरियाऽ३ः । हौऽ३होऽ३१२३४५इ ॥डा॥

दी. १३. उत्. न. मा. २६. रू. ॥५५५॥

४. विलम्बसौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

अस्यप्रत्नामनुद्युतम् । ईयइयाहाइ ॥ शुक्रंदुदुह्रेआ । हाऽ३हाऽ३ ।
हाऽ२३४याः ॥ पायाऽ२उवाऽ३ ॥ साऽ२हाऽ२३४औहोवा ॥ स्नसामृषा-
ऽ२३४५इम् ॥ श्रीः ॥ अयꣳसूर्यइवोपदृक् । ईयइयाहाइ ॥ अयꣳसराꣳ-
सिधा । हाऽ३हाऽ३इ । वाऽ२३४ताइ ॥ सत्प्राऽ२उवाऽ३ ॥ प्राऽ२वा-
ऽ२३४औहोवा ॥ तआदिवाऽ२३४५म् ॥ श्रीः ॥ अयंविश्वानितिष्ठति ।
ईयइयाहाइ ॥ पुनानोभुवनो । हाऽ३हाऽ३इ । पाऽ२३४राइ ॥ सोमो-
ऽ३उवाऽ३ ॥ दाऽ२इवाऽ२३४औहोवा ॥ नसूरियाऽ२३४५ः ॥

दी. २०. उन्. ३. मा. २७. बे. ॥५५६॥

५. [1]दैर्घश्रवसम् ॥ दीर्घश्रवाः । बृहती । पवमानस्सोमः ॥

अभिसोमासआयवओहाओहाऽ३ए ॥ पवन्तेमदियंमदम् । ओऽ३हा ।
ओऽ३हाऽ३एऽ३४ ॥ समूऽ३४द्रस्या ॥ धाइविष्ट । पेमानीषिणाः ।
ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ मत्साऽ३४रानाऽ३ः ॥ मदोऽ२३४वा ।
च्यूऽ५तोऽ६"हाइ ॥श्रीः॥ मत्सरासोमदच्युतओहाओहाऽ३ए ॥ मत्सरासोम-
दच्युतः । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ तराऽ३४त्सम् ॥ द्रांपव ।
मानाऊर्मिणा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ राजाऽ३४देवाऽ३ः ॥
ऋतोऽ२३४वा । बृऽ५होऽ६"हाइ ॥श्रीः॥ राजादेवऋतंबृहदोहाओहाऽ३ए ॥
राजादेवऋतंबृहत् । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ अर्पाऽ३४मित्रा ॥
स्यावरु । णस्याधर्मणा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ प्रहाऽ३४-
इन्वानाऽ३ः ॥ ऋतोऽ२३४वा । बृऽ५होऽ६"हाइ ॥

दी. ३१. उत् . ७. मा. ३०. खौ. ॥५५७॥

६. [2]द्विहिंकारं वामदेव्यम् ॥ वामदेवः । बृहती । पवमानस्सोमः ॥

प्रहिन्वाऽ२३नऋतंबृहात् ॥ प्राहिन्वानऋतंबृहन्नृभियेमाणोहर्य-
तोविचोहोऽ३ । हुम्माऽ२ । क्षाऽ२३णाः ॥ राजादेवास्समोहोऽ३ ।
हुम्माऽ२ ॥ द्रिया । ओऽ३होवा । होऽ५इ ॥डा॥

दी. ९. उ. २. मा. ५. धु. ॥५५८॥

७. [3]सन्तनि ॥ देवाः । बृहती । पवमानस्सोमः ॥

अभीहाउ ॥ सोमासआऽ३१उवाऽ२३ । याऽ२३४वाः । पवन्ते-
मदियम्मद॰समुद्रस्याधिविष्टपेमनीषिणाऽ२३४५ः ॥ मत्साहाउ ॥ रासो-
मदाऽ३१उवाऽ२३ ॥ च्यूऽ२३४ताः ॥ श्रीः ॥ मत्सरासोमदच्युतोमत्सरा-
सोमदच्युतस्तरत्समुद्रंपवमानऊर्मिणाऽ२३४५ ॥ राजाहाउ ॥ दाइवऋता-

[1] त्रिसप्ततितमसूक्ते गीयते ।

[2] त्रिसप्ततितमसूक्तस्य द्वितीयस्या अन्तिमे पादे द्विपदाविराजि च गीयते ।

[3] त्रिसप्ततितमसूक्ते गीयते ।



३२९. वसिष्ठो मैत्रावरुणिः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

१०२५. मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादन्न आ गहीह वा सन्नुप श्रुधि ॥१॥
१०२६. इमे हि ते ब्रह्मकृतस्सुते सचा मधौ न मक्ष आसते ।
इन्द्रे काममजरितारो वसूयवो रथे न पादमा दधुः ॥२॥

धा. १३. उ. ४. स्व. ४ डी. ॥६॥

३२९. मा । उ । सु । त्वा । वाघतः । च । न । आरे । अस्मत् । नि ।
रीरमन् । आरात्तात् । वा । सधमादम् । सध । मादम् । नः । आ । गहि ।
इह । वा । सन् । उप । श्रुधि ॥ इमे । हि । ते । ब्रह्मकृतः । ब्रह्म । कृतः । सुते ।
सचा । मधौ । न । मक्षः । आसते । इन्द्रे । कामम् । जरितारः । वसूयवः ।
रथे । न । पादम् । आ । दधुः ॥

ऽ३१उवाऽ२३ ॥ बृऽ२३४हात् ॥श्रीः॥ राजादेवऋतंबृहद्राजादेवऋतंबृहदर्पा-
मित्रस्यवरुणस्यधर्मणाऽ२३४५ ॥ प्रहाइहाउ ॥ न्वानऋताऽ३१उवा-
ऽ२३ ॥ बृऽ२३४हात् ॥

दी. २१. उ. १. मा. २१ क. ॥५५९॥

८. [1]पौरुहन्मनम् ॥ पुरुहन्मा । बृहती । पवमानस्सोमः ॥

प्रहिन्वाऽ३नऋतंबृहात् ॥ प्राहिन्वानः । ऋतांबृऽ१हाऽ२त् ।
बृहाऽ२त् । नृभियेमा । णो । हर्यतोऽ३ । (द्विः) । वाइचक्षाऽ२३४णाः ॥
राजादेवाः । समुद्राऽ२३४याः ॥ समूऽ५द्रियाः । होऽ५इ ॥डा॥

दी. ९. उ. १. मा. ११. प. ॥५६०॥

९. गायत्रपार्श्वम् ॥ देवाः । बृहती । पवमानस्सोमः ॥

मोषू ॥ त्वावाघताऽ३१उवाऽ२३ । चाऽ२३४ना । आरेअस्मनि-
रीरमन्नारात्ताद्वासधमादन्नआगहीऽ२३४५ ॥ इहावाऽ१साऽ२न् ॥ उपाऽ३ ।
हुमुश्रिऽ२३धाऽ३ ॥ श्रूधाऽ२३४५इ ॥ श्रीः ॥ आइहा ॥ वासन्नुपाऽ३१-

[1] त्रिसप्ततितमसूक्तस्य द्वितीयस्या अन्तिमे पादे द्विपदाविराजि च गीयते ।

३३०. आयुः काण्वः। बृहतीसतोबृहत्यौ। इन्द्रः॥

१०२७. अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥१॥
१०२८. समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम्।
सꣳ शुक्रासश्शुचयस्सं गवाशिरस्सोमा इन्द्रममन्दिषुः ॥२॥

धा. १३. उ. २. स्व. २. ठा. ॥७॥

---

३३०. अस्तावि। मन्म। पूर्व्यम्। ब्रह्म। इन्द्राय। वोचत। पूर्वीः। ऋतस्य। बृहतीः। अनूषत। स्तोतुः। मेधाः। असृक्षत॥ सम्। इन्द्रः। रायः। बृहतीः। अधूनुत। सम्। क्षोणी इति। सम्। उ। सूर्यम्। सम्। शुक्रासः। शुचयः। सम्। गवाशिरः। गो। आशिरः। सोमाः। इन्द्रम्। अमन्दिषुः॥

---

उवाऽ२३। अूऽ२३४वी। इहवासल्लुपश्रुधीमेहितेब्रह्मकृतस्सुतेसचाऽ२३४५॥ मघोनाऽ१माऽ२॥ क्षआऽ३। हुम्स्थिऽ२३वाऽ३॥ साताऽ२३४५इ॥ श्रीः॥ माघो॥ नामक्षआऽ३१उवाऽ२३। साऽ२३४ते। मघोनमक्षआसत-इन्द्रेकामञ्जरितारोवसूयवाऽ२३४५ः॥ रथाइनाऽ१पाऽ२॥ दमाऽ३। हुम्स्थिऽ२३वाऽ३॥ दाधृऽ२३४५ः॥ दी. २२. उ. ५. मा. १९. वो. ॥५६१॥

१०. सन्तनि॥ देवाः। ककुबुत्तराबृहती। इन्द्रः॥

अस्ताहाउ॥ वाइमन्मपूऽ३आउवाऽ२३। वीऽ२३४याम्। ब्रह्मेन्द्रायवोचतपूर्वीर्ऋतस्यबृहतीरनूषताऽ२३४५॥ स्तोतूहाउ॥ माइधा-असाऽ३१उवाऽ२३॥ क्षाऽ२३४ता॥ श्रीः॥ स्तोतुर्मेधाअसृक्षतसमिन्द्रो-रायोबृहतीरधूनुताऽ२३४५॥ सङ्क्षोहाउ॥ णाइसमुसूऽ३आउवाऽ२३॥ रीऽ२३४याम्॥ श्रीः॥ सङ्क्षोणीसमुसूर्यꣳसꣳशुक्रासश्शुचयस्संगवाशिरा-ऽ२३४५ः॥ सोमाहाउ॥ आइन्द्रममाऽ३१उवाऽ२३॥ दीऽ२३४षुः॥

दी. २३. उत्. १. मा. २०. टी. ॥५६२॥



११. [1]सुरूपाद्यम्॥ सुरूपः। गायत्री। पवमानस्सोमः॥

यस्तेमदाऽ२ः। इयाऽ२इया॥ वरेण्याऽ२ः। तेनापवाऽ२। इयाऽ२इया। स्वअन्धासाऽ२॥ देवावीराऽ२। इयाऽ२इया॥ घशꣳसा-ऽ२३हाऽ३४३॥श्रीः॥ जघ्निर्वृत्राऽ२म्। इयाऽ२इया॥ अमित्रायाऽ२म्। सस्निर्वाजाऽ२म्। इयाऽ२इया। दिवेदाइवाऽ२इ॥ गोषातिराऽ२। इयाऽ२इया॥ श्वसाआऽ२३साऽ३४३इ॥श्रीः॥ संमिश्लोआऽ२। इयाऽ२-इया॥ रुशोभूवाऽ२ः। सूपस्थाभाऽ२इ। इयाऽ२इया। नधेनूभाऽ२इः॥ सीदञ्छ्येनाऽ२ः। इयाऽ२इया॥ नयोनाऽ२३इसाऽ३४३। औ-ऽ२३४५इ॥डा॥ दी. २०. उत्. १८. मा. २७. पे. ॥५६३॥

१२. भासम्॥ अत्रिः। गायत्री। पवमानस्सोमः॥

यस्ते। माऽ३दो। वा। ईया॥ राइणाऽ१याऽ२ः। ताइनापव। स्व। औऽ३हो। वाहा। घसाऽ२॥ दाइवाऽ२३॥ वाऽ२इराऽ२३४-औहोवा॥ घशꣳसहाऽ१॥ श्रीः॥ जघ्निः। वाऽ३त्राम्। आ। ईया॥ माइत्राऽ१याऽ२म्। सास्निर्वाजम्। दि। वौऽ३हो। वाहाइ। दिवाऽ२इ॥ गोषाऽ२३॥ ताऽ२इराऽ२३४औहोवा॥ श्वसाअसाऽ१इ॥ श्रीः॥ संमि। श्लोऽ३आ। रु। ईया॥ शोभूऽ१वाऽ२ः। सूपस्थाभिः। न। धौऽ३हो। वाहाइ। नुआऽ२इः। सीदाऽ२३न्। श्याऽ२इनाऽ२३४औहोवा॥ नयोनिमाऽ१॥

दी. २०. उत्. न. मा २६. पू. ॥५६४॥

१३. वासिष्ठमासितम्॥ असितः। गायत्री। पवमानस्सोमः॥

यस्तेमदोवरे। इयाऽ३४३ईऽ३४या॥ णियास्तेनापवस्वऔऽ२। होऽ२। हुवाऽ२इ। धासाऽ२॥ देवाऽ३हाइ। वीराऽ३हो॥ घशꣳसा-ऽ२३हाऽ३४३॥ श्रीः॥ जघ्निर्वृत्रममि। इयाऽ३४३ईऽ३४या॥ त्रियाꣳ-

---

[1] षष्टितमसूक्ते त्रीणि सामानि गीयन्ते।

सस्निर्वाजन्दिवौऽ२ । हौऽ२ । हुवाऽ२इ । दाइवाऽ२इ ॥ गोपाऽ३होइ । तिराऽ३हो ॥ श्वमाश्राऽ२३साऽ३४३इ ॥ श्रीः ॥ संमिश्लोअरुषः । इया-ऽ३४३ईऽ३४या ॥ सुवास्सूपस्थाभिर्नवौऽ२ । हौऽ२ । हुवाऽ२इ । नूभाऽ२इः ॥ सांदाऽ३न्होइ । श्येनाऽ३हो ॥ नयोनाऽ२३इमाऽ३४३ । ओऽ२३४५इ ॥डा॥ दी. १६. उत्. ३. मा. २०. गौ. ॥५६५॥

१४. [1]वाचस्साम ॥ वाक् । ककुप् । पवमानस्सोमः ॥

अभिब्रह्माप् । होइ । बृहद्यशाऽ६ए ॥ आइपस्पते । दाइदीऽ१-हाइदेऽ२ । वादेवयुम् ॥ वाइक्रोऽ१शास्माऽ२३ ॥ ध्याऽ२३माऽ३म् । यूऽ३४५वोऽ६"हाइ ॥ श्रीः ॥ विकोशंमा । हो । ध्यमंयुवाऽ६ए ॥ आवच्यस्व । सुदक्षाचाऽ२ । मूवोस्सुतः ॥ वाइशाऽ१म्वाह्याऽ२३इः ॥ नाऽ२३वाऽ३इ । श्पाऽ३४५लोऽ६"हाइ ॥ श्रीः ॥ विश्वांवह्नीः । होइ । नविश्पताऽ६ए ॥ वार्षिन्दिवः । पावस्वारीऽ२ । ताइमपः ॥ जाइन्वाऽ१-न्नावाऽ२३इ ॥ धाऽ२३याऽ३ । धाऽ३४५योऽ६"हाइ ॥ दी. ५. उत्. न. मा. २६. यू. ॥५६६॥

१५. [2]शौक्तम् ॥ शुक्तिः । उष्णिक् । पवमानस्सोमः ॥

सखा । यआओऽ२३४वा ॥ निपाइ । दाताओऽ२३४वा । पुनानायप्रगाऽ२यताऽ२३४९ ॥ शाइशाओऽ२३४वा ॥ नयन्ङ्क्षपरिभू-ऽ२३४५ । वाताओऽ२३४वा ॥ श्रियेऽ१ ॥ श्रीः ॥ समी । वत्साओ-ऽ२३४वा ॥ नमा । तुभाओऽ२३४वा । सुजातागयसाधनाऽ२३४५म् ॥ दाइवाओऽ२३४वा ॥ वियंमदमभाऽ१इ । हाइशाओऽ२३४वा ॥ वसाऽ१म् ॥ श्रीः ॥ पुना । तादाओऽ२३४वा ॥ दक्षा । धानाओऽ२३४वा । यथाग्रवीयवीतयाऽ२३४५इ ॥ याथाओऽ२३४वा ॥ मित्रायवरुणाऽ२३४५ । याशाओऽ२३४वा ॥ तयाऽ१इ ॥ दी. १३. उत्. ६. मा. २२. डा. ॥५६७॥

[1] द्वाविंशत्युत्तरशततमसूक्ते गीयते । [2] एकपञ्चयुत्तरशततमसूक्ते गीयते ।



३३१. अम्बरीषो वार्षगिरः, ऋजिश्वा भारद्वाजश्च । अनुष्टुप् । पवमानस्सोमः ॥

१०२९. इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥१॥

१०३०. तꣳसखायꣳपुरूरुचं वयं यूयञ्च सूरयः ।
अश्याम वाजगन्ध्यꣳसनेम वाजपस्त्यम् ॥२॥

१०३१. परित्यꣳहर्यतꣳहरिं (बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति) ॥३॥

धा. १६. उ. न. स्व. २ हा. ॥८॥

३३१. इन्द्राय । सोम । पातवे । वृत्रघ्ने । वृत्र । घ्ने । परि । सिच्यसे । नरे । च । दक्षिणावते । वीराय । सदनासदे । सदन । सदे ॥ तम् । सखायः । स । खायः । पुरुरुचम् । पुरु । रुचम् । वयम् । यूयम् । च । सूरयः । अश्याम । वाजगन्ध्यम् । वाज । गन्ध्यम् । सनेम । वाजपस्त्यम् । वाज । पस्त्यम् ॥ परि । त्यम् । हर्यतम् । हरिम् । बभ्रुम् । पुनन्ति । वारेण । यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥

१६. आसिताद्यम् ॥ असितः । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्रायसोमपा ॥ तवाइ । वृत्रघ्नेपरिषिच्याऽ२३साइ । नारेऽ२-चादाऽ२ । क्षिणावताइ ॥ वाइराऽ२यासाऽ२ ॥ दनोवाऽ३ओऽ२३४वा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ तꣳसखायꣳपुरू ॥ रुचाम् । वयंयूयञ्चसूरा-ऽ२३याः । आश्याऽ२माबाऽ२ । जगंधियाम् ॥ सानेऽ२माबाऽ२ ॥ जपोवाऽ३ओऽ२३४वा । स्त्याऽ५योऽ६"हाइ ॥ श्रीः ॥ परित्यꣳहर्यताम् ॥ हरादम् । बभ्रुंपुनन्तिवारेऽ२३णा । योदेऽ२वान्वाऽ२इ । श्वाꣳइत्पराइ ॥ मादेऽ२नासाऽ२ ॥ हगोवाऽ३ओऽ२३४वा । छाऽ५तोऽ६"हाइ ॥ दी. ६. उत्. ३. मा. १६. नो. ॥५६८॥

१७. ऐडं कौत्सम् ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्राहीयाऽ२३ । सोमपातवईया ॥ वृत्रघ्नेपरिषिच्यसे । नारेचद । क्षिणावाऽ२३ताइ ॥ वाइराऽ३हा । यासाऽ३हा ॥ दनासाऽ२३दाऽ३४३इ ॥ श्रीः ॥ त॰सहीखाऽ२३ । य॰पुरुरुचमीया । वयंयूयञ्चसूरयः । आश्यामवा । जगन्धाऽ२३याम् ॥ सानाऽ३हाइ । मावाऽ३हा ॥ जपस्ता२३याऽ३४३म् ॥ श्रीः ॥ परीहित्याऽ२३म् । इयंत॰हरमीया । बभ्रुंपुनन्तिवारेण । योदेवान्वि ॥ श्वा॰इत्पाऽ२३राइ ॥ मादाऽ३हाइ । नामाऽ३हा ॥ इगच्छाऽ२३ताऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. २१. उत्. ९. मा. १४. घी. ॥५६९॥

१८. पदनिधनशुद्धाशुद्धीयम् ॥ इन्द्रः । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्रायसोमपातवाइ ॥ वृत्रघ्नेपरिषिच्याऽ२३साइ । नरेचदक्षिणावाऽ२३ताइ ॥ वीरायाऽ२३साऽ३ ॥ दाऽ२ । नासाऽ३४ओहोवा ॥ दाऽ२३४५इ ॥ श्रीः ॥ त॰सखाय॰पुरुरुचाम् ॥ वयंयूयञ्चसूराऽ२३याः । अश्यामवाजगन्धाऽ२३याम् ॥ सनेमाऽ२३वाऽ३ ॥ जाऽ२ । पस्ताऽ३४ओहोवा ॥ याऽ२३४५म् ॥ श्रीः ॥ परित्य॰हर्यत॰हराइम् ॥ बभ्रुंपुनन्तिवारेऽ२३णा । योदेवान्विश्वा॰इत्पाऽ२३राइ ॥ मदेनाऽ२३साऽ३ ॥ हाऽ२ । गच्छाऽ३४ओहोवा ॥ ताऽ२३४५इ ॥ दी. २८. उ. ३. मा. १६. हृ. ॥५७०॥

१९. कौञ्चायम् ॥ कुञ्च् । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्रायसौहो । सापातवाइ ॥ वृत्रघ्नेपाऽ३ । राइषाऽ३इच्याऽ५साऽ६५६इ ॥ नरेचदौहो । क्षीणावताइ ॥ वीरायसाऽ३ । दानाऽ३साऽ५दाऽ६५६इ ॥ श्रीः ॥ त॰सखायौहो । पूरूरुचाम् ॥ वयंयूयाऽ३म् । चाहूऽ३राऽ५याऽ६५६ः ॥ अश्यामवौहो । जागन्धियाम् ॥ सनेमवाऽ३ । जापाऽ३स्ताऽ५याऽ६५६म् ॥ श्रीः ॥ परित्य॰हौहो । यंत॰हराइम् ॥



बभ्रुंपुनाऽ३ । ताइवाऽ३रेऽ५णाऽ६५६ ॥ योदेवान्वौहो । श्वा॰इत्पराइ ॥ मदेनसाऽ३ । हागाऽ३च्छाऽ५ताऽ६५६इ ॥

दी. २८. उ. १२. मा. १७. टे. ॥५७१॥

२०. रयिष्ठम् ॥ इन्द्रः । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्रायसो ॥ मपाताऽ३वाइ । औऽ३होऽ३वा । वृत्रघ्नेपरिषिच्यसाऽ२३४५इ ॥ वृत्रघ्नेपा ॥ रिषाइच्याऽ३साइ । औऽ३होऽ३वा । नरेचदक्षिणावताऽ२३४५इ ॥ नरेचदा ॥ क्षिणावाऽ३ताइ । औऽ३होऽ३वा । वीरायसदनासदाऽ२३४५इ ॥ वीरायसा । दनासाऽ३दाइ । औऽ३होऽ३वा ॥ श्रीः ॥ त॰सखायाः ॥ पुरूरूऽ३चाम् । औऽ३होऽ३वा । वयंयूयञ्चसूरयाऽ२३४५ः ॥ वयंयूयाम् । चसूराऽ३याः । औऽ३होऽ३वा । अश्यामवाजगन्धियाऽ२३४५म् ॥ अश्यामवा ॥ जगान्धाऽ३याम् । औऽ३होऽ३वा । सनेमवाजपस्तियाऽ२३४५म् ॥ सनेमवा ॥ जपास्ताऽ३याम् । औऽ३होऽ३वा ॥ श्रीः ॥ परित्य॰हा ॥ यंता॰हाऽ३राइम् ॥ औऽ३होऽ३वा । बभ्रुंपुनन्तिवारेणाऽ२३४५ ॥ बभ्रुंपुना ॥ तिवारेऽ३णा । औऽ३होऽ३वा । योदेवान्विश्वा॰इत्पराऽ२३४५इ ॥ योदेवान्वाइ ॥ श्वा॰आइत्पाऽ३राइ । औऽ३होऽ३वा । मदेनसहगच्छताऽ२३४५इ ॥ मदेनसा । हगाच्छाऽ३ताइ । औऽ३होऽ३वा । ( हिः ) । ईऽ३या । ईऽ३याऽ३४ । हा । हाउवाऽ३ ॥ ऊऽ३२३४पा ॥

दी. ३३. उत्. १६. मा. २८. टै. ॥५७२॥

द्वितीयो विंशः ॥

२१. यज्ञायज्ञीये ॥ अग्निर्वैश्वानरः । अनुष्टुप् । पवमानस्सोमः ॥

इन्द्राऽ५य । औऽ३माऽ३पातवाइ ॥ वात्रिघ्नेपा । रीऽ३षाइच्याऽ३साइ । नरेऽ२च । दक्षाऽ२३इणा । वृत्रघ्नेपाइ ॥ वाऽ३२ताइ ॥ वाइऽ३साइ । रायसदनाऽ२सदाउ ॥ श्रीः ॥ दाइताम् ॥ सखाय॰पुरूरुचंवयंयूयाम् ।

चाऽ३सूराऽ३याः । अश्याऽ२म । वाजाऽ२३गा । हुम्माइ ॥ धाऽ३२याम् ।
सानेमवाजपाऽ२स्तियाउ ॥ श्रीः ॥ यांपा । स्त्रियऽहर्यतऽहरिंवभ्रुंपुना ।
तोऽ३वारेऽ३णा । योदेऽ२वान् । विश्वाऽ२३आ । हुम्माइ ॥ पाऽ३२राइ ॥
मादेनसहगाऽ२च्छताउ ॥ दी. १२. उत्. न. मा. २०. यौ. ॥५७३॥

चतुर्दशः प्रपाठकः ॥

१. अग्निर्वैश्वानरः । जगती । पवमानस्सोमः ॥

पवाऽ५इत्रम् । ताऽ३इवाऽ३इततंत्रा ॥ ह्माणस्पतेप्रभुर्गात्राणि-
परियाइ । पीऽ३वाइश्वाऽ३ताः । अताऽ२प्ततन्नूर्नतदामोअश्नु । तेशाऽ२३र्ता ।
हुम्माइ ॥ साऽ३२ईत् ॥ वाहन्तस्सन्तदाऽ२शताउ ॥ श्रीः ॥ ताता ॥
पोष्पवित्रंविततंदिवस्पदेर्चन्तोअस्यतन्तवो । वाऽ३यास्थाऽ३इरान् । अवाऽ२-
न्त्यस्यपवितारमाश । वीदाऽ२३इवाः । हुम्माइ ॥ पाऽ३२ष्ठाम् ॥
आधिरोहन्तिताऽ२इजसाउ ॥ श्रीः ॥ साऽऽ ॥ रूरुचदुषसःपृश्निरग्रियउक्षा-
मिमेतिभुवनाइ । पूऽ३वाजाऽ३यूः । मायाऽ२विनोममिरेअस्यमाय । याना-
ऽ२३र्चा । हुम्माइ ॥ क्षाऽ३२साः ॥ पाइतरोगर्भमाऽ२दधाउ ॥
वाऽ३४५ ॥ दी. २३. उत्. न. मा. ३०. री. ॥५७४॥

२. [2]विशोविशीयम् ॥ अग्निः । अनुष्टुप् । अग्निः ॥

विशोविशोहुम्स्थिवोऽ३अतिथाइम् ॥ वाजयन्ताः । पूऽ३रुप्रीऽ३-
याम् । अग्निवोऽ२ । दूराऽ२३याम् । हुम्माइ । वाऽ३चाऽ३ः ।
स्तूऽ२३४पेहाइ ॥ ओ । हुवाइ । शूऽ२३४षा ॥ हुम्मा । स्याऽ३माऽ३ ।
न्माऽ२३४माइ । एहियाऽ६हा ॥श्रीः॥ स्तुषेशूषहुम्स्थिस्याऽ३मन्मभाइः ॥
यज्ञनासो । हाऽ३वाइम्माऽ३न्ताः । मित्राऽ२न्न । सर्पाऽ२३इरा । हुम्माइ ।
सूऽ३ताऽ३इम् । प्राऽ२३४शहाइ ॥ ओ । हुवाइ । साऽ२३४न्ती ॥

[1] अशीतितमसूक्ते गीयते । [2] पञ्चाशीत्युत्तरद्विशततमसूक्ते गीयते ।



हुम्माइ । प्राऽ३शाऽ३ । स्ताऽ२३४इमाइ । एहियाऽ६हा ॥ श्रीः ॥
प्रशऽसन्तिहुम्स्थिप्राऽ३शस्तिभाइः ॥ पन्याऽमञ्जा । ताऽ३वाइदाऽ३नाम् ।
योदेऽ२व । ताताऽ२३ऊ । हुम्माइ । याऽ३ताऽ३ । हाऽ२३४व्यहाइ ॥
ओ । हुवाइ । नाऽ२३४आ ॥ हुम्माइ । राऽ३याऽ३त् । दाऽ२३४इवाइ ।
एहियाऽ६हा । होऽ५इ ॥डा॥ दी. १६. उत्. १. मा. ४१. क. ॥५७५॥

३. [1]सुरूपोत्तरम् ॥ सुरूपः । गायत्री । पवमानस्सोमः ॥

उच्चातेजौहोऽ२ । इया ॥ तमन्धासाऽ२ः । दिविसद्भौहोऽ२ ।
इया । मियादादाऽ२इ ॥ उग्रऽशर्मौहोऽ२ । इया ॥ महिश्राऽ२३वा-
ऽ३४३ः ॥श्रीः॥ सनइन्द्रौहोऽ२ । इया ॥ ययज्यावाऽ२इ । वरुणायौहोऽ२ ।
इया । मरुद्भ्यायाऽ२ः॥ वरिवोवौहोऽ२ । इया ॥ परिस्राऽ२३वाऽ३४३॥श्रीः॥
एनाविश्वौहोऽ२ । इया ॥ निअर्याआऽ२ । धुम्नानिमौहोऽ२ । इया ।
नुषाणाऽ२म् ॥ सिषासन्तौहोऽ२ । इया ॥ वनामाऽ२३हाऽ३४३इ ।
ओऽ२३४५इ ॥डा॥ दी. १०. उत्. १८. मा. १२. च. ॥५७६॥

४. अदारसृत् ॥ भरद्वाजः । गायत्री । पवमानस्सोमः ॥

हाउच्चातेजा ॥ तमाऽ२न्धासाऽ२ः । दिविसद्भूमियाऽ२दादाऽ२इ ॥
उग्राऽ२ऽशार्माऽ२ ॥ महि । श्राऽ२वाऽ२३४औहोवा ॥ श्रीः ॥
हाउसनइन्द्रा ॥ ययाऽ२ज्यावाऽ२इ । वरुणायमरूऽ२द्भ्यायाऽ२ः ॥ वराऽ२-
इवोवोऽ२त् ॥ परि । स्राऽ२वाऽ२३४औहोवा ॥ श्रीः ॥ हावेनाविश्वा ॥
निआऽ२र्याआऽ२ । धुम्नानिमानूऽ२षाणाऽ२म् ॥ सिषाऽ२सान्ताऽ२ः ॥
वना । माऽ२हाऽ२३४औहोवा ॥ अस्मभ्यंगातुवित्तमाऽ२३४५म् ॥
दी. १९. उत्. १०. मा. १७. ने. ॥५७७॥

५. इडानांसंक्षारः ॥ इडा । गायत्री । पवमानस्सोमः ॥

औहोइहुवाऽ३होइ । उच्चातेजाऽ३ताऽ३मन्धसः ॥ दिविसद्भूऽ२-

[1] अष्टमे सूक्ते त्रीणि सामानि गीयन्ते ।

मीऽ३याददाइ ॥ उग्राऽशाऽ२३४र्मा ॥ महिश्रवः । इडाऽ२३ ॥ श्रीः ॥ गनइन्द्राऽ३याऽ३यज्यवाइ ॥ वरुणायाऽ३माऽ३रुद्भ्रियः ॥ वराइवोऽ२३४-वीन् ॥ परिस्रव । इडाऽ२३ ॥ श्रीः ॥ एनाविश्वाऽ३नीऽ३अर्यआ ॥ द्युम्नानिमाऽ३नूऽ३पाणाम् ॥ औहोइहुवाऽ३होइ । सिपासाऽ२३४न्ताः ॥ वनामहे । इडाऽ२३भाऽ३ । एहीडा । होऽ५इ ॥डा॥

दी. १६. उन्. ३. मा. १७. गे. ॥५७८॥

६–७. [1]पृश्निनी ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

पराइ ताऽ२३पिञ्चतासुतऽहाउ ॥ सोमोयउत्तमऽहविः । दधान्व-ऽ१याऽ२३ः । होवाऽ३हाइ । नारियोअ । प्सुवान्ताऽ१राऽ२३ । होवाऽ३हाइ ॥ सुपावाऽ१सोऽ२३ । होवाऽ३हा ॥ मामद्रिभिः । इडाऽ२३ ॥ श्रीः ॥ सुपावाऽ२३सोममद्रिभिहोउ ॥ सुपावसोममद्रिभिः । नूनांपूऽ१नाऽ२३ । होवाऽ३हाइ ॥ नोअविभिः । पराइस्राऽ१वाऽ२३ । होवाऽ३हाइ ॥ अदाब्धाऽ१स्सूऽ२३ । होवाऽ३हा ॥ रभिन्तरः । इडाऽ२३ ॥ श्रीः ॥ अदाब्धाऽ२३स्सुरभिन्तरोहाउ ॥ अदब्धस्सुरभिन्तरः । सुताइचाऽ१इत्वाऽ२३ । होवाऽ३हाइ । अप्सुमदा । मोआन्धाऽ१साऽ२३ । होवाऽ३हाइ ॥ श्रीणान्तोऽ१गोऽ२३ । होवाऽ३हाइ ॥ भाइरुत्तरम् । इडाऽ२३ ॥

दी. १३. उत् . ७. मा. २७. ठे. ॥५७९॥

[2]श्रीणान्तोऽ२३गोभिरुत्तरऽहाउ ॥ श्रीणन्तोगोभिरुत्तरम् । परा-इस्राऽ१नाऽ२३ः । होवाऽ३हाइ । चाक्षसेदे । वसादाऽ१नाऽ२३ः । होवाऽ३हाइ ॥ क्रतूराऽ१इन्दूऽ२३ः । होवाऽ३हाइ ॥ वाइचक्षणः । इहाऽ२३भाऽ३४३ । ओऽ२३४५इ॥डा॥ दी.७. उत्. ३. मा.१३. जि. ॥५८०॥

[1] अष्टनवत्युत्तरशततमसूक्ते गीयते ।

[2] अष्टनवत्युत्तरशततमसूक्तस्य द्वितीयस्याश्चतुर्थपादे द्विपदाविराजि च गीयते ।



८. [1]हाविष्मतम् ॥ हविष्मान् । गायत्री । पवमानस्सोमः ॥

हाउपरिस्वानोगिरिष्ठाहाउ ॥ पवित्रेसोऽ३ । मोअक्षाऽ२३४रान् ॥ श्रीः ॥ हाउतुवंविप्रस्तुवंकविर्हाउ ॥ मधुप्रजाऽ३ । तामन्धाऽ२३४साः ॥ श्रीः ॥ हाउतुवेविश्वेसजोषसोहाउ ॥ देवास ऽपीऽ३ । ताइमाशाऽ२३४ता । ऐऽ२होऽ१आऽ२३इहो ॥ मदाइषूऽ३सा ॥ वेधाः । आऽ२साऽ२३४ओहोवा ॥ हविष्मतेऽ२३४५ ॥

दी. १६. उत् . ५. मा. १५. कु. ॥५८१॥

९. शाम्मदम् ॥ शम्मत् ॥ गायत्री । पवमानस्सोमः ॥

परिसुवानऍ । हौऍहीऽ२३४या ॥ गिरिष्ठाऍऽ२हीऍऽ२हाऽ३या । पवित्रेसोमोअक्षरदेऽ२हीऍऽ२हीऽ३या ॥ श्रीः ॥ तुवंविप्रस्तुऍ । हौऍही-ऽ२३४या ॥ वंकविरेऽ२हीऍऽ२हीऽ३या ॥ मधुप्रजातमन्धसऍऽ२हीऍऽ२-हीऽ३या ॥ श्रीः ॥ तुवेविश्वेसऍ । हौऍहीऽ२३४या ॥ जोषसऍऽ२हीऍऽ२-हीऽ३या ॥ देवास ऽपीतिमाशतऍऽ२हीऍऽ२हीऽ३या ॥ मादाइषूसाऽ३१२३ ॥ वेधोऽ२३४वा । आऽ५सोऽ६हाइ । दी. १५. उत् . १. मा. १९. पो. ॥५८२॥

१०. दावसुनिधनम् ॥ दावसुः । गायत्री । पवमानस्सोमः ॥

परिसुवाऽ२३नोगिरिष्ठाहाउ ॥ पवित्रेसो । मोआक्षाऽ१राऽ२३त् । होवाऽ३हाइ ॥श्रीः॥ तुवंवाऽ२३इप्रस्तुवंकविर्हाउ ॥ माधुप्रजा । तमान्धा-ऽ१साऽ२३ः । होवाऽ३हाइ ॥ श्रीः ॥ तुवेवाऽ३इश्वेसजोषसोहाउ । दाइवा-स ऽपी । तिमाशाऽ१ताऽ२३ । होवाऽ३हाइ ॥ मदाइषूऽ१साऽ२३ । होवाऽ३हा ॥ वेधाः । आऽ२साऽ२३४ओहोवा ॥ एऽ३ । दावसूऽ२३४५ ॥

दी. १६. उत् . ८. मा. १५. गु. ॥५८३॥

११. प्रतीचीनेडं काशीतम् ॥ काशीतः । गायत्री । पवमानस्सोमः ॥

परिसुवानः । गाऽ२इरिष्ठाः ॥ पवित्रेसो । मोआक्षराऽ२३४त् । हाहोइ ॥ श्रीः ॥ तुवंविप्रस्तु । वाऽ२इकवाइः ॥ माधुप्रजा । तमान्धसा-

[1] एकचत्वारिंशदुत्तरशततमसूक्ते पञ्च सामानि गीयन्ते ।

२३४: । हाहोइ ॥ श्रीः ॥ तुवेविश्वेस । जोऽ२पसाः ॥ दाइवास ५पी । तिमाशताऽ२३४ । हाहोइ ॥ मदेषुसार्वाऽ३धाः ॥ असा । औऽ३- होवा ॥ ईडा ॥

दी. १३. उत्. ४. मा. १४. ही. ॥५८४॥

१२. हाविष्कृतम् । हविष्कृत् । गायत्री । पवमानस्सोमः ॥

परिसुवानोगाहाउराइष्टाः ॥ पवित्रेसो । मोश्राक्षाऽ२३रान् ॥श्रीः॥ तुवंविप्रस्तुवऽहाउकावाइः ॥ मधुप्रजा । तमन्धाऽ२३साः ॥ श्रीः ॥ तुवे- विश्वेसजोहाउपासाः ॥ देवास ५पाइ । तिमाशाऽ२३ता ॥ मदाऽ२होऽ१इ । पूऽ२३सा ॥ येधाः । आऽ२साऽ२३४औहोवा ॥ हविष्कृतेऽ२३४५ ॥

दी. १७. उत्. ८. मा. १५. जु ॥५८५॥

१३. [1]यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । अनुष्टुप् । पवमानस्सोमः ॥

अयाऽ५म्पू । पाऽ३राऽ३यिर्भागाः ॥ सोम ५पुना । नोऽ३- अर्पाऽ३ताइ । पताऽ२इर्वि । श्वस्याऽ२३भू । हुम्माइ ॥ माऽ३२नाः ॥ वायरव्यद्रोदसीऽ२उभाउ ॥ श्रीः ॥ भाइसाम् ॥ उप्रियाअनूषतगावोमदा । याऽ३धार्प्वाऽ३याः । सोमाऽ२सः । कृण्वाऽ२३ता । हुम्माइ ॥ पाऽ३२- थाः ॥ पावमानासआऽ२इन्दवाउ ॥ श्रीः ॥ वायाः ॥ ओजिष्ठस्तमा- भरपवमाना । श्राऽ३वाआऽ३याम् । य ५पाऽ२ञ्च । चर्षाऽ२३णा । हुम्माइ ॥ आऽ३२भाइ ॥ रायिंयेनवनाऽ२महाउ ॥ वाऽ३४५ ॥

दी. १३. उत्. न. मा. २४. री. ॥५८६॥

१४. यद्वाहिष्ठीयोत्तरम् ॥ अग्निः । अनुष्टुप् । पवमानस्सोमः ॥

अयंपूषारयिर्भगः । अयंपूषोवा ॥ रयिर्भगाः । सोम ५पूऽ२३ना । नोअर्षताइ । पतिर्वाऽ२३इश्वा । स्यभूमनाः ॥ वियख्याऽ२३द्रो ॥ दसीउऽ२३भाऽ३४३इ ॥श्रीः॥ समुप्रियाअनूषत । समुप्रियोवा । अनूषता । गावोमाऽ२३दा । यधृष्वयाः । सोमासाऽ२३ ५का । ण्वतेपथाः । पवमा-

[1] एकर्षाष्टतमसूक्ते द्वे सामनी गीयेते ।



ऽ२३ना ॥ मइन्दाऽ२३वाऽ३४३: ॥ श्रीः ॥ यओजिष्ठस्तमाभर । यओ- जिष्ठोवा ॥ तमाभरा । पवमाऽ२३ना । श्रवायियाम् । य ५पश्चाऽ२३चा । पञ्चा- रभाइ ॥ रयिंयाऽ२३इना ॥ वनामाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. २२. उत्. १६. मा. २०. चौ. ॥५८७॥

१५. [1]यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । जगती । पवमानस्सोमः ॥

धर्ताऽ५दि । वाऽ३ ५पाऽ३वतेका ॥ त्वोयोरसोदक्षोदेवानामनुमा । दीऽ३योनृऽ३भाइः । हराऽ२इस्सृजानोअत्योनसत्व । भिर्वाऽ२३र्षा । हुम्माइ॥ पाऽ३२जा ॥ साइकृणुपेनदाऽ२इपुवाउ ॥ श्रीः ॥ आशू ॥ रैनपत्न- आयुधागभस्त्योस्वस्सिपासन्रथिरो । गाऽ३वाइष्टाऽ३इषू । इन्द्राऽ२स्य- शुष्ममीरयन्नपस्यु । भिगऽ२३इन्दूः । हुम्माइ ॥ हाऽ३२इन्वा ॥ नोअज्य- तेमनाऽ२इपिभाउ ॥ श्रीः ॥ माइराइ ॥ द्रस्यसोमपवमानऊर्मिणातविष्य- माणोजठराइ । पूऽ३आवाऽ३इशा । प्रनाऽ२ ५पिन्वविद्युदभ्रेवरोद । सोवा- ऽ२३या । हुम्माइ ॥ नोऽ३२वा ॥ ज ५उपमाहिशाऽ२चताउ ॥ वाऽ३४५ ॥

दी. २८. उत्. न. मा. २७. रे. ॥५८८॥

१६. [2]आकूपारम् ॥ अकूपारः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसुन्वाऽ२३नाय । अन्धाऽ२३४साः ॥ मर्तोऽ२नवा । ष्टतद्वचाः । अपश्वानाऽ२म् । अराधसाम् ॥ हतामाखाऽ२३म् ॥ नाऽ२३भूऽ३ । गाऽ३४५वोऽ६हाइ ॥ श्रीः ॥ आजामाऽ२३इरत्के । अव्याऽ२३४वा ॥ भुजाऽ२इनपूत् । त्रओषियोः । सरजारोऽ२ । नयोषणाम् ॥ वरोनायो- ऽ२३ ॥ नाऽ२३इमाऽ३ । साऽ३४५दोऽ६हाइ ॥श्रीः॥ सवीरोऽ२३दक्ष । साधाऽ२३४नाः ॥ वियाऽ२स्तस्था । भरादसाइ । हरि ५पावाऽ२इ । त्रेअव्यता ॥ वेधानायोऽ२३ ॥ नाऽ२३इमाऽ३ । साऽ३४५दोऽ६हाइ ॥

दी. १५. उत्. १५. मा. २०. मौ. ॥५८९॥

[1] अष्टसप्ततमसूक्ते त्रयोदशमसूक्ते गीयते । [2] सप्तोत्तरशततमसूक्ते गीयते ।

३३२. वसिष्ठो मैत्रावरुणिः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

१०३२. कस्तमिन्द्र त्वावस ( वा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाज७सिषासति) ॥१॥

१०३३. मघोनस्स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥२॥

धा. १७. उ. न. स्व ३. वि ॥९॥

द्वितीयः खण्डः ॥

---

३३२. कः । तम् । इन्द्र । त्वावसो । त्वा । वसो । आ । मर्त्यः । दधर्षति । श्रद्धा । श्रत् । धा । हि । ते । मघवन् । पार्ये । दिवि । वाजी । वाजम् । सिषासति ॥ मघोनः । स्म । वृत्रहत्येषु । वृत्र । हत्येषु । चोदय । ये । ददति । प्रिया । वसु । तव । प्रणीती । प्र । नीती । हर्यश्व । हरि । अश्व । सूरिभिः । विश्वा । तरेम । दुरिता । दुः । इता ॥

---

१७. [1]क्रौञ्चायम् ॥ क्रुञ्च् । अनुष्टुप् । पवमानस्सोमः ॥

अयंपूषौहो । रयिर्भगाः ॥ सोम८पुनाऽ३ । नोआऽ३षोऽ५ता-ऽ६५६इ ॥ पतिर्विश्वौहो । स्याभूमनाः । वियख्यद्रोऽ३ । दासीऽ३-ऊऽ५"भाऽ६५६इ ॥ श्रीः ॥ समुप्रियौहो । आनूषता ॥ गावोमदाऽ३ । याघाऽ३ष्वाऽ५याऽ६५६ः ॥ सोमास८क्रौहो । ण्वातेपथाः ॥ पवमानाऽ३ । साआऽ३इन्दाऽ५"वाऽ६५६ः॥श्रीः॥यओजिष्ठौहो । तामाभरा ॥ पवमानाऽ३ । श्रावाऽ३आऽ५याऽ६५६स् ॥ य८पञ्चचौहो । पाणीरभाइ ॥ रयियेनाऽ३ । वानाऽ३माऽ५"हाऽ६५६इ ॥ दी. २७. उन् . १२. मा. १६. फृ. ५६०॥

१८. महावामदेव्यम ॥ वामदेवः । बृहती । इन्द्रः ॥

काऽ५स्तम् । इन्द्राऽ३तूऽ३वावसाउ ॥ आ । मर्त्योदधर्षतिश्रद्धा-हितेमघवन्पार्येदि । वा । औऽ३होहाइ । वाजाऽ२३इवाजाम् ॥ सिषोहोऽ३ ।

---

[1] एकषष्टितमसूक्ते गीयते ।



हुम्माऽ२ । साऽ२तोऽ३५"हाइ ॥श्रीः॥ वाऽ५जी । वाजाऽ३७साऽ३इषा-सताइ ॥ वा । जीवाज७सिषासतिमघोनस्मवृत्रहत्येषुचोद । या । औऽ३-होहाइ । येदाऽ२३दताइ ॥ प्रियोहोऽ३ । हुम्माऽ२ ॥ वाऽ२सोऽ३५"-हाइ ॥श्रीः॥ येऽ५द । दताऽ३इप्रीऽ३यावसाउ ॥ ये । ददतिप्रियावसुन-वप्रणीतीहर्यश्वसूरि । भाइः । औऽ२३होहाइ । विश्वाऽ२३तराइ ॥ मदो-होऽ३ । ~~हुम्माऽ२ ॥ आऽ२इवोऽ३५"हाइ ॥~~

दी. २६. उन् . न. मा. १६. हो. ॥५६१॥

१९. सैन्धुक्षितम् ॥ सिन्धुक्षिन् । गायत्री । पवमानस्सोमः ॥

तिस्रोवाचो । हाइ ॥ उदीराऽ२३ताइ । गावोमिमन्तिधाऽ१-इनाऽ३वाः ॥ हरिरेतोऽ२३४हाइ ॥ कानाऽ३इहाइ । क्रदात् । औ-ऽ२३होवा ॥ श्रीः ॥ अभिब्रह्मो । हाइ ॥ अनूषाऽ२३ता । यह्वीऋतस्यमा-ऽ१ताऽ३राः ॥ मर्जयन्तोऽ२३४हाइ ॥ दिवाऽ३इहाइ । शिशुम् । औ-ऽ२३होवा ॥श्रीः॥ रायस्समो । हाइ ॥ द्रा७थतूऽ२३गाः । अस्मभ्य७सोम-वाऽ१इश्वाऽ३ताः ॥ आपवस्वोऽ२३४हाइ । साहाऽ३हा । सिणा । औऽ३होवा । होऽ५इ ॥डा॥ दी. १२. उ. ७ मा. २०. खौ. ॥५६२॥

तृतीयो विंशः ॥

पञ्चदशस्यार्द्धप्रपाठकः ॥

१. [2]स्वारं त्वाष्ट्रीसाम ॥ त्वाष्ट्रथः । अनुष्टुप् । पवमानस्सोमः ॥

सुतासोमाऽ३हा । धुमत्तामाऽ२ः ॥ सोमाइन्द्राऽ३हा । यमन्दा-इनाऽ२ः ॥ पवित्रवाऽ३हा । तोअक्षाराऽ२न् ॥ देवान्गच्छाऽ३हा । तुवो-ऽ३होऽ२३४ । वा । माऽ५दोऽ६"हाइ ॥श्रीः॥ इन्दुरिन्द्राऽ३हा । यपवा-ताऽ२इ ॥ इतिदेवाऽ३हा । सोमख्याऽ२न् ॥ वाचस्पताऽ३इहोइ ।

---

[1] अष्टसप्ततितमसूक्ते गीयते । [2] एकोनाशीतितमसूक्ते द्वे सामनी गीयेते ।

मखस्याताऽ२इ ॥ विश्वस्येशाऽ३हा । नश्नोऽ३होऽ२३४ । वा । जाऽ५-
सोऽ६"हाइ ॥ श्रीः ॥ सहस्रधाऽ३हा । र॰पवाताऽ२इ ॥ समुद्रोवाऽ३हा ।
चमीह्लायाऽ२ः ॥ सोमस्पताऽ३इहाइ । रयाइणाऽ२म् ॥ सखेन्द्रस्याऽ३हाइ ।
दिवाऽ३होऽ२३४ । वा । दाऽ५इवोऽ६"हाइ ॥

दी. १५. उ. १. मा. २४. पी. ॥५९३॥

२. द्विरभ्यासं त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । पवमानस्सोमः ॥

सुता । सोमाऽ३ । हाऽ३हा । धुमत्तामाऽ२३४ः ॥ सोमाः ।
इन्द्राऽ३ । हाऽ३हा । यमन्दाइनाऽ२३४ः ॥ पवि । त्रवाऽ३ । हाऽ३हा ।
तोअक्षाराऽ२३४न् ॥ देवान् । गच्छाऽ३ । हाऽ३हा । तुवोऽ३होऽ२३४ ।
वा । माऽ५दोऽ६"हाइ ॥श्रीः॥ इन्दुः । इन्द्राऽ३ । हाऽ३हा । यपवाता-
ऽ२३४इ ॥ इति । देवाऽ३ । हाऽ३हा । सोअन्नूवाऽ२३४न् ॥ वाचः ।
पताऽ३इः । हाऽ३हाइ । मखस्याताऽ२३४इ ॥ विश्व । स्येशाऽ३ । हा-
ऽ३हा । नश्नोऽ३होऽ२३४ । वा । जाऽ५सोऽ६"हाइ ॥ श्रीः ॥ सह ।
स्रधाऽ३ । हाऽ३हा । र॰पवाताऽ२३४इ ॥ समु । द्रोवाऽ३ । हाऽ३हा ।
चमीह्लायाऽ२३४ः ॥ सोमः । पताऽ३इ । हाऽ३हाइ । रयाइणाऽ२३४म् ।
सखे । द्रस्याऽ३ । हाऽ३हाइ । दिवाऽ३होऽ२३४ । वा । दाऽ५इवो-
ऽ६"हाइ ॥

दी. १५. उ. १. मा. २९. पो. ॥५९४॥

३. [1]पृश्नि ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

पुनानाऽ२३स्सोमधारयाहाउ ॥ अपोवसानोअर्षसि । आरत्नाऽ१-
धाऽ२३ः । होवाऽ३हाइ । योनिमृत । स्यसाइदाऽ१साऽ२३इ । होवा-
ऽ३हाइ ॥ उत्सोदाऽ१इवाऽ२३ः । होवाऽ३हाइ ॥ हाइरण्ययः । इडाऽ२३ ॥
श्रीः ॥ उत्सोदाऽ२३इवोहिरण्ययोहाउ ॥ उत्सोदेवोहिरण्ययः । दुहाना-

[1] नवमे सूक्ते द्वे सामनी गीयेते ।



ऽ१ऊऽ२३ । होवाऽ३हाइ । धार्दिवियम् । मधुप्राऽ१याऽ२३म् । होवा-
ऽ३हाइ ॥ प्रत्नाऽसाऽ१धाऽ२३ । होवाऽ३हा ॥ स्थामासदन् । इडाऽ२३ ॥
श्रीः ॥ प्रत्नाऽसाऽ२३धस्थमासदह्राउ ॥ प्रत्नऽसधस्थमासदत् । आपाच्छो-
ऽ१याऽ२३म् । होवाऽ३हाइ ॥ धारुणंवा । जियापोऽ१नाऽ२३इ । होवा-
ऽ३हाइ ॥ नृभाइर्धौऽ१ताऽ२३ः । होवाऽ३हाइ ॥ वाइचक्षणः । इडाऽ२३-
भाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. १८. उ. ८. मा. ३३. डि. ॥५९५॥

४. आभीशवोत्तरम् ॥ अभीशुः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारयाए । ए ॥ अपोवसाऽ३नोअर्षसाइ ॥ आ-
ऽ२३४रा । हाऽ३हा ॥ त्नधायोनिमृतस्यासीऽ१दसाइ ॥ ऊऽ२३४त्साः ।
हाऽ३हाइ ॥ दाइवोहिरोऽ२३४वा ॥ ण्याऽ५योऽ६"हाइ ॥ श्रीः ॥ उत्सो-
देवोहिरण्ययए । ए ॥ उत्सोदेवोऽ३हाइरण्ययाः ॥ दूऽ२३४हा । हाऽ३हा ॥
नऊधर्दिवियंमाधुप्रायम् ॥ प्राऽ२३४त्नाम् । हाऽ३हाइ ॥ साधस्थमो-
ऽ२३४वा । साऽ५दोऽ६"हाइ ॥ श्रीः ॥ प्रत्नऽसधस्थमासदे । ए ॥
प्रत्नऽसधऽ३स्थामाऽ१सदात् ॥ आऽ२३४पा । हाऽ३हा ॥ च्छ्यंधरुणं-
वाजायर्षसाइ ॥ नृऽ२३४भीः । हाऽ३हाइ ॥ धौतोविचोऽ२३४वा ।
क्षाऽ५णोऽ६"हाइ ॥

दी. १९. उ. न. मा. २१. क. ॥५९६॥

५. [1]वासिष्ठम् ॥ वसिष्ठः । त्रिष्टुप् । इन्द्रः ॥

औहोवाहाऽ३होइ । इहा । अयऽसोमाः । इन्द्रतु । भ्यऽसुन्वाइ ॥
तुभ्यंपवा । ताऽ३इतुवम् । अस्यपाही ॥ तुवऽह्याम् । चकृषे । त्वंव-
वृषाइ ॥ इन्दुम्मदा । याऽ३युजि । याऽ३४२ । याऽ३सोऽ५मा-
ऽ६५६म् ॥ श्रीः ॥ सइऽरथो । नभुरि । षाडयोजी ॥ मह॰पुरू ।
णीऽ३सात । याइवधनी ॥ आदींविश्वा । नहुषि । याणिजाता ॥ सुवर्षाता ।

[1] विपञ्चाधावुत्तरद्वितवदष्टमसूक्ते गीयते ।

३३३. विश्वमना वैयश्वः। उष्णिक्। इन्द्रः॥

१०३४. एदु मधोर्मदिन्तर॰सिञ्चाध्वर्यो अन्धसः।
एवा हि वीर स्तवते सदावृधः॥१॥

१०३५. इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम्।
उदानꣳश शवसा न भन्दना॥२॥

१०३६. तं वो वाजानां पतिमहूमहि श्रवस्यवः।
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम्॥३॥

धा. १६. उ. १. स्व. १. क.॥१०॥

---

३३३. आ। इत्। उ। मधोः। मदिन्तरम्। सिञ्च। अध्वर्यो। अन्धसः। एव। हि। वीरः। स्तवते। सदावृधः। सदा। वृधः॥ इन्द्र। स्थातः। हरीणाम्। न। किः। ते। पूर्व्यस्तुतिम्। पूर्व्य। स्तुतिम्। उत्। आनꣳश। शवसा। न। भन्दना। तम्। वः। वाजानाम्। पतिम्। अहूमहि। श्रवस्यवः। अप्रायुभिः। अ। प्रायुभिः। यज्ञेभिः। वावृधेन्यम्॥

---

वनऊ। ध्याऽ३४३। नाऽ३वाऽ५"न्ताऽ६५६॥ श्रीः॥ शुष्मीशर्द्धो। नमारु। तंपवस्वा॥ अनभिशा। स्ताऽ३दिवि। यायथावीद्॥ आपोनमा। नूऽ३सुम। तिर्भवानाः॥ ओहोवाहाऽ३होइ। इहा। सहस्राप्साः। पृतना। षाऽ३४३द्। नाऽ३याऽ५"ज्ञाऽ६५६ः॥ दी. २०. उ. १९. मा. १७. भे.॥५९७॥

६. महावामदेव्यम्॥ वामदेवः। उष्णिक्। इन्द्रः॥

एऽ५दु। मधोऽ३मोऽ३दिन्तराम्॥ साइ। चाध्वर्योअन्धस-। एवाहि। वा। औऽ३होहाइ। रस्ताऽ२३वताइ॥ सदोहोऽ३। हुम्माऽ२॥ वाऽ२धोऽ३५"हाइ॥ श्रीः॥ आऽ५इन्द्र। स्थाताऽ३हाऽ३रीणाम्॥ ना। किष्टेपूर्व्यस्तुतिमुदा। ना। औऽ३होहाइ। शशाऽ२३वसा॥ नभोहोऽ३। हुम्माऽ२॥ दाऽ२नोऽ३५"हाइ॥श्रीः॥ ताऽ५म्वः। वाजाऽ३नाऽ३म्पता-



इम्॥ आ। हूमहिश्रवस्यवोप्रायु। भाइः। औऽ२३होहाइ। यज्ञाऽ२३-इभिर्वा॥ वृधोहोऽ३। हुम्माऽ२॥ न्याऽ२मोऽ३५"हाइ॥

दी. १९. उ. न. मा. १९. लो.॥५९८॥

७. [1]गौपूक्तम्॥ गौपूक्तिः। गायत्री। पवमानस्सोमः॥

परिस्रुवानोगो। होहोवाहाइ। रिष्ठाः॥ पवित्रेसोमओऽ२। हुवाइ। हुवाऽ२इ। क्षाराऽ२न॥ श्रीः॥ तुवंविप्रस्तुवो। होहोवाहाइ। कवाइः॥ मधुप्रजातमोऽ२। हुवाइ। हुवाऽ२इ। धासाऽ२ः॥ तुवेविश्वे-सजो। होहोवाहाइ। षसः॥ देवासꣴपीतिमोऽ२। हुवाइ। हुवाऽ२इ। ञाताऽ२॥ मदेषुसर्वधोऽ२। हुवाइ। हुवाऽ२इ॥ आसाऽ२३इ। होऽ२वाऽ२३४औहोवा॥ अग्निराहुताऽ२३४५ः॥

दी. २०. उ. ४. मा. २१. भ.॥५९९॥

८. [2]वारवन्तीयम्॥ इन्द्रः। उष्णिक्। पवमानस्सोमः॥

प्राणाशिशाओहोहाइ॥ माहाऽ२३४इनाम्। हिन्वानाऽ२३४हा। तस्यदीधितिंविश्वापाऽ३४। औहोवा। इहाऽ२३४हाइ। उहुवाऽ२३४गाइ॥ प्रियाशु। वादघद्राऽ३४। औहोवा॥ इहाऽ२३४हाइ। औहोऽ३१२३४। ता। एहियाऽ६हा॥ ॥श्रीः॥ उपत्रिताओहोहाइ॥ स्यापापाऽ२३४योः। अभक्ताऽ२३४हा। यद्गुहापदंयज्ञस्याऽ३४। औहोवा। इहाऽ२३४हाइ। उहुवाऽ२३४सा॥ सधाम। भाइरथप्राऽ३४। औहोवा॥ इहाऽ२३४हाइ। औहोऽ३१२३४। याम्। एहियाऽ६हा॥ श्रीः॥ त्रीणित्रिताओहोहाइ॥ स्याधाराऽ२३४या। पृष्ठाइषूऽ२३४हाइ। ऐरयद्रयिंमिमीताऽ३४। औहोवा। इहाऽ२३४हाइ। उहुवाऽ२३४आ॥ स्यपोज। नाविशुकाऽ३४। औहोवा॥ इहाऽ२३४हाइ। औहोऽ३१२३४। तुः। एहियाऽ६हा। होऽ५इ॥डा॥

दी. ३५. उ. ९. मा. २३. भि.॥६००॥

---

[1] एकवचनादिवदुत्तरवत्तमनुक्ते मीयते। [2] मध्योविनाशुत्तरवत्तमनुक्ते मीयते।

९. [1]सत्रासाहीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

पवाऽ३४ । स्वदक्षसाधनः । ओऽ६वा ॥ देवेभ्य२पीतयेहाऽ२राइ । माऽ२रू । द्भ्योऽ२३वा ॥ यशोऽ३हो । वाहाऽ३४३इ ॥ माऽ२३४दोऽ६"हाइ ॥श्रीः॥ सन्देऽ३४ । वेश्शोभतेवृपा । ओऽ६वा ॥ कवियोंनाविश्राऽ२याः । पाऽ२वा । माऽ२३नाः ॥ अदोऽ३हो । वाहाऽ३४३इ ॥ भाऽ२३४योऽ६"हाइ ॥ श्रीः ॥ पवाऽ३४ । मानधियाहितः । ओऽ६वा ॥ अभियोनिंकनिक्राऽ२दात् । धाऽ२र्मा । णाऽ२३वा ॥ युम्नोऽ३हो । वाहाऽ३४३इ ॥ रूऽ२३४होऽ६"हाइ ॥ दी. २०. उ. न. मा. १२. वा. ॥६०१॥

१०. [2]बृहद्भारद्वाजम् ॥ भरद्वाजः । गायत्री । पवमानस्सोमः ॥

परिप्रिया ॥ दिव२कवाइः । वया७साऽ२३इना । सियोर्हिताः ॥ स्वानैर्याऽ२३ताइ । आ । औऽ३होवा । काविक्रतुः । इडाऽ२३ ॥ श्रीः ॥ ससूनुर्मा ॥ तराशुचाइः । जातोजाऽ२३ते । अरोचयात् ॥ महान्माऽ२३ही । आ । औऽ३होवा ॥ आर्ताब्रिध । इडाऽ२३ ॥श्रीः॥ प्रप्रक्षया ॥ यपन्यसाइ । जनायाऽ२३जू । ष्टोअद्रुहाः ॥ वीतियाऽ२३र्षा । आ । औऽ३होवा ॥ पानिष्टये । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. १८. उ. ६. मा. १३. टि. ॥६०२॥

११. [3]क्रोशम् ॥ इन्द्रः । उष्णिक् । पवमानस्सोमः ॥

सोमाः ॥ पुनानऊर्मि । णा । होईऽ२ । हो । वाहोइ । अव्यंवारंविधावताइ । अग्राइवाऽ१चाऽ२३ः ॥ पाऽ३वामाऽ३नाः ॥ कनाऽ२३इक्रदाऽ३४३त् ॥ श्रीः ॥ धीभीः ॥ मृजन्तिवाजि । नम् । होईऽ२ । हो । वाहोइ । वनेक्रीडन्तमत्यवाइम् । अभाइत्राऽ१इपाऽ२३ ॥ ष्ठाऽ३म्माताऽ३याः ॥ समाऽ२३स्वराऽ३४३न् ॥श्रीः॥ अमा ॥ जिकलशा७अ । भि । होईऽ२ । हो । वाहोइ । मीद्वान्त्सप्तिर्नवाजयुः । पुनानोऽ१वाऽ२३चाऽ३ज्ञानाऽ३यान् ॥ असाऽ२३इष्यदाऽ३४३त् । ओऽ२३४५इ ॥डा॥

दी. १७. उ. ६. मा. २८. डौ. ॥६०[illegible]॥

१२. [1]वाभ्रम् ॥ बभ्रुः । बृहती । पवमानस्सोमः ॥

परीतोषिञ्चता । हाऽ३हाऽ३इ । सुऽ२३४ । त७सुतोना सोमोहोऽ२इ । यऊहोऽ२ । ताम७हावाऽ२इः । दाधन्वा७यः । नरा योआ । प्सुवाउवाऽ३ । ऊऽ३४पा । तगऽ२ ॥ सूपाऽ२वामोऽ२ मम । द्राऽ२इभाऽ२३४औहोवा ॥ श्रीः ॥ सुपावसोममा । हाऽ३हाऽ३इ द्राऽ२३४इ । भिद्रिभोवा ॥ सुपाहोऽ२इ । दसाहोऽ२ । मामद्राइभाऽ२इः नूनंपुना । नोआवाइभाइः । पराउवाऽ३ । ऊऽ३४पा । सवाऽ२ ॥ आदाऽ२ व्धास्सूऽ२ । रभि ॥ ताऽ२राऽ२३४औहोवा ॥ श्रीः ॥ अदब्धस्सुराभि हाऽ३हाऽ३इ । ताऽ२३४ । स्सरोवा ॥ अदाहोऽ२इ । ब्धस्सुहोऽ२ राभिन्ताराऽ२ः । सुतेचित्वा । प्सुमादा । मआउवाऽ३ । ऊऽ३४पा घसाऽ२ ॥ श्राइणाऽ२न्तोगोऽ२ ॥ भिरु । ताऽ२राऽ२३४औहोवा ऊऽ३२३४पा ॥ दी. १८. उ. ६. मा. ३०. टी. ॥६०[illegible]॥

१३. मानवोत्तरम् ॥ मनुः । बृहती । पवमानस्सोमः ॥

होवाइ । परीतोषिञ्चतासुतम् । होवाइ ॥ सोमोयउत्तम७हविः दाधन्वा७यः । नारियोआऽ३१ । प्सुनाऽ२न्ताऽ२३४रा ॥ सुपावाऽ२३ सोऽ३ ॥ माऽ२माऽ२३४औहोवा ॥ द्राऽ२३४इभीः ॥ श्रीः ॥ होवाइ सुपावसोममद्रिभिः । होवाइ ॥ सुपावसोममद्रिभिः । नूनंपुना । नोआविभाऽ३१इः । पराऽ२इवाऽ२३४वा ॥ अदाब्धाऽ२३स्सुऽ३ ॥ राऽ२भाऽ२३४औहोवा ॥ ताऽ२३४राः ॥श्रीः॥ होवाइ । अदब्धस्सुरभिन्तरः ।

[1] त्रिनवतितमसूक्ते गीयते ।

[2] एकोनशततमसूक्ते गीयते ।

[3] एकोत्तरशततमसूक्ते गीयते ।

[1] अष्टनवत्युत्तरशततमसूक्ते त्रीणि सामानि गीयन्ते ।

होवाइ ॥ आदब्धस्सुरभिन्तरः । सुतेचित्वा । आप्सुमदाऽ३१ । मोआ-
ऽरन्धाऽ२३४सा ॥ श्रीणान्तोऽ२३गोऽ३ ॥ भाऽ२इरूऽ२३४औहोवा ॥
ताऽ२३४रीम् ॥ दी. २१. उ. ४. मा. २८. चै. ॥६०५॥

१४. आनूपं वाभ्रव्यम् ॥ आनूपः । बृहती । पवमानस्सोमः ॥

पराइपराइ ॥ तोपिञ्चऽ३ताद्धूऽ१ताऽ२म् । सोमोयउ । तमाऽ२हा-
ऽ१वाऽ२इः । दाधाऽ२न्वऽ२याऽ२ः । नर्योअप्सुवन्ताऽ२३रा ॥ सुपानाऽ३-
सोऽ३ ॥ माऽ२३माऽ३ । द्राऽ३४५इभोऽ६"हाइ ॥ श्रीः ॥ सुपासुपा ॥
वसोमऽ३माद्राऽ१इभाऽ२इः । सुपावसो । ममाद्राऽ१इभाऽ२इः । नूनाऽ२-
म्पूनाऽ२ । नोअनिभि ४परिस्राऽ२३वा ॥ अदाब्धाऽ३स्सूऽ३ ॥ राऽ२३-
भाऽ३इ । ताऽ३४५रोऽ६"हाइ ॥ श्रीः ॥ अदाअदा ॥ ब्धस्सुरऽ३भाइन्ता-
ऽ१राऽ२ः । आदब्धस्सु । रभाइन्ताऽ१राऽ२ः । सुतेऽ२चाइत्वाऽ२ । अप्सु-
मदामोअन्धाऽ२३सा ॥ श्रीणान्तोऽ३गोऽ३ ॥ भाऽ२३इरूऽ३ । ताऽ३४५-
रोऽ६"हाइ ॥ दी. १०. उ. ३. मा. २८. चै. ॥६०६॥

१५. [1]अग्नेस्त्रिणिधनम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

श्रीणन्तोगो ॥ भाइरुत्ताऽ२३४राम् । श्रीणन्तोगोभिरुऽ३ओउवा-
ऽ२३ । ताऽ२३४राम् ॥ पारिस्त्राऽ२३४नाः ॥ चक्षसेदेवमाऽ३१उवाऽ२३ ।
दाऽ२३४नाः ॥ क्रतूराऽ२३४इन्दूः ॥ विचाऽ३१उवाऽ२३ । क्षाऽ२३४णाः ॥
दी. ७. उ. २. मा. १२. छा. ॥६०७॥

१६. [2]श्यावाश्वम् ॥ श्यावाश्वः । अनुष्टुप् । पवमानस्सोमः ॥

सोमाऽ३१ः । पाऽ३व । तइ । दाऽ३वः । एहिया ॥ आ ।
स्मभ्यङ्गातू । वि । तमाऽ२ः । एहियाऽ२ । मित्रास्वानाओऽ३रेऽ३ ॥
पाऽ२३४साः ॥ एहाऽ२इ । एहियाऽ२ । सुवाधियास्सूऽ३वाऽ३ः ।

[1] अष्टनवत्युत्तरशततमसूक्तस्य द्वितीयस्यास्तुर्थपादे द्विपदाविराजि च गीयते ।
[2] अष्टाचत्वारिंशदुत्तरशततमसूक्ते त्रीणि सामानि गीयन्ते ।



वाऽ३४५इदोऽ६"हाइ ॥ श्रीः ॥ तेपूऽ३१ । ताऽ३मो । विपः । चाऽ३इनः
एहिया ॥ मो । मासोदधाइ । आ । शिराऽ२ः । एहियाऽ२ । घ्नामोना
दाऽ३शोऽ३ ॥ ताऽ२३४साः ॥ एहाऽ२इ । एहियाऽ२ । जिगन्वोधूऽ३
वाऽ३ः । धाऽ३४५तोऽ६"हाइ ॥ श्रीः ॥ सुष्वाऽ३१ । णाऽ३मो । विय
द्राऽ३इभिः । एहिया ॥ चाइ । तानागोरा । धि । त्वचाऽ२इ । एहियाऽ२
इपमस्माभ्याऽ३माऽ३ ॥ भाऽ२३४इताः ॥ एहाऽ२इ । एहियाऽ२
ममस्वरान्वाऽ३सूऽ३ । वाऽ३४५इदोऽ६"हाइ ॥
दी. २४ उ. ६. मा. २८. चै. ॥६०

१७. आन्धीगवम् ॥ अन्धीगुः । अनुष्टुप् । पवमानस्सोमः ॥

सोमा ४पवन्तआऽ१इन्दावाः ॥ अस्मभ्यम् । गातूऽ२३वा
हुम्माऽ२१२ । तमामित्रास्वानाअरेपसाऽ२३४५ः ॥ सुवाऽ३उवा
धीऽ२याः । सूऽ२३वाः । विदा । औऽ३होवा ॥ श्रीः ॥ तेपूतासोविप
ऽ१श्चाइताः ॥ सोमासः । दधाऽ२३आ । हुम्माऽ२१२ । श्रिरस्स्वर्णा
दर्शतासाऽ२३४५ः ॥ जाइगाऽ३उवा ॥ वाऽ२वो । धूऽ२३वाः । धूता
औऽ३होवा ॥ श्रीः ॥ सुष्वाणासोवियाऽ१द्राइभाइः ॥ चितानाः । गोन
ऽ२३धा । हुम्माऽ२१२ । त्वचीपमस्मभ्यमभिताऽ२३४५ः ॥ सोमाऽ३
उवा ॥ स्वाऽ२रान् । वाऽ२३सू । विदा । औऽ३होवा । होऽ५इ ॥ डा ॥
दी. २५. उ. ६. मा. २५. पु. ॥६०

१८. निवेष्टः ॥ अङ्गिरसः । अनुष्टुप् । पवमानस्सोमः ॥

सोमा ४पवन्ताऽ३इन्दवाः ॥ अस्माभ्यङ्गा । तुविमाऽ२ः
इहाऽ२ ॥ माइत्राऽ३स्वानाः । हाहोऽ२३४हा ॥ अरेपाऽ२३साः । इहाऽ२
सुवाऽ३धीयाः । हाहोऽ२३४हा ॥ सुवाऽ३र्षोऽ५इदाऽ६५६ः ॥ श्रीः
तेपूतासोवाऽ३इपश्चिताः ॥ सोमासोदा । धिपाशिराऽ२ः । इहाऽ२

सूराऽ३सोना । हाहोऽ२३४हा ॥ दर्शताऽ२३साः । इहाऽ३ । जाइगा-
ऽ३वावाः । हाहोऽ२३४हा ॥ ध्रुवाऽ३घाऽ५र्ताऽ६५६इ ॥श्रीः॥ सुष्वाणा-
सोवाऽ३यद्रिभाइः ॥ चितानागोः । अधित्वचाऽ२इ । इहाऽ३ ॥ आइपा-
ऽ३मास्मा । हाहोऽ२३४हा ॥ श्यमसाऽ२३इताः । इहाऽ३ ॥ सामाऽ३-
स्वारान् । हाहोऽ२३४हा ॥ वस्तूऽ३वाऽ५इदाऽ६५६ः ॥ हेऽ२३४५ ॥

दी. १४. उ. ९. मा. २६. धू. ॥६१०॥

१९. [1]श्यावाश्वम् ॥ श्यावाश्वः । अनुष्टुप् । पवमानस्सोमः ॥

पवाऽ३१ । स्वाऽ३वा । जसा । ताऽ३ये । एहिया ॥ पा ।
वित्रेधारा । या । सुताऽ२ः । एहियाऽ२ । इन्द्रायसोमाऽ३वाऽ३इ ॥
ष्णाऽ२३४वाइ ॥ ऐहाऽ२इ । एहियाऽ२ । देवेभ्योमाधूऽ३माऽ३ । ता-
ऽ३४५रोऽ६"हाइ ॥ श्रीः ॥ तुवाऽ३१म् । राऽ३इह । तिघी । ताऽ३यः ।
एहिया ॥ हा । रिंपवित्रे । अ । द्रुहाऽ२ः । एहियाऽ२ । वत्सञ्जातान्ना-
ऽ३माऽ३ ॥ ताऽ२३४राः ॥ ऐहाऽ२इ । एहियाऽ२ । पवमानावाऽ३-
इघाऽ३ । माऽ३४५णोऽ६"हाइ ॥ श्रीः ॥ तुवाऽ३१म् । द्याऽ३ञ्च । महि ।
व्राऽ३त । एहिया ॥ पा । थिवीञ्चाताइ । ज । भ्रिषाऽ२इ । एहियाऽ२ ।
प्रतिद्रापाइमाऽ३मूऽ३ ॥ च्चाऽ२३४थाः ॥ ऐहाऽ२इ । एहियाऽ२ ।
पवमानामाऽ३हाऽ३इ । त्वाऽ३४५नोऽ६"हाइ ॥

दी. २६. उ. ९ मा. २१. घ. ॥६११॥

२०. आन्धीगवम् ॥ अन्धीगुः । अनुष्टुप् । पवमानस्सोमः ॥

पवस्ववाजसाऽ१तायाइ ॥ पवित्रे । धाराऽ२३या । हुम्माऽ२१२ ।
सुतइन्द्रायसोमविष्णवाऽ२३४५इ ॥ दाइवाऽ३उवा ॥ भ्योऽ२मा । धूऽ२३-
मा । तरा । औऽ३होवा ॥ श्रीः ॥ त्वाꣳरिहन्तिधाऽ१इतायाः ॥ हरिंप ।
वित्रेऽ२३आ । हुम्माऽ२१२ । द्रुहोवत्सञ्जातन्नमातराऽ२३४५ः ॥ पावा-

[1] चतुर्विंशत्युत्तरशततमसूक्ते त्रीणि सामानि गीयन्ते ।



ऽ३उवा ॥ माऽ२ना । वाऽ२३इघा । मणा । औऽ३होवा ॥ श्रीः ॥
त्वन्द्याञ्चमहाऽ१इव्राना ॥ पृथिवीम् । चाताऽ२३इजा । हुम्माऽ२१२ ।
भ्रिषेप्रतिद्रापिममुञ्चथाऽ२३४५ः ॥ पावाऽ३उवा ॥ माऽ२ना । माऽ२३-
हाइ । त्वना । औऽ३होवा । होऽ५इ ॥डा॥ दी.१४. उ. ६. मा. १८. चै. ॥६१२॥

चतुर्थो विꣳशः ॥

२१. आकूपारम् ॥ अकूपारः । अनुष्टुप् । पवमानस्सोमः ॥

पवस्वाऽ२३वाज । साताऽ२३४याइ ॥ पवाऽ२इत्रेधा । रयासुताः ।
इन्द्रायासोऽ२ । मविष्णवाइ ॥ देवेभ्योमाऽ२३ ॥ धूऽ२३माऽ३ । ना-
३४५रोऽ६"हाइ ॥ श्रीः ॥ तुवाꣳराऽ२३इहन्ति । धाताऽ२३४याः ॥
हराऽ२इम्पवाइ । त्रेअद्रुहाः । वत्सञ्जाताऽ२म् । नमातराः ॥ पवमानाऽ२३ ।
वाऽ२३इघाऽ३ । माऽ३४५णोऽ६"हाइ ॥ श्रीः ॥ तुवंद्याऽ२३ञ्च । हिमा-
ऽ२३४ता ॥ पृथाऽ२इवीञ्चा । तिजभ्रिषाइ । प्रतिद्रापाऽ२इम् । अमुञ्चथाः ॥
पवमानाऽ२३ ॥ माऽ२३हाऽ३इ । त्वाऽ३४५नोऽ६"हाइ ॥

दी. १२. उ. १५. मा. २२. पा. ॥६१३॥

पञ्चदशः प्रपाठकः ॥

१. [1]कौत्सायम ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

सोमाꣳपवोहो । ताइन्दवाः ॥ अस्मभ्यङ्गाऽ३ । तुवाऽ३इचाऽ५-
माऽ६५६ः ॥ मित्रास्वानोहो । आरेपसाः । सुवाधियाऽ३ः । सुवाऽ३र्वा-
ऽ५इ"दाऽ६५६ः ॥ श्रीः ॥ तेपूतासोहो । वीपश्चिताः ॥ सोमासोदाऽ२ ।
धाआऽ३वाऽ५इराऽ६५६ः ॥ सूरासोनोहो । दर्शतासाः ॥ जिगवनोऽ३ ।
ध्रुवाऽ३घाऽ५"ताऽ६५६इ ॥ श्रीः ॥ सुष्वाणासोहो । वीयद्रिभाइः ॥ चिता-
नागोऽ३ः । आघाऽ३इत्वाऽ५चाऽ६५६इ ॥ इपमस्मोहो । श्यामभिताः ॥
समस्वराऽ३न् । वाइऽ३वाऽ५इ"दाऽ६५६ः ॥दी. ३१. उ. १२. मा. २३. खि. ॥६१४॥

[1] अष्टाचत्वारिंशदुत्तरशततमसूक्ते गीयते ।

२. [1]ऊर्ध्वेडं त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । पवमानस्सोमः ॥

सुतासोमधुमत्तमाः ॥ सोमाऽ२इन्द्राऽ२ । यमाऽ३४५ । दीऽ२३४-
नाः । पवित्रवन्तोअक्षराऽ२३४५न् ॥ देवान्गच्छा ॥ तुवोमाऽ२३दा-
ऽ३४३: ॥श्रीः॥इन्दुरिन्द्रायपवताइ ॥ आइताऽ२इदेवाऽ२ । सोआऽ३४५ ।
वूऽ२३४वान् । वाचस्पतिर्मखस्यताऽ२३४५इ ॥ विश्वस्येशा ॥ नओजा-
ऽ२३साऽ३४३: ॥ श्रीः ॥ सहस्रधार ँ पवताइ ॥ सामूऽ२द्रोवाऽ२ ।
चमाऽ३४५इ ॥ खाऽ२३४याः । सोमस्पतीरयीणाऽ१म् ॥ सखेन्द्रस्या ॥
दिवेदाऽ२३इवाऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. १९. उ. ७. मा. २१. थ. ॥६१५॥

३. [2]पदनिधनशुद्धाशुद्धीयम् ॥ इन्द्रः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअन्धसाः ॥ सुतायमादयित्नाऽ२३वाइ । अपश्वान-
ञ्श्नथिष्टाऽ२३ना ॥ सखायोऽ२३दीऽ३ ॥ घाऽ२ । जिह्वाऽ३४ओहोवा ॥
याऽ२३४५म् ॥ श्रीः ॥ सखायोदीर्घजिह्वियाम् ॥ योधारयापावकाऽ२३या ।
परिप्रस्यन्दतेसूऽ२३ताः ॥ इन्दुराऽ२३श्वाऽ३ः ॥ नाऽ२ । कृत्वाऽ३४ओहोवा ॥
याऽ२३४५: ॥श्रीः॥ इन्दुरश्वोनकृत्वियाः ॥ तन्दुरोपमर्भानाऽ२३राः । सोमं-
विश्वाचियाधाऽ२३या ॥ यज्ञायाऽ२३साऽ३ ॥ तूऽ२ । अद्राऽ३४ओहोवा ॥
याऽ२३४५: ॥

दी. २८. उ. ४. मा. १४. डी. ॥६१६॥

४. [3]सैन्धुक्षितम् ॥ सिन्धुक्षित् । गायत्री । पवमानस्सोमः ॥

असाव्यंशो । हाइ ॥ मदाऽ२३या । अप्सुदक्षोगाऽ१इराऽ२-
इष्ठाः ॥ श्येनोनयोऽ२३४हाइ ॥ नाइसाऽ३हाइ । सदात् । औऽ२३होवा ॥
श्रीः ॥ शुभ्रमन्धो । हाइ ॥ देववाऽ२३ताम् । अप्सुधौतन्नृभाऽ१इस्सु-
ऽ३ताम् ॥ स्वदन्तिगोऽ२३४हाइ ॥ वा ँ पाऽ३हाइ । योगाइः । श्री-

[1] एकोनाशीतितमसूक्ते गीयते ।
[2] अष्टादशे सूक्ते गीयते ।
[3] एकविंशत्युत्तरशततमसूक्ते गीयते ।



ऽ२३होवा ॥श्रीः॥ आदीमश्वो । हाइ ॥ नहेताऽ२३राम् ॥ अशुशुभन्नमा-
ऽ१ताऽ३या ॥ मघोरसोऽ२३४हाइ ॥ माधाऽ३हाइ । मादा । औऽ३-
होवा । होऽ५इ ॥डा॥

दी. १३. उ. ६. मा. २१. ट ॥६१७॥

५. [1]यौधाजयम् ॥ युधाजित् । बृहती । पवमानस्सोमः ॥

पराऽ३१इ । तोऽ३पि । च । तासूऽ२३४ताम् ॥ सोमोऽ३ ।
यऊऽ२ । तमाऽ३४५म् । हाऽ२३४वीः । दधान्वाञ्याः । न । योआऽ२ ।
प्सुवाऽ३४५ । ताऽ२३४रा ॥ सुपाऽ२ ॥ वासोऽ२ । ममाऽ३४५ ॥
द्राऽ२३४इभीः ॥श्रीः॥ सुपाऽ३१ । वाऽ३सो । मम् । आद्राऽ२३४इभाइः ॥
सूपाऽ३ । वसोऽ२ । ममाऽ३४५ । द्राऽ२३४इभीः । नूनाम्पुना । नः ।
अविभाऽ२इः । पराऽ३४५इ । स्राऽ२३४वा ॥ अदाऽ२ ॥ ब्धास्सूऽ२ ।
रभाऽ३४५इ ॥ ताऽ२३४राः ॥ श्रीः ॥ अदाऽ३१ । ब्धाऽ३स्सु । र ।
भिन्ताऽ२३४राः ॥ आदाऽ३ । ब्धस्सूऽ२ । रभाऽ३४५इ । ताऽ२३४राः ।
सुताइचित्वा । अ । प्सुमदाऽ२ । सोआऽ३४५ । धाऽ२३४वा ॥
श्रीणाऽ२ ॥ तोगोऽ२ । भिरूऽ३४५ । ताऽ२३४राम् ॥

दी. ९. उ. ६. मा. २७. पे. ॥६१८॥

६. द्वैगतम् ॥ द्विगत् । बृहती । पवमानस्सोमः ॥

परीतोऽ३षिञ्चतासुतम् ॥ सोमोयउ । तमाञ्हाऽ१वाऽ२इः ।
दधाऽ३ । हौऽ३होऽ३वा । न्वाञ्योनर्योअप्स्वअन्ताराऽ२ ॥ सुषाऽ२३ ॥
वाऽ२सोऽ२३४औहोवा ॥ एऽ३ । ममाऽ२द्रिभाऽ२३४५इः ॥ श्रीः ॥
सुषावाऽ३सोममद्रिभाइः ॥ सुषावसो ॥ ममाद्राऽ१इभाऽ२इः । नूनाऽ२म् ।
हौऽ३होऽ३वा । पुनानोअविभि ँ पारिस्रावाऽ२ ॥ अदाऽ२३ ॥ ब्धाऽ२-
स्सूऽ२३४औहोवा ॥ एऽ२ । रभाऽ२इन्तराऽ२३४५: ॥ श्रीः ॥ अदब्धा-

[1] [illegible]सूक्ते द्वे सामनी गीयेते ।

ऽ३स्सुरभिन्तराः ॥ आदन्धस्तु । रभाइन्ताऽ१राऽरः । सुताऽ३इ । हौऽ३-
हौऽ३वा । चित्वाप्सुमदामोअन्धामाऽर ॥ श्रोणाऽर३ ॥ तोऽरगोऽर३४-
औहोवा ॥ एऽ३ । भिरूऽरत्तराऽर३४५म् ॥

दी. २२. उ. ३. मा. २६. जू. ॥६१९॥

७. [1]पौरुहन्मनम् ॥ पुरुहन्मा । बृहती । पवमानस्सोमः ॥

श्रोणन्तोऽ३गोभिरुत्तराम् ॥ आइणन्तोगो । भिरूत्ताऽ१राऽरम् ।
ताराऽरम् । पारिस्वानः । चा । क्षसेदाऽ३इ (द्विः) वामादाऽर३४नाः ॥
क्रातुरिन्दुः । वाइचक्षाऽर३४णाः ॥ विचाऽ५क्षणाः । होऽ५इ ॥डा॥

दी. ७ उ. १. मा. १३. चि. ॥६२०॥

८. [2]आकूपारम् ॥ अकूपारः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजाऽर३इतीवः । अन्धाऽर३४साः ॥ सुताऽरयमा । दयिल्न-
वाइ । अपश्वानाऽरम् । श्नथिष्टना ॥ सखायोदीऽर३ ॥ घाऽर३जाऽ३इ ।
हाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ सखायोऽर३दीर्घ । जिह्वाऽर३४याम् ॥
योघाऽररया । पावकया । परिप्रास्याऽर । दतेसुताः ॥ इन्दुराश्वाऽर३ः ॥
नाऽर३क्राऽ३ । त्वाऽ३४५योऽ६"हाइ ॥ श्रीः ॥ इन्दुराऽर३श्वोन ।
कत्वाऽर३४याः ॥ तन्दूऽररोपाम् । अभीनराः । सोसंवाइश्वाऽर । चिया-
धिया ॥ यज्ञायासाऽर३ ॥ तूऽर३वाऽ३ । द्राऽ३४५योऽ६"हाइ ॥

दी, १४. उ. १५. मा. १६. नू. ॥६२१॥

९. साध्रम् ॥ सध्रः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजाऽ३इतीवोअन्धसाः ॥ सुतायमाऽर । दयाऽ३४५इ । वा-
ऽर३४वै । अपश्वानऽश्नथिष्टनाऽर३४५ ॥ साखाओऽर३४वा । योदा-
ओऽर३४वा । घजाऽ५इह्वियाम् ॥ श्रीः ॥ सखायोऽ३दीर्घजिह्वियाम् ॥
योघारयाऽर । पावाऽ३४५ । काऽर३४या । परिप्रस्यन्दतेसुताऽ१ः ॥

[1] अष्टनवत्युत्तरशततमसूक्तस्य द्वितीयस्याश्चतुर्थपादे द्विपदाविराजि च गीयते ।
[2] अष्टादशे सूक्ते द्वे सामनी गीयेते ।



आइन्दाग्रोऽर३४वा । आश्वाओऽर३४वा ॥ नक्राऽ५त्वियाः ॥ श्रीः ॥
इन्दुराऽ३श्वानक्रत्वियाः ॥ तन्दूरोपाऽरम् । अभाऽ३४५इ । नाऽर३४गः ।
सोमंविश्वाचियाधियाऽ१ ॥ याज्ञाग्रोऽर३४वा । यासाग्रोऽर३४वा ॥
तुवाऽ५द्र्याः । होऽ५इ ॥डा॥ दी. १५. उ. ४. मा. २२. धा. ॥६२२॥

१०. [1]आत्रेयम् ॥ अत्रिः । अनुष्टुप् । पवमानस्सोमः ॥

पवस्ववा ॥ जमाताऽर३याइ । पावित्रेभा । रयासूऽर३ताः ।
इन्द्रायमो । मानिष्णावाऽर३इ ॥ देवेभ्योऽ३माऽ३ ॥ धुमोवा । ताऽ५गो-
ऽ६"हाइ ॥ श्रीः ॥ तुवाऽरिहा ॥ निधीताऽर३याः ॥ हारिपवि । त्रेअद्र-
ऽर३हाः । वत्सज्ञातम् । नामाताराऽरः ॥ पवामाऽ३नाऽ३ ॥ विधोवा ।
माऽ५णोऽ६"हाइ ॥ श्रीः ॥ तुवंघाश्वा ॥ महिम्राऽर३ता । पार्थिवोभ्या ।
तिजश्रीऽर३पाइ । प्रतिद्रापिम् । आमुआथाऽरः ॥ पवामाऽ३नाऽ३ ॥
महोवा । त्वाऽ५नोऽ६"हाइ ॥ दी. १६. उ. ६. मा. १४ की. ॥६२३॥

११. [2]गौपूक्तम् ॥ गौपूक्तिः ॥ गायत्री । पवमानस्सोमः ॥

परिप्रियादिवो । होहोवाहाइ । कवाइः ॥ वयाऽसिनप्रियोऽर ।
हुवाइ । हुवाऽरइ । हाइताऽरः ॥ स्वानैर्यातिकवोऽर । हुवाइ । हुवा-
ऽरइ ॥ क्रातूऽर३ः । होऽरवाऽर३४औहोवा ॥ अग्निशहुताऽर३४५ः ॥

दी. १०. उ. २. मा. १२. फा. ॥६२४॥

१२. [3]गौरीवितम् ॥ गौरीवितिः । अनुष्टुप् । इन्द्रः ॥

प्रति । अस्माऽ३इ । पिपीषताइ ॥ विश्वानिविदुषेभराऽर३ ।
अरङ्गमाऽ३१र३ । यजाऽ५मयाइ ॥ आपश्चादाऽ३१र३ ॥ धन्वोवा ॥
नाऽ५रोऽ६"हाइ ॥ श्रीः ॥ एमे । नंप्राऽ३ । विवेतना ॥ सामेभिस्सोम-

[1] चतुर्विंशत्युत्तरशततमसूक्ते गीयते ।
[2] एकोनशततमसूक्तस्य प्रथमायां स्तोत्रीयायां गीयते ।
[3] द्विचत्वारिंशदुत्तरद्विशततमसूक्तस्यानुष्टुप्सु गीयते ।

पातमाऽ२३म् । आमत्रेभाऽ३१२३इ: । ऋजाऽ५इदिपणाम् ॥ आइन्द्र॰सुता-
ऽ३१२३इ ॥ भिगेवा । दृऽ५भोऽ६"हाइ ॥ श्रीः ॥ यदी । सुताऽ३इ ।
भिरिन्दुभाइ: ॥ सोमेभि॰प्रतिभूपथाऽ२३ । वाइदाविश्वाऽ३१२३ । स्यमा-
ऽ५इधिगः ॥ धापत्तन्ताऽ३१२३म् ॥ इदोवा । पाऽ५तोऽ६"हाइ ॥

दी. १७. उ. न. मा. २०. यी. ॥६२५॥

~~१३. ¹वाजनुत्तम् ॥ हाक्तुतिः । गायत्री । पवमानस्सोमः ॥~~

इन्द्रा । इहा ॥ येन्दोमरुऽ२त्वताइ । इहा । पवा । इहा ।
स्वमधुमाऽ२त्तमाः । इहा ॥ अर्का । इहा ॥ स्ययोनिमाऽ२सदाम् ।
इहाऽ१ ॥ श्रीः ॥ तन्त्वा । इहा ॥ विप्रावचोऽ२विदाः । इहा । पराइ ।
इहा । कृण्वन्तिधाऽ२र्णसाइम् । इहा ॥ सन्त्वा । इहा ॥ मृजन्तिआऽ२-
यवाः ॥ इहाऽ१ ॥ श्रीः ॥ रसाम् । इहा ॥ तेमित्रोआऽ२र्यमा । इहा ।
पिबा । इहा । तुवरुणाऽ२॰कवाइ । इहा ॥ पवा । इहा ॥ मानस्य-
माऽ२रुताः । इहाऽ१ ।

दी. ७. उ. ९. मा. १३. कि. ॥६२६॥

१४. ²दैवोदासोत्तरम् । दैवोदासः । अनुष्टुप् । पवमानस्सोमः ॥

प्राऽ४सुन्वाना । हो । यअन्धसाऽ६ए ॥ मर्तोनवष्टतद्वचो-
अपश्वानमराधाऽ३साम् । हता । मखाऽ३४ । औहोवा । नाऽ२३४मू ॥
श"वोऽ२३४५इ ॥डा॥

दी. ८. उ. १. मा. ५. दु. ॥६२७॥

१५. ³यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । जगती । पवमानस्सोमः ॥

अभाऽ५इप्रि । याऽ३णाऽ३इपवताइ ॥ चानोहितानामानियह्वो-
अधियाइ । पूऽ३वार्द्धाऽ३ताइ । आरुऽ२र्यस्यबृहतोबृहन्न । धिरा२३थाम् ।
हुम्माइ ॥ वाऽ३२इन्वा ॥ चामरुहद्धिचाऽ२क्षणाउ ॥ श्रीः ॥ णाश्रा ॥

¹ एकोनचत्वारिंशदुत्तरशततमसूक्ते गीयते ।
² पञ्चचत्वारिंशततमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
³ एकोनविंशतितमसूक्ते गीयते ।



तस्यजिह्वापवतेमधुप्रियंवक्तापतिर्धियोअस्याः । आऽ३दाभाऽ३याः । दधाऽ२-
तिपुत्र॰पित्रोरपीचि । यन्नाऽ२३मा । हुम्माइ ॥ ताऽ३र्ता ॥ यामधिगो-
चनाऽ२न्दिवाउ ॥श्रीः॥ वाआ ॥ वद्युतान॰कलशा॰अचिक्रदन्नृभिर्येमाण॰-
कोशआ । हाऽ३इराण्याऽ३याइ । अभीऽ२ऋतस्यदोहनाअनूष । तआऽ२३-
षा । हुम्माइ ॥ त्राऽ३२इषा ॥ हाउपसोविराऽ२जसाउ ॥ वाऽ३४५ ॥

दी. २३. उ. न. मा. २८. है. ॥६२८॥

१६. ¹जराबोधीयम् ॥ अग्निः । गायत्री । अग्निः ॥

नमस्तओवा ॥ ग्नाओजसाइ । गृणान्ताऽ२३इदे । वकृष्टाराः ॥
अमाइराऽ१माऽ२३इ"त्राम् । अ । दयोऽ३४५इ ॥ डा ॥ श्रीः ॥ कुविन्तु-
नोवा ॥ गाविष्टयाइ । अग्नाइसाऽ२३म्वे । पिपोरयाइम् ॥ उरुकृऽ१दु-
ऽ२३"रु । णः । कृधोऽ३४५इ ॥ डा ॥ श्रीः ॥ मानोअग्नेवा ॥
माहाधनाइ । पराबाऽ२३ग्भी । रभृद्याथा ॥ संवार्गाऽ१॰साऽ२३॰"रा ।
यिम् । जयोऽ३४५इ ॥डा॥

दी. ५. उ. १. मा. १९. भो. ॥६२९॥

१७. ²यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । जगती । पवमानस्सोमः ॥

वृषाऽ५म । ताऽ३इनाऽ३म्पवताइ ॥ वाइचक्षणस्सोमोअह्नांप्रतरीतो ।
षाऽ३सान्दाऽ३इवाः । प्राणाऽ२सिन्धूनांकलशा॰अचिक्र । ददाऽ२३इन्द्रा ।
हुम्माइ ॥ स्याऽ३२हा ॥ दोपाविशन्मनाऽ२इपिभाउ ॥श्रीः॥ भाइमो ॥
नोपिभि॰पवतेपूर्व्य॰कविर्नृभिर्यत॰परिकोश॰ । आऽ३साइप्याऽ३दात् ।
त्रिताऽ२स्यनामजनयन्मधुक्ष । रन्ताऽ२३इन्द्रा । हुम्माइ ॥ स्याऽ३२वा ॥
यू॰सखियायवाऽ२र्घयाउ ॥ श्रीः ॥ याना ॥ यंपुनानउपसोअरोचयदय॰-
सिन्धुभ्योअभवात् । ऊऽ३लोकाऽ३कृत् । अयाऽ२न्त्रिस्समदुदुहानआशि ।
र॰सोऽ२३माः । हुम्माइ ॥ हाऽ३२दाइ ॥ पावतेचारुमाऽ२त्सराउ ॥
वाऽ३४५ ॥

दी. २३. उ. न. मा. २७. रे. ॥६३०॥

¹ [illegible]पुनरुक्तिशततमसूक्ते गीयते । ² द्विपञ्चिरमसूक्ते गीयते ।

३३४. सोभरिः काण्वः । ककुप्सतोबृहत्यौ । अग्निः ॥

१०३७. तं गूर्धया स्वर्णरन्देवासो देवमरतिन्दधन्विरे ।
देवत्रा हव्यमूहिषे ॥१॥

१०३८. विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२॥

धा. १७. उ. न. स्व. २. या. ॥११॥

---

३३४. तम् । गूर्धय । स्वर्णरम् । स्वः । नरम् । देवासः । देवम् । अरतिम् । दधन्विरे । देवत्रा । हव्यम् । ऊहिषे ॥ विभूतरातिम् । विभूत । रातिम् । विप्र । वि । प्र । चित्रशोचिषम् । चित्र । शोचिषम् । अग्निम् । ईडिष्व । यन्तुरम् । अस्य । मेधस्य । सोम्यस्य । सोभरे । प्र । ईम् । अध्वराय । पूर्व्यम् ॥

---

१८. सौभरम् ॥ सुभरिः । ककुप् । अग्निः ॥

तंगूऽ३र्धाऽ३यासुवर्णरोवा ॥ देवासोदेवमराऽ२ताइन्दधाऽ२३ । हो । न्वाऽ२३४इराइ । देवत्राइ । व्यमूऽ३हाऽ३ ॥ हाऽ२इषाऽ२३४ओहोवा ॥ श्रीः ॥ देवाऽ३त्राऽ३हव्यमूहिषोवा ॥ विभूतरातिंविप्राऽ२चाइत्रशोऽ२३ । हो । चाऽ२३४इषाम् ॥ अग्निमीडि । ष्वयाऽ३हाऽ३इ ॥ तूऽ२राऽ२३४ओहोवा ॥ श्रीः ॥ अग्नाऽ३इमाऽ३इडिष्वयन्तुरोवा ॥ अस्यमेधस्यसोमाऽ२यास्यसोऽ२३ । हो । भाऽ२३४राइ ॥ प्रेमध्वरा । यपूऽ३हाऽ३ ॥ वीऽ२याऽ२३४ओहोवा ॥ ऊऽ२३४५ ॥

दी. २१. उ. २. मा. १४. खी. ॥६३१॥

१९. [1]सौमित्रम् ॥ सुमित्रः । गायत्री । पवमानस्सोमः ॥

एनाविश्वान्यर्यआऽ३ए ॥ द्युम्नानिमा । नूऽ२१२३ । षाणाऽ३४३म् ॥ साऽ२३इपा ॥ सन्ताऽ२औऽ२३ । वनोवा । माऽ५होऽ६"हाइ ।

दी. ६. उ. २. मा. ६. सू. ॥६३२॥

पञ्चमो विंशः ॥

षोडशस्यार्द्धःप्रपाठकः ॥

[1] अष्टमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।



१. [1]त्वाष्ट्रीसाम ॥ त्वष्टा । गायत्री । पवमानस्सोमः ॥

पवस्वदा ॥ क्षसाऽ२धानाऽ२ः । दाइवेभ्यऽपी । तयाइहाऽ१राऽ२इ ॥ मरुद्भ्योऽ२३वा ॥ यवेमदाऽ३१उवाऽ२३ ॥श्रीः॥ सन्देवैश्शो ॥ भनाऽ२इवार्षाऽ२ । कावियोनौ । अधाइग्राऽ१याऽ२ः ॥ पवमाऽ२३नाः ॥ अदाभियाऽ३१उवाऽ२३ ॥ श्रीः ॥ पवमाना ॥ धियाऽ२हाइताऽ२ः । आभियोनिम् । कनाइक्राऽ१दाऽ२त् ॥ घर्मणाऽ२३वा ॥ युमारुहाऽ३१उवाऽ२३ ॥ वृषेऽ१ ॥

दी. ८. उ. १३. मा. १६. वृ. ॥६३३॥

२. [2]आष्टादंष्ट्रोत्तरम् ॥ अष्टादंष्ट्रः । बृहती । पवमानस्सोमः ॥

अभिसोमासआयवएयादौ । होऽ३वा ॥ पवन्तेमदियम् । मादाऽ२३म् । एयाऽ२३त् । औऽ२३होवा ॥ समुद्रस्याधिविष्टपेमनी । षाइणाऽ२३ः । एयाऽ२३त् । औऽ२३होवा ॥ मत्सरासोमद । च्युताऽ२३ः । एयाऽ२३त् । औऽ२३होवाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. १८. प. ३. मा. ११. ड ॥६३४॥

३. [3]आभीशवोत्तरम् ॥ अभीशुः । बृहती । पवमानस्सोमः ॥

अभिसोमासआयवए । ए ॥ पवन्तेमऽ३द्यायम्मादम् ॥ साऽ२३४मु । हाऽ३हा ॥ द्रस्याधिविष्टपेमानीऽ१षिणः ॥ माऽ२३४त्सा । हाऽ३हाइ ॥ रासोमदोऽ२३४वा । च्यूऽ५तोऽ६"हाइ ॥ श्रीः ॥ मत्सरासोमदच्युतए । ए ॥ मत्सरासोऽ३मादच्युतः ॥ ताऽ२३४मान् । हाऽ३हाइ ॥ समुद्रंपवमानाऊऽ१र्मिणा ॥ राऽ२३४जा । हाऽ३हाइ ॥ दाइवऋतोऽ२३४वा । बृऽ५होऽ६"हाइ ॥ श्रीः ॥ राजादेवऋतंबृहदे । ए ॥ राजादेवऽ३आर्तंबृहात् ॥ भाऽ२३४पी । हाऽ३हाइ ॥ मित्रस्यवरुणस्याधर्माणा ॥ माऽ२३४हाइ । हाऽ३हाइ ॥ न्वानऋतोऽ२३४वा । बृऽ५होऽ६"हाइ ॥

दी. १८. ड. न. मा. २३. रि. ॥६३५॥

[1] त्रिनवतितमसूक्ते गीयते ।
[2] त्रिनवतितमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[3] त्रिनवतितमसूक्ते गीयते ।

३३५. सप्तर्षयः । बृहतीसतोबृहत्यौ । पवमानः सोमः ॥

१०३९. आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिस्सदो वनेषु दध्रिषे ॥१॥
१०४०. स मामृजे तिरो अण्वानि मेष्यो मीढ्वान्सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिस्सोमो विप्रेभिर्ऋक्वभिः ॥२॥

धा. १४. उ. १. स्व. ५. तु. ॥१९॥

३३६. कलिः प्रागाथः । बृहतीसतोबृहत्यौ । इन्द्रः ॥

१०४१. वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥१॥

---

३३५. आ । सोम । स्वानः । अद्रिभिः । अ । द्रिभिः । तिरः । वाराणि । अव्यया । जनः । न । पुरि । चम्वोः । विशत । हरिः । सदः । वनेषु । दध्रिषे ॥ सः । मामृजे । तिरः । अण्वानि । मेष्यः । मीढ्वान् । सप्तिः । न । वाजयुः । अनुमाद्यः । अनु । माद्यः । पवमानः । मनीषिभिः । सोमः । विप्रेभिः । वि । प्रेभिः । ऋक्वभिः ॥

---

४. स्वःपृष्ठम् ॥ अङ्गिरसः । बृहती । पवमानस्सोमः ॥

प्रहाऽ२इन्वानाऽ३४ः । ओहोऽ५ऋतंबृहात् ॥ (द्वे । द्विः) नृभाऽ२इयेमाऽ३४ । ओहोऽ५णोहयताः । ओइ । वाऽ२इचाऽ२३४ओहोवा । क्षाऽ२३४णाः । ऊऽ२३४पा ॥ (द्विः) राजादेवाऽ२३ः ॥ माऽ२मूऽ२३४ओहोवा ॥ द्रीऽ२३४याः ॥ दी. १४. उ. न. मा. १७. ले. ॥६२६॥

५. इदावासिष्ठम् ॥ वसिष्ठः । बृहती । इन्द्रः ॥

वयमेनमिदा । हियाओऽ२३४वा । इयाहाइ ॥ हुवेहोऽ२इ । अपीपेमेहावज्रिणाऽ२म् । तस्माउवद्यसवनाइ । सुतम्भाराऽ२ । ईऽ३या ॥ आनूनाऽ२३४म्भू ॥ षताश्रूऽ२३४५ताऽ६५६इ ॥ श्रीः ॥ आनूनंभूषत ।

[1] त्रिसप्ततितमसूक्तस्य द्वितीयस्याश्चतुर्थपादे द्विपदाविराजि च गीयते ।



१०४२. वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमन्नस्तोमञ्जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥२॥

धा. १६. उ. २. स्व. १. स्वा. ॥२३॥

---

३३६. वयम् । एनम् । इदा । ह्यः । अपीपेम । इह । वज्रिणम् । तस्मै । उ । अद्य । अ । द्य । सवने । सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥ वृकः । चित् । अस्य । वारणः । उरामथिः । उरा । मथिः । आ । वयुनेषु । भूषति । सः । इमम् । नः । स्तोमम् । जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥

---

श्रुताओऽ२३४वा । इयाहाइ ॥ हुवेहोऽ२इ । आनूनंभूषताश्रूऽ१ताऽ२इ । वृकश्चिदस्यवारणः । उरामाऽ१थीऽ२ः । ईऽ३या ॥ आवयूऽ२३४ना । षुभूषाऽ२३४५ताऽ६५६इ ॥ श्रीः ॥ आवयुनेषुभू । षताओऽ२३४वा । इयाहाइ । हुवेहोऽ२इ । आवयुनेषुभूषाऽ१ताऽ२इ । सेमन्नस्तोमंजुजुषा । णआगाऽ१हीऽ२ । ईऽ३या ॥ इन्द्रप्राऽ२३४चाइ ॥ त्रयाधाऽ२३४५याऽ६५६ ॥ अवऽ३साऽ२३४५इ ॥ दी. २६. उ. ९. मा. २१. प. ॥६२७॥

६. [1]क्षुल्लककालेयम् ॥ धानाकः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोऽ१न्धासाः ॥ सुतायमाऽ२ । दयाऽ२इनाऽ२३४वाइ । श्वपा । अपाऽ३१उ । वाऽ२ । श्वानश्नथिष्टनाऽ२३४५ ॥ सखाहोइयोऽ२३दी ॥ घाजिह्विषम् । इडाऽ२३ ॥श्रीः॥ सखायोदीर्घजाऽ१इह्वायाम् ॥ योधारयाऽ३ । पावाऽ२काऽ२३४या । पराइ । पराऽ३१उ । वाऽ२ । प्रस्यन्दतेसुताऽ१ः ॥ इन्दुर्होंआऽ२३श्वाः ॥ नाकृत्वियः । इडाऽ२३ ॥ श्रीः॥ इन्दुरश्वोनकाऽ१त्वियाः ॥ तन्दुरोषाऽ२३म् । अभाऽ२इनाऽ२३४राः । सोमाम् । सोमाऽ३१उ । वाऽ२ । विश्वाचियाधियाऽ१ ॥ यज्ञाहोइया-

[1] अष्टादशसूक्ते गीयते ।

ऽ२३मा ॥ नूत्रद्रयः । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. १९. उ. ११. मा २३. ति ॥६३८॥

७. [1]द्विहिङ्कारं वामदेव्यम् ॥ वामदेवः । बृहती । पवमानस्सोमः ॥

तुवमाऽ२३इन्द्रयशाअसाइ ॥ आर्जीपीशवसस्पतिस्त्वंवृत्राणिह७-
स्यप्रतीनआइकओहोऽ३ । हुम्माऽ२ । पूऽ२३रू ॥ अनुत्तश्चापर्णोहोऽ३ ।
हुम्माऽ२ ॥ धृताइः । ओऽ२३होवा ॥श्रीः॥ अनुत्ताऽ२३श्चर्पणीधृताइः ॥
आनुत्तश्चर्पणीधृतिस्तमुत्वानूनमसुराप्रचोहोऽ३ । हुम्माऽ२ । ताऽ२३साम् ॥
राधोभागामित्रोहोऽ३ । हुम्माऽ२ ॥ महा । ओऽ३होवा ॥ श्रीः ॥ राधो-
भाऽ२३गमिवेमहाइ ॥ राधोभागमिवेमहेमहीवकृत्तिशरणातओहोऽ३ ।
हुम्माऽ२ । आऽ२३इन्द्रा ॥ प्रतेसुम्नानओहोऽ३ । हुम्माऽ२ ॥ श्नवान् ।
औऽ२३होवा । होऽ५इ ॥डा॥ दी. २७. उ. ६. मा. १७. चे. ॥६३९

८. [2]वाशम् ॥ कृशः । उष्णिक् । पवमानस्सोमः ॥

प्राणाशिशूः ॥ माहाऽ३इनाम् । हिन्वन्नृतस्यदीधि । ताइम् ।
विश्वाऽ२पाऽ२३४राइ ॥ श्रीयाभुवाऽ३त् । ईऽ३या ॥ अघ । द्वाऽ२इता-
ऽ२३४ओहोवा ॥ श्रीः ॥ उपत्रिता ॥ स्यपापाऽ३योः । अभक्तयद्गुहाप ।
दाम् । यज्ञाऽ२स्याऽ२३४सा ॥ स्राघामभाऽ३इः । ईऽ३या ॥ अघ ।
प्राऽ२याऽ२३४ओहोवा ॥ श्रीः ॥ त्रीणित्रिता ॥ स्यधाराऽ३या । पृष्ठेष्वेर-
यद्र । याइम् । सिमाऽ२हूतेऽ२३४आ ॥ स्यायोजनाऽ३ । ईऽ३या ॥
विसु । क्राऽ२तूऽ२३४ओहोवा ॥ ऊऽ३२३४पा ॥

दी. १६. उ. ५. मा. १९. ञो. ॥६४०॥

९. [3]यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । अनुष्टुप् । पवमानस्सोमः ॥

पवाऽ५स्व । वाऽ३जाऽ३सातायाइ ॥ पावित्रेधा । राऽ३या-

[1] द्वात्रिंशदुत्तरद्विशततमसूक्ते गीयते ।

[2] त्रयोविंशत्युत्तरशततमसूक्ते गीयते ।

[3] चतुर्विंशत्युत्तरशततमसूक्ते गीयते ।



सुऽ३ताः । इन्द्राऽ२य । सोमाऽ२३वा । हुम्माइ ॥ ष्णाऽ३२वाइ ॥
दाइवेभ्योमधुमाऽ२त्तराउ ॥ श्रीः ॥ गम्नू ॥ वा०रिहन्तिधीतयोहरिंपवाइ ।
त्रेऽ३आद्रूऽ३हाः । वत्साऽ२श्चा । तन्नाऽ२३मा । हुम्माइ ॥ ताऽ३२राः ॥
पावमानविधाऽ२र्मणाउ ॥ श्रीः ॥ गाइतू ॥ वन्द्याश्चमहिव्रतपृथिवीश्चा ।
तोऽ३जाश्रीऽ३षाइ । प्रताऽ२इन्द्रा । पिमाऽ२३म् । हुम्माइ ॥ चाऽ३२थाः ॥
पावमानमहाऽ२इत्वनाउ ॥ वाऽ३४५ ॥ दी. १४. उ. न. मा. १९. लो. ॥६४१॥

१०. [1]बृहदाग्नेयम् ॥ अग्निः । विराट् । अग्निः ॥

अग्निन्नरोदीधितिभिः । ईयइयाहाइ ॥ आरण्योः । ह । स्त-
च्युताऽ२३४आ । आओऽ३४हो । इयाहाइ । नयतप्र । शा । स्तन्दूऽ२रे-
ऽ२३४द् । आओऽ३४हो । इयाहाइ ॥ शाक्षाऽ३उवा ॥ ह । पा । ताइमाथा-
ऽ२३४व्यूम् । आओऽ३४हो । इयाहा ॥ श्रीः ॥ तमग्निमस्तेवसवः ।
ईयइयाहाइ ॥ नायर्खन् । सु । प्रतिचाऽ२३४क्षाम् । आओऽ३४हो ।
इयाहाइ । अवसेकु । ताः । चिदाऽ२क्षाऽ२३४पियाः । आओऽ३४हो ।
इयाहाइ ॥ योदाऽ३उवा ॥ मे । आ । सानाऽ२३४इत्याः । आओ-
३४हो । इयाहा ॥ श्रीः ॥ प्रेद्धोअग्नेदीदिहि । ईयइयाहाइ ॥ पुरोनः ।
अ । जस्रयाऽ२३४सू । आओऽ३४हो । इयाहाइ । म्याय । वाइ ।
ष्ठतूऽ२वाऽ२३४०शा । आओऽ३४हो । इयाहाइ ॥ बान्ताऽ३उवा । ऊ ।
पा । यान्ताइवाऽ२३४जाः । आओऽ३४हो । इयाहा । होऽ५इ ॥डा॥

दी. १२. उ. १. मा. ४१. प. ॥६४२॥

११. [2]प्रतोदः ॥ कश्यपः । बृहती । पवमानस्सोमः ॥

हाउहाउहाउवा । श्रीयन्तोगोभिरुत्तरम् । उपाऽ२३४५ ॥ ( हे-

[1] एकोनविंशत्युत्तरद्विशततमसूक्ते गीयते ।

[2] अष्टनवत्युत्तरशततमसूक्तस्य द्वितीयस्याश्चतुर्थपादे द्विपदाविराजि च गीयते ।

द्विः । ) परिस्वानश्चक्षसेदेवसादनः । उपाऽ२३४५ ॥ हाउहाउहाउवा । क्रतुरिन्दुर्विचक्षणः । उपाऽ२३४५ ॥ दी. १०. उ. २. मा. १०. फी. ॥६४३॥

१२. ¹पृष्टम् ॥ प्रजापतिः । बृहती । इन्द्रः ॥

पिबाऽ३सुतस्यरसिनाः ॥ मत्स्वानइन्द्रगोमताऽ२३होइया । आपिनोबोधिसधमाद्येवृधाऽ२३होइया ॥ अस्मा॰आऽ२३वा ॥ तुताइधाऽ२३याऽ३४३: ॥ श्रीः ॥ अस्म॰ऽ३अवन्तुतेधियाः ॥ अस्मा॰अवन्तुतेधिया२३होइया । भूयासतेसुमतौवाजिनोवयाऽ२३॰होइया ॥ मानस्ताऽ२३रा ॥ भिमाताऽ२३याऽ३४३इ ॥ श्रीः ॥ मानाऽ३स्तरभिमातयाइ ॥ मानस्तरभिमातयाऽ२३इहोइया । अस्माञ्चित्राभिरवतादभिष्टिभाऽ२३इहोइया ॥ आनस्सुऽ२३म्नाइ ॥ पुयामाऽ२३याऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. २८. उ. ९. मा. २०. हो. ॥६४४॥

१३. ²ऐड॰सौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

अध्वर्यओवा ॥ द्राइभाइस्सूऽ२३४ताम् । सोमांपवाइ । त्रआऽ२नाऽ२३४या ॥ पूऽ२ना । हाऽ२३इन्द्रा ॥ यापातवा । औऽ३होवा ॥ श्रीः ॥ तवत्यओवा ॥ दोअन्धाऽ२३४साः । देवामघोः । वियाऽ२शा२३४ता ॥ पाऽ२वा । माऽ२३ना ॥ स्यामरुता । औऽ२होवा ॥ श्रीः ॥ दिवᳲपीयोवा ॥ पासुत्ताऽ२३४साम् ॥ सोमामिन्द्रा । यवाऽ२ज्राऽ२३४इणाइ ॥ सूऽ२नो । ताऽ२३मा ॥ धूमत्तमाम् । औऽ२३होवा । होऽ५इ ॥डा॥ दी. ५. उ. ६. मा. १६. पू. ॥६४५॥

१४. रौहितकूलीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

अध्वर्योअद्रिभाइः ॥ सुताऽ२म् । सोमंपवित्रआनाऽ२३या ॥ पूनाऽ२हाइन्द्राऽ२३ ॥ यपोऽ२३४वा । ताऽ५वोऽ६"हाइ ॥श्रीः॥ तवत्य-

¹ पट्त्रिंशदुत्तरद्विशततमसूक्ते गीयते ।

² सप्तसप्तत्युत्तरशततमसूक्ते द्वे सामनी गीयेते ।



इन्दोआ ॥ घमाऽ२: । देवामघोर्वियाशाऽ२३ता ॥ पावाऽ२मानाऽ२३ ॥ स्यमोऽ२३४वा । रूऽ५तोऽ६"हाइ ॥श्रीः॥ दिवᳲपीयूषम् ॥ तमाऽ२म् । सोममिन्द्रायवज्राऽ२३इणाइ ॥ सुनोऽ२तामाऽ२३ ॥ धुमोऽ२३४वा । ताऽ५मोऽ६"हाइ ॥

दी. १२. उ. ७. मा. १५. छु. ॥६४६॥

१५. ¹पौरुहन्मनम् ॥ पुरुहन्मा । बृहती । पवमानस्सोमः ॥

तवाहाऽ३॰सोमरारणा ॥ सख्यइन्दो । दिवाइदाऽ१इवाऽ२इ । दाइवाऽ२इ । पूरूणिव । ओ । निचराऽ३(द्विः)। ताइमामाऽ२३४वा ॥ पारिधी॰रा । ताइत॰आऽ२३४इहाइ ॥ तित॰ऽ५इहाइ ॥ श्रीः ॥ परिधाऽ३इ॰रातिता॰इहाइ ॥ पारिधी॰र । तित॰आऽ१इहाऽ२इ । आइहाऽ२इ । तावाहन्न । त्काम् । उतसोऽ३ । (द्विः) माताइदाऽ२३४इवा ॥ दूहानोवा । आऊधाऽ२३४नाइ ॥ अऊऽ५धनाइ ॥ श्रीः ॥ दुहानोऽ३वअऊधनाइ ॥ दूहानोव । अऊधाऽ१नाऽ२इ । धानाऽ२इ । धार्णसिप । ताम् । अनिसूऽ३ (द्विः) रायंपाऽ२३४राः ॥ शाकुनाआइ । वापसाऽ२३४इमा ॥ वपाऽ५सिमा । होऽ५इ ॥डा॥ दी. १७. उ. ३. मा. ३९. जो. ॥६४७॥

१६. द्वैगतम् ॥ द्विगत् । बृहती । पवमानस्सोमः ॥

तवाहाऽ३॰सोमरारणा ॥ सख्यइन्दो । दिवाइदाऽ१इवाऽ२इ । पुरूऽ३ । होऽ३होऽ३वा । णिवओनिचरन्ताइमाऽ१मवाऽ२ ॥ पराऽ२३इ ॥ धाऽ२इ॰राऽ२३४औहोवा ॥ एऽ३ । तित॰ऽ२इहाऽ२३४५इ ॥ श्रीः ॥ परिधाऽ३इ॰रातिता॰इहाइ ॥ पारिधी॰र । तित॰आऽ१इहाऽ२इ । तवाऽ३ । होऽ३होऽ३वा । अहन्नक्रतुसोमातेऽ१दिवाऽ२ ॥ दुहाऽ२३ ॥ नोऽ२सा-ऽ२३४औहोवा ॥ एऽ३ । अऊऽ२धनाऽ२३४५इ ॥ श्रीः ॥ दुहानोऽ२वअऊधनाइ ॥ दूहानोव । अऊधाऽ१नाऽ२इ । घृणाऽ३ । होऽ३होऽ३वा ।

¹ चतुर्नवतिदशसूक्ते चत्वारि सामानि गीयन्ते ।

तपन्तमतिस्त्ररायंपाराऽ२ः ॥ शक्रूऽ२३ ॥ नाऽ२आऽ२३४औहोवा ॥
एऽ३ । वपाऽ२स्मिमाऽ२३४५ ॥ दी. १९. उ. ४. मा. २६. धू. ॥६४८॥

१७. गौङ्गवम् ॥ अग्निः । बृहती । पवमानस्सोमः ॥

तवाहाऽ३ऽसोमरारणा ॥ सख्याऽ२इ । इन्दोदिवेऽ३ । दाइवाइ ।
पुरुणिबभ्रोनिचाऽ२३राऽ२ । तिमाऽ३मावा । पुरूणिबभ्रोनिचर । तिमा-
ऽ३मावा ॥ पारिधीन् । आ । औऽ३हो ॥ तितोऽ२३४वा । आऽ५इहो-
ऽ६"हाइ ॥श्रीः॥ परिधाऽ३इऽरातिताऽइहाइ ॥ पारीऽ२ । धीऽरतितऽऽ३ ।
आइहाइ । तवाहन्नक्तमुताऽ२३सोऽ२ । मताऽ३इदाइवा । तवाहन्नक्तमुतसो ।
मताऽ३इदाइवा ॥ दूहानः । वा । औऽ३हो ॥ अओऽ२३४वा । घाऽ५-
नोऽ६"हाइ ॥ श्रीः ॥ दुहानोऽ३वअऊधनाइ ॥ दूहाऽ२ । नोवअऊऽ३ ।
घानाइ । घृणातपन्तमताऽ२३इधूऽ२ । रियाऽ३स्पाराः । घृणातपन्त-
मतिधू । रियाऽ३स्पाराः ॥ शाकुनाः । आ । औऽ३हो । वपोऽ२३४वा ।
सृाऽ५इमोऽ६"हाइ ॥ दी. २२. उ. ९. मा. २८. क्रै. ॥६४९॥

१८. साप्तमिकमायास्यम् ॥ अयास्यः । बृहती । पवमानस्सोमः ॥

तवाहऽसोमरारण । एऽ३ । औऽ३होऽ५वा ॥ सख्याऽ३इ ।
इन्दोऽ२ । दिवाऽ२३४५इ । दाऽ३इवाऽ२३४५इ । पूरूणिवा । भ्रोनिचरा ।
वाइभ्राऽ३आ । औऽ३होऽ३ । आऽ२३४वा ॥ पराओऽ३हो ॥ धाइ-
ऽराऽ२ । तितऽऽ३४५ ॥ आऽ३इहाऽ२३४५इ ॥ श्रीः ॥ परिधीऽरतिता-
ऽइहि । एऽ३ । औऽ३होऽ५वा ॥ पारीऽ३ । धीऽराऽ२ । तितऽऽ३४५ ।
आऽ३इहाऽ२३४५इ । तावाहन्ना । क्तामुतसो । माताऽ३आ । औऽ३होऽ३ ।
दीऽ२३४वा ॥ दुहाओऽ३हो ॥ नोवाऽ२ । अऊऽ३४५ ॥ घाऽ३ना-
ऽ२३४५इ ॥श्रीः॥ दुहानोवअऊधनि । एऽ३ । औऽ३होऽ५वा ॥ दूहाऽ३ ।
नोवाऽ२ । अऊऽ३४५ । घाऽ३नाऽ२३४५इ । घाणातपा । तामतिधू ।



३३७. विश्वामित्रः प्रगाथः । गायत्री । इन्द्राग्नी ॥

१०४३. इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥१॥
१०४४. इन्द्राग्नी अपसस्परि(उप प्र यन्ति धीतयः । ऋतस्य पथ्याऽ३ अनु) ॥२॥
१०४५. इन्द्राग्नी तविषाणि वां (सधस्थानि प्रयांसि च ।
युवोरप्तूर्यं हितम्) ॥
धा. ६. उ. १. स्व. १. क. ॥१४॥

३३८. मेध्यातिथिः काण्वः । बृहती । इन्द्रः ॥

१०४६. क ईं वेद सुते सचा (पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानश्शिप्र्यन्धसः ॥१॥

---

३३७. इन्द्राग्नी । इन्द्र । अग्नी इति । रोचना । दिवः । परि । वाजेषु ।
भूषथः । तत् । वाम् । चेति । प्र । वीर्यम् ॥ इन्द्राग्नी । इन्द्र । अग्नी इति ।
अपसः । परि । उप । प्र । यन्ति । धीतयः । ऋतस्य । पथ्याः । अनु ॥
इन्द्राग्नी । इन्द्र । अग्नी इति । तविषाणि । वाम् । सधस्थानि । सध । स्थानि ।
प्रयांसि । च । युवोः । अप्तूर्यम् । अप् । तूर्यम् । हितम् ॥

---

रायाऽ३आ । औऽ३होऽ३ । पाऽ२३४राः ॥ शक्रओऽ३हो ॥ नाथाऽ२इ ।
वपाऽ२३४५ ॥ सृाऽ३इमाऽ२३४५ ॥ दी. १३. उ. ३. मा. २६. दु. ॥६५०॥

१९. [1]वाराहम् ॥ वराहः । त्रिष्टुप् । पवमानस्सोमः ॥

हाउहाउ । हुप् । प्रकाविरयाम् । उशने । बभ्रुवाणाः ॥ देवोदेवा ।
नाऽ३ञ्जनि । माविवक्ति ॥ महिव्रताः । शुचिबाऽ३ । धुःपवाकाः ॥
पदावरा । होऽ३अभि । आऽ३४२इ । तोऽ३राऽ५इ"भाऽ६५६त् ॥ श्रीः ॥
प्रहऽसासाः । हुपला । बभ्रुमच्छा ॥ अमादस्ताम् । वृषभ । णाअयाधः ॥
अङ्गोषिणाम् । पवमा । नऽसखायाः ॥ दुर्मर्षा । णाऽ३ञ्च । दा-
ऽ३४३ । तोऽ३नाऽ५"क्राऽ६५६म् ॥ श्रीः ॥ सयोजताइ । उरुणा ।

[1] [illegible]

१०४७. दाना मृगो न वारण ऽपुरुत्रा चरथं दधे ।
न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥२॥

१०४८. य उग्रस्सन्ननिष्टृतस्थिरो रणाय स॑स्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥३॥

धा. ११. उ. न. स्व. ४. ह्री. ॥१५॥

तृतीयः खण्डः ॥

---

३३८. कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे । अयम् । यः । पुरः । विभिनत्ति । वि । भिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥ दाना । मृगः । न । वारणः । पुरुत्रा । चरथम् । दधे । न । किः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥ यः । उग्रः । सन् । अनिष्टृतः । अ । निष्टृतः । स्थिरः । रणाय । स॑स्कृतः । सम् । कृतः । यदि । स्तोतुः । मघवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत् ॥

---

यस्यजृतीम् ॥ वृथाक्रीडा । ताऽ३म्मिम । तेनगावाः ॥ परीणसाम् । कृणुते । तिग्मशृङ्गाः ॥ हाउहाउ । हुप् । दिवाहराइः । ददृशे । ना-ऽ३४३ । क्ताऽ३माऽ५''त्र्ऽ६५६ः ॥ दी. २३. उ. १.९ मा. २९ दो. ॥६५१॥

२०. वाशम् (नैपातिथम्) निपातिथिः । बृहती । इन्द्रः ॥

कईवेदा ॥ सुताइसाऽ१चाऽ२ । पिबन्तंकद्वायोऽ१दाधाऽ२इ । अयंय ऽपुरोविभिनत्तीओऽ१जासाऽ२ ॥ मन्दानाऽ२३श्शोऽ३ ॥ प्राऽ२या-ऽ२३४औहोवा ॥ धाऽ२३४साः ॥श्रीः॥ दानामृगाः ॥ नवाराऽ१णाऽ२ः । पुरुत्राचरथांदाऽ१धाऽ२इ । नकिष्ट्वानियमदासुताइगाऽ१माऽ२ः ॥ महा-ऽश्चाऽ२३राऽ३ ॥ साऽ२ओऽ२३४औहोवा ॥ जाऽ२३४सा ॥ श्रीः ॥ यउग्रस्सान् ॥ अनाइष्टाऽ१त्ताऽ२ः । स्थिरोरणायसा॑स्काऽ१ताऽ२ः ।



यदिस्तोतुर्मघवाशृणवाद्धाऽ१वाऽ२म् ॥ नेन्द्रोयोऽ२३षाऽ३ ॥ त्याऽ२-आऽ२३४औहोवा ॥ गाऽ२३४मात् ॥ दी २२. उ ७ मा. २२. क्रा ॥६५२॥

षष्ठो विंशः ॥

षोडशःप्रपाठकः ॥

१. [1]सैन्धुक्षितम ॥ सिन्धुक्षित् । गायत्री । पवमानस्सोमः ॥

पवस्वदो । हाइ ॥ वआयूऽ२३षाक् । इन्द्रायक्रतुनाऽ१इमाऽ३दाः ॥ वायुमारोऽ२३४हाइ ॥ हाधाऽ३ह्ना । मणा । औऽ३होवा ॥श्रीः॥ पवमानो । हाइ ॥ नितोशाऽ२३साइ । रयि॑सोमश्रवाऽ१आऽ३याम् । इन्दोसमो-ऽ२३४हाइ ॥ द्रामाऽ३हाइ । विशा । औऽ३होवा ॥ श्रीः ॥ अपघ्नन्पो । हाइ ॥ वसेमाऽ२३र्द्धाः । क्रतुवित्सोममाऽ१त्साऽ३राः ॥ नुदस्वादोऽ२३४-हाइ ॥ वायूऽ३॑हाइ । जनाम् । औऽ२३होवा । हौऽ५इ ॥डा॥

दी, १०. उ. ६. मा. १९. पो ॥६५३॥

२. [2]त्रैतम् ॥ त्रितः । उष्णिक् । पवमानस्सोमः ॥

गोमन्नइन्दोअश्वावात् ॥ सुतस्सुदक्षधनिवा ॥ शुचिंचवर्णमऽ३धाइगो-ऽ२३४हाइ ॥ षूऽ२धाऽ२३४औहोवा ॥ एऽ३ । त्याऽ२३४५ ॥ श्रीः ॥ सनोहरीणांपताइ । इन्दोदेवप्सरस्तमाः । सखेवसख्येनऽ३राइयोऽ२३४-हाइ ॥ रूऽ२चाऽ२३४औहोवा ॥ एऽ३ । भवाऽ२३४५ ॥ श्रीः ॥ सनेमितुवमास्मात् ॥ आदेवंकञ्चिदत्रिणाम् ॥ साह्वा॑इन्दोपरिऽ३बाधो-ऽ२३४हाइ ॥ आऽ२पाऽ२३४औहोवा ॥ एऽ३ । द्वयूऽ२३४५म् ॥

दी. २१. उ. ३. मा. १७. ने. ॥६५४॥

३. [3]कौत्सायम ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीहोइ । वोअन्धसाः ॥ सुतायमाऽ३ । दायाऽ३इत्नाऽ५-याऽ६५६इ ॥ अपश्वानोहो । श्नथिष्टना ॥ सखायोदाऽ३इ । घाजाऽ३-

---

[1] एकाशीतिमुत्तरशततमसूक्ते गीयते ।

[2] अष्टोत्तरशिततमसूक्ते गीयते । [3] अध्याये सूक्ते द्वे सामनी गीयेते ।

इहाऽ५"याऽ६५६म् ॥ श्रीः ॥ सखायोदोहो । घाजिह्वियाम् । योवा-
रयाऽ३ । पावाऽ३काऽ५याऽ६५६ ॥ पग्निरस्योहो । दातेसुताः ॥ इन्दुर-
श्वोऽ३ । नाकाऽ३त्वाँऽ६"याऽ६५६ः ॥श्रीः॥ इन्दुरश्वोहो । नाक्रत्वियाः ॥
तन्दुरोपाऽ३स्म् । आभाऽ३इनाऽ५राऽ६५६ः ॥ सोमंविश्वोहो । चीयाधिया ॥
यज्ञायसाऽ३ । तूवाऽ३द्राऽ५"याऽ६५६ः ॥

दी. २६ उ. १२ मा. १६. खु. ॥६५५॥

४. गौतमम् ॥ गोतमः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअन्धसाः ॥ सुतायसा । दयित्नवाऽ२इ । अपा । औहो-
ऽ२३४वा । श्वान७श्नथिष्टनाऽ२३४५ ॥ सखा । औहोऽ२३४वा । योदा ।
औहोऽ२३४वा ॥ घजाऽ५इह्वियाम् ॥श्रीः॥ सखायोदीर्घजिह्वियाम् ॥ योवा-
रया । पावकयाऽ२ । परा । औहोऽ२३४वा । प्रस्यन्दतेसुताऽ१ः ॥ इन्दा ।
औहोऽ२३४वा । अश्वा । औहोऽ२३४वा ॥ नक्राऽ५त्वियाः ॥श्रीः॥ इन्दुर-
श्वोनक्रत्वियाः ॥ तन्दूरोपाम् । अभीनराऽ२ः । सोमा । औहोऽ२३४वा ।
विश्वाचियाधियाऽ१ ॥ यज्ञा ॥ औहोऽ२३४वा । यसा । औहोऽ२३४वा ॥
तुवाऽ६द्रयाः । होऽ६इ ॥डा॥ दी. २६, उ. ८ मा १३. नि. ॥६५६॥

५. [1]यज्ञसारथि ॥ कुत्सः । जगती । पवमानस्सोमः ॥

प्रोआयाऽ२३४सीत् । इन्दूराऽ२३४इन्द्रा । स्यानिष्कृताऽ३म् ।
होइ ॥ सखासाऽ२३४ख्यूः । नप्रामीऽ२३४ना । ताइसङ्गिराऽ३म् ।
होइ ॥ मर्याइऽ२३४वा । युवातीऽ२३४भाइः । सामर्यताऽ३इ । होइ ॥
सोमा४काऽ२३४ला । शेशाताऽ२३४या । मानापथाऽ३ । होऽ२३४५इ ॥
श्रीः ॥ प्रवोवीऽ२३४यो । मन्द्रायूऽ२३४वो । वाइपन्युवाऽ३ः । होइ ॥
पनास्यूऽ२३४वाः । संवाराऽ२३४णाइ । पूवक्रमूऽ३ः । होइ ॥ हराइंक्रा-

[1] एकोनषष्ट्युत्तरशततमसूक्ते गीयते ।



ऽ२३४इडा । नमास्याऽ२३४न् । पातस्तुभाऽ३ः । होइ ॥ अभाइर्षे-
ऽ२३४ना । व४पायाऽ२३४साइत् । आशिश्रयूऽ३ः । होऽ२३४५इ ॥
श्रीः ॥ आनास्माऽ२३४मा । संयाताऽ२३४म्पी । प्यूपोमिपाऽ३म् ।
होइ ॥ इन्दोपाऽ२३४वा । स्वपावाऽ२३४मा । नाऊमिशाऽ३ । होइ ॥
यानोदोऽ२३४हा । तेत्रीराऽ२३४हान् । आसश्चुपाऽ३इ । होइ ॥ सुमा-
हाऽ२३४जा । वन्माभूऽ२३४मान् । सुवीरियाऽ३म् । होऽ२३४५इ ॥डा॥

दी. १०. उ. न. मा. ४१. व. ॥६५७॥

६. [1]स्त्रौग्मतम् ॥ (सञ्जयम्) इन्द्रः । पङ्क्तिः । अग्निः ॥

आऽ२३४ । तेअग्नइधो । माहाइ ॥ द्युमन्तन्देवऽ३ । आऽ२३ ।
जरभा । यद्धास्याऽ३ताऽ३इ । पानीऽ२याऽ२३४सी । समिदीऽ२दय ।
ताऽ२३इ । घविया ॥ श्रीः ॥ आऽ२३४ । तेअग्नऋचा । हावाइः ॥
शुक्रस्यज्योतिऽ३ । पाऽ२३ः । पतआ । सुश्चान्द्राऽ३दाऽ३ । स्पवाऽ२-
इरपाऽ२३४ताइ । हव्यवाऽ२द्तुभ्यम् । हूऽ२३ । पतआ ॥ श्रीः ॥ ओ-
ऽ२३४ । भेसुश्चन्द्रवि । श्पाताइ ॥ दर्वीश्रीणोषेऽ३ । आऽ२३ । सनिया ।
उतोनाऽ३ऊऽ२३त् । पुपूऽ२राऽ२३४याः । उक्थेषूऽ२शव । साऽ२३ः ।
पतआ ॥ इषा७स्तोऽ३तूऽ२ ॥ स्याऽ२३आऽ३ । भाऽ३४५रोऽ६"हाइ ॥

दी. १२. उ. ३. मा. २३. जि. ॥६५८॥

७. [2]वासिष्ठम् ॥ वसिष्ठः । त्रिष्टुप् । पवमानस्सोमः ॥

हाइ । उहुवाइ । त्रिशाऽ३४औहोवा । जज्ञा । नाऽ३७हर्ष ।
तम्मृजन्ताइ ॥ शुम्भाऽ३४औहोवा । तिवाइ । भ्राऽ३भ्मरु । सोमयेना ॥
कवाऽ३४औहोवा । गीर्भाइः । काऽ३विये । नाकविस्तान् ॥ सोमाऽ३४-
औहोवा । पवाइ । भ्राऽ३नति । आऽ३४३इ । तोऽ३राऽ५इ"भाऽ६५६न् ॥

[1] षट्पञ्चाशदुत्तरशततमसूक्ते गीयते । [2] सप्तपञ्चाशदुत्तरशततमसूक्ते गीयते ।

श्रीः ॥ अपाऽ३४औहोवा । मनाः । याऽ३ऋपि । कृत्गुवर्पाः ॥ सहा-
ऽ३४औहोवा । स्वनाइ । थाऽ३ ४पद । वी ४कवीनाम् ॥ तृताऽ३४-
औहोवा । यन्था । माऽ३महि । पस्सिपासान् ॥ सोमाऽ३४औहोवा ।
विरा । जाऽ३मनु । गाऽ३४३ । जाऽ३ताऽ५इ "प्रूऽ६५६प् ॥ श्रीः ॥
चपुऽ३४औहोवा । पच्छ्याइ । नाऽ३शकु । नोविभृत्वा ॥ गोवाऽ३४-
औहोवा । दुद्रा । प्साऽ३आयु । घानिविभ्रान् ॥ अपाऽ३४औहोवा ।
ऊर्मीइम् । सचमा । नस्समुद्राम् ॥ हाइ । उहुवाइ । तुराऽ३४औहोवा ।
यन्वा । माऽ३महि । पोऽ३४३ । वाऽ२इवाऽ५ "क्ताऽ६५६इ ॥

दी. ३३. उ. १. मा. ४१. ट. ॥६५९॥

८. [1]ऊर्ध्वेडं त्वाष्ट्रीसाम ॥ त्वाष्ट्र्यः । अनुष्टुप् । पवमानस्सोमः ॥

परित्य ॰ हर्यत ॰ हराइम् ॥ बाभ्रूऽ२म्पुनाऽ२ । तिवाऽ३४५ ।
रेऽ२३४णा । योदेवान्विश्वा ॰ इत्पराऽ२३४५इ ॥ मदेनसा ॥ इगच्छा-
ऽ२३ताऽ३४३इ ॥ श्रीः ॥ द्वियंपञ्चस्वयशसाम् ॥ साखाऽ२योआऽ२ ।
द्रिसाऽ३४५ । हाऽ२३४ताम् । प्रियमिन्द्रस्यकामियाऽ२३४५म् ॥ प्रस्ना-
पया ॥ तऊर्मीऽ२३याऽ३४३: ॥ श्रीः ॥ इन्द्रायसोमपातवाइ ॥ वात्रीऽ२-
घ्नेपाऽ२ । रिषाऽ३४५इ । च्याऽ२३४से । नरेचदक्षिणावताऽ२३४५इ ॥
वीरायसा । दनासाऽ२३दाऽ३४३इ । ओऽ२३४५इ ॥डा॥

दी. १८. उ. ४. मा. १६. टू. ॥६६०॥

९. यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । अनुष्टुप् । पवमानस्सोमः ॥

पराऽ५इत्यम् । हाऽ३र्याऽ३त ॰ हाराइम् । बाभ्रुंपुना । तीऽ३वारे-
ऽ३णा । योदेऽ२वान् । विश्व ॰ ऽ२३आ । हुम्माइ ॥ पाऽ३२राइ ॥ मादेन-
सहगाऽ२च्छताउ ॥ श्रीः ॥ ताइद्वाइः ॥ यंपञ्चस्वयशस ॰ सखायोआ ।
द्रीऽ३सा ॰ हाऽ३ताम् । प्रियाऽ२मि । द्रस्याऽ२३का । हुम्माइ ॥ माऽ३२-

[1] चतुरुत्तरद्विशततमसूक्ते सामनी गीयेते ।



याम् ॥ प्राम्नापयन्तऊऽ२मंयाउ ॥श्रीः॥ योआइ ॥ द्रायसोमपातवेवृत्रघ्नेपा ।
रीऽ३पाइच्याऽ३साइ । नरेऽ२च । दक्षाऽ२३इणा । हुम्माइ ॥ वाऽ३ २ताइ ॥
वाइरायसदनाऽ२सदाउ ॥ वाऽ३४५ ॥ दी. १२. उ. न. मा. २७. ये. ॥६६१॥

१०. [1]पौरुमद्गम् ॥ गोतमः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया । औहोवा । एहिया । हाउ ॥ अपोवसाऽ२-
नोअर्पसि । आरत्नाऽ१धाऽ२ः । योनिमृताऽ३ । स्यासाइदाऽ२३४साइ ॥
उत्सो । द्वाइवोवाओऽ२३४वा ॥ हाऽ३हाइ । हिराऽ५ण्ययाः ॥ श्रीः ॥
उत्सोदेवोहिरण्ययः । औहोवा । एहिया । हाउ ॥ उत्सोदेवोऽ२हिरण्ययः ।
दुहानाऽ१ऊऽ२ । धार्दिवियाऽ३म् । माधुप्राऽ२३४याम् ॥ प्रत्नाम् ।
साधोवाओऽ२३४वा ॥ हाऽ३हा । स्थमाऽ५सदान् ॥ श्रीः ॥ प्रत्न ॰ सधस्थ-
मासदत् । औहोवा । एहिया । हाउ ॥ प्रत्न ॰ सधाऽ२स्थमासदत् ।
आपार्च्छोऽ१याऽ२म् । धारुणंवाऽ३ । जायपोऽ२३४साइ ॥ नृगाइः ।
धौतोवाओऽ२३४वा ॥ हाऽ३हाइ । विचाऽ५क्षणाः । होऽ५इ ॥डा॥

दी. २१. उ ८. मा. २९. गो. ॥६६२॥

११. आष्कारणिधनं काण्वम ॥ कण्वः । बृहती । पवमानस्सोमः ॥

पुनानाऽ३स्सोमधारया ॥ आपोवसा । नोअऽ२३र्षसाउ ।
वाऽ३२ । आरत्नधाः । योनिमृता । स्यसीदाऽ२३४साइ ॥ ऊऽ२३त्साः ॥
देवोहि । रण्याऽ२३४५याऽ६५६ः ॥ श्रीः ॥ उत्सोदाऽ३इवोहिरण्ययाः ॥
उत्सोदेवः । हिराऽ२३ण्ययाउ । वाऽ३२ । दुहानऊ । धार्दिवियाम् ।
मधुप्राऽ२३४याम् ॥ प्राऽ२३त्नाम् ॥ सधस्थम् ॥ आसाऽ२३४५दा-
ऽ६५६त् ॥ श्रीः ॥ प्रत्न ॰ साऽ३धस्थमासदाम् ॥ प्रात्न ॰ सध । स्थमाऽ२३-
सदाउ । वाऽ३२ । आपृच्छियाम् । धरुणंवा । जियपोऽ२३४साइ ॥

[1] नवमसूक्ते सामनी गीयेते ।

नुऽ२३भीः ॥ घोतोवि । नक्षाऽ२३४५णाऽ६५६ः ॥ आऽ२३४५प् ॥

दी. २१. उ. ९. मा. २३. वि. ॥६६३॥

१२. [1]निषेधः ॥ अङ्गिरसः । अनुष्टुप् । पवमानस्सोमः ॥

अभीनोवाजाऽ३सातमाम् ॥ रयाइमर्पा । शतस्पृहाऽ२म् । इहाऽ३ ॥ आइन्दोऽ३साहा । हाहोऽ२३४हा ॥ स्रभर्णाऽ२३साम् । इहाऽ३ ॥ तूवाऽ३इद्युम्नाम् । हाहोऽ२३४हा ॥ विभाऽ३साऽ५हाऽ६५६म् ॥ श्रीः ॥ वयन्तेअस्याऽ३राधसाः ॥ वसोर्वसाउ । पुरुस्पृहाऽ२ः । इहाऽ३ । नाइने-ऽ३दाइष्ठा । हाहोऽ२३४हा । तमाआऽ२३इपाः । इहाऽ३ ॥ स्यामा-ऽ३द्युम्नाइ । हाहोऽ२३४हा ॥ तेआऽ३आऽ६इगाऽ६५६उ ॥श्रीः॥ परिस्य-स्वानोऽ३अक्षरात् ॥ इन्दूरव्याइ । मदच्युताऽ२ः । इहाऽ३ ॥ धाराऽ३याऊ । हाहोऽ२३४हा ॥ ध्वोअध्वाऽ२३राइ । इहाऽ३ ॥ आजाऽ३नाया । हाहो-ऽ२३४हा ॥ तिगाऽ३व्याऽ५यूऽ६५६ः ॥ हेऽ२३४५ ॥

दी. १०. उ. ९. मा. २९. भो ॥६६४॥

१३. साध्रम् ॥ सध्रः । अनुष्टुप् । पवमानस्सोमः ॥

अभीनोऽ३वाजसातमाम् ॥ रयाइमर्पाऽ२ । शताऽ३४५ । स्पृ-ऽ२३४हाम् । इन्दोसहस्रभर्णसाऽ२३४५म् ॥ तूवाओऽ२३४वा । द्युम्नाओ-ऽ२३४वा ॥ विभाऽ५सहाम् ॥ श्रीः ॥ वयन्तेऽ३अस्यराधसाः ॥ वसो-र्वसाऽ२उ । पुरूऽ३४५ । स्पृऽ२३४हाः । निनेदिष्ठतमाइषाऽ१ः ॥ स्यामाओऽ२३४वा । द्युम्नाओऽ२३४वा ॥ तेआऽ५भिगाउ ॥ श्रीः ॥ परिस्याऽ३स्वानोअक्षरात् ॥ इन्दूरव्याऽ२इ । मदाऽ३४५ । च्यूऽ२३४ताः । धारायऊर्ध्वोअध्वराऽ१इ ॥ आजाओऽ२३४वा । नायाओऽ२३४वा ॥ तिगाऽ५व्ययूः । होऽ५इ ॥डा॥

दी. १४. उ. ३. मा. २८. दै. ॥६६५॥

[1] द्व्यशीत्युत्तरशततमसूक्ते त्रीणि सामानि गीयन्ते ।



१४ यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । अनुष्टुप् । पवमानस्सोमः ॥

अभाऽ५इनः । वाऽ३जाऽ३सातामाम ॥ रयिमर्पा । शाऽ३ता-स्पृऽ३हाम् । इन्दोऽ२स । हस्राऽ२३भा । हुम्माइ ॥ णाऽ३२साम् ॥ तूविद्युम्नंविभाऽ२सहाउ ॥ श्रीः ॥ हाम्बा ॥ यन्तेअस्यराधसोवसोर्वसाउ । पूऽ३रुस्पृऽ३हाः । निनेऽ२दि । ष्ठताऽ२३माः । हुम्माइ ॥ आऽ३२इपाः ॥ स्यामसुम्नंतेआऽ२भिगाउ ॥श्रीः॥ गोपा ॥ रिस्यस्वानोअक्षरदिन्दुरव्याइ । माऽ३दाच्युऽ३ताः । धाराऽ२यः । ऊर्ध्वोऽ२३आ । हुम्माइ ॥ ध्वाऽ३२राइ ॥ आजानयातिगाऽ२व्यायाउ ॥ वाऽ३४५ ॥ दी. १३. उ. न. मा. २४. री. ॥६६६॥

१५. [1]समन्तम् ॥ अग्निः । जगती । अग्निः ॥

इम॰स्तोममर्हतेजातवेदसाइ ॥ रथमिवसंमहेमामनीपया । भद्राहा-ऽ२३इनाः । प्रामतिरस्यस॰स । यग्नाइ ॥श्रीः॥ भरामेध्मंकृणवामाहवी॰-पिताइ ॥ चितयन्त×पर्वशापर्वणावयाम् । जीवातोऽ२३वाइ । प्रातरा॰साध-याथि । योग्नाइ ॥ श्रीः ॥ शकेमत्वासमिध॰साधयाधियाः ॥ त्वेदेवाहविर-दन्त्याहुताम् । तुवमाऽ२३दो । त्य॰आवहतान्ह्युशम । स्यग्नाहसाख्या । औहोऽ३४वाहाइ ॥ मा । राइपाऽ२३माऽ३ । होवाऽ३हाइ । वयन्ताऽ२३-वाऽ३४३ । औऽ२३४५इ ॥डा॥

दी. ३४. उ. ६. मा. १६. तु. ॥६६७॥

१६. [2]सोमसाम ॥ सोमः । बृहती । पवमानस्सोमः ॥

पुनानस्सोऽ२मधारया ॥ आपोऽ२वासाऽ२ । नोअर्पसी । आरा-ऽ२त्नाधाऽ२ः । योनिमातोऽ२ । स्यसीदसी ॥ उत्सोऽ२दाइवाऽ२ः ॥ हिरण्याऽ२३याऽ३४३ः ॥ श्रीः ॥ उत्सोदेवोऽ२हिरण्ययाः ॥ उत्सोऽ२-दाइवोऽ२ । हिरण्ययाः । दुहाऽ२नाऊऽ२ । धर्दिवायाऽ२म् । मधुप्रियाम् ॥ प्राताऽ२॰साधाऽ२ ॥ स्यमामाऽ२३दाऽ३४३त् ॥ श्रीः ॥ प्रत॰सधाऽ२-

[1] पञ्चाशीत्युत्तरशततमसूक्ते गीयते ।    [2] नवमसूक्ते गीयते ।

नम । नृनम । प्र । मिमीतः । गमिष्ठा । अग्नि । नूनम । अश्विना । उपस्तुता । ऊ । मुना । इदं । दिवा । अभिपित्वे । अभि । पित्वे । अवसा । आगमिष्ठा । आ । गमिष्ठा । प्रति । अवर्तिम । दाशुषे । शम्भविष्ठा । शम । भविष्ठा ॥ उत । आ । यातम । संगवे । सम । गवे । प्रातः । प्रातः । अह्नः । अ । ह्नः । मध्यन्दिने । उदिता । उत । इता । सूर्यस्य । दिवा । नक्तम । अवसा । शन्तमेन । न । इदानीम । पीतिः । अश्विना । आ । ततान ॥

नासाम् ॥ कृतंप्रमिमीतो । गमाऽ३इष्ठा । अग्निनूनाम् । अश्विनो । पस्तुतेहा । दिवाभिपित्वेवसा । गमाऽ२३इष्ठा ॥ प्रत्यवर्ताइम् ॥ दाशुषे । शाऽ३४३म् । भाऽ३वाऽ५इ"ष्ठाऽ६५६ ॥श्रीः॥ ऊता ॥ यातꣳसङ्गवेप्रा । तराऽ३ह्नाः । मध्यन्दिनाइ । उदिता । सूरियस्या । दिवानक्तमवसाशा । तमेऽ२३ना ॥ नेदानींपाइ ॥ तिरश्वि । नाऽ३४३ । ताऽ३ताऽ५"नाऽ६५६॥

दी. २४. उ. ११. मा. २०. तौ. ॥७२८॥

११. [१]आशुभार्गवम् ॥ भृगुः । गायत्री । पवमानस्सोमः ॥

उच्चाते । जातमन्धाऽ३साः ॥ दाइविसद्भूऽ३ । मायाऽ२दा-ऽ२३४दाइ ॥ उग्राꣳशाऽ१र्माऽ२३॥ महाऽ३इ । श्रोऽ२३४वोऽ६"हाइ ॥श्रीः॥ सनइ । द्राययज्याऽ३वाइ ॥ वारुणायाऽ३ । मारूऽ२द्भ्राऽ२३४याः ॥ वराइवोऽ१वीऽ२३त् ॥ पराऽ३इ । स्ताऽ२३४वोऽ६"हाइ ॥ श्रीः ॥ एना-विश्वानि । अर्याऽ३आ ॥ द्युम्नानीऽ३ । मानूऽ२षाऽ२३४णाम् ॥ सिषा-साऽ१न्ताऽ२३ः ॥ वनाऽ३ । माऽ२३४होऽ६"हाइ ॥

दी. ९. उ. २. मा. १६. धू. ॥७२९॥

१२. [२]सत्रासाहीयम् ॥ इन्द्रः । ककुप् । पवमानस्सोमः ॥

तुवाऽ३४स् । हियङ्गदेविय । ओऽ६वा ॥ पवमानजनिमानिद्यु-मत्ताऽ२माः । आऽ२मा । ताऽ२३त्वा ॥ यघोऽ३हो । वाहाऽ३४३इ ॥



षाऽ२३४योऽ६"हाइ ॥ श्रीः ॥ अमाऽ३४ । तात्वायघोषयन् । ओऽ६वा ॥ येनानवग्वादध्यङ्ङपोर्णूऽरताइ । याऽ२इना । वाऽ२३इप्रा ॥ मर्याऽ३हो । वाहाऽ३४३इ ॥ षाऽ२३४इगोऽ६"हाइ ॥श्रीः॥ येनाऽ३४ । विप्रासआपिरे । ओऽ६वा ॥ देवानाꣳसुम्नेअमृतस्यचारूऽ२णाः । याऽ२इना । श्राऽ२३वा ॥ सियोऽ३हो । वाहाऽ३४३इ ॥ शाऽ२३४तोऽ६"हाइ ॥

दी. २५. उ. न. मा. १८. वे. ॥७३०॥

१३. [१]श्रुध्यम् ॥ प्रजापतिः । उष्णिक् । पवमानस्सोमः ॥

पवस्वदाऽ२इव । वीतयोवा ॥ इन्दोधारा । भिरोजसा । आकल-शंमधुमान्त्सोम । नाऽ२३ः । सदाउवा ॥ श्रुधियाऽ२ ॥ श्रीः ॥ तव-द्रप्साऽ२उ । दमुतोवा ॥ इन्द्रंमदा । यवावृधुः । त्वान्देवासोअमृताय । काऽ२३म् । पपाउवा ॥ श्रुधियाऽ२ ॥ श्रीः ॥ आनस्सुताऽ२सः । इन्दवोवा ॥ पुनानाधा । वतारयाइम् । वृष्टिद्यावोरीत्यापस्सु । वाऽ२३ः । विदाउवा ॥ श्रुधियाऽ२ ॥ एऽ२३दियाऽ३४३ । औऽ२३४५इ ॥डा॥

दी. २४. उ. ७. मा. १४. धी. ॥७३१॥

१४. [२]वैधृतं वासिष्ठम् ॥ वसिष्ठः । जगती । पवमानस्सोमः ॥

अभिप्रियाणीऽ२ । प । वताऽ२इ । चनोहाऽ२३४इताः ॥ नामा-नियाहोऽ२ । अ । धियाऽ२इ । पुनर्द्धीऽ२३४ताइ ॥ आवरियास्याऽ२ । वृ । हतोऽ२ । बृहन्नाऽ२३४धाइ ॥ रथंविष्वाश्चाऽ२म् । अ । रुहाऽ२३त् । विचाऽ३क्षाऽ५"णाऽ६५६ः ॥श्रीः॥ ऋतस्यजाइह्वाऽ२ । प । वताऽ२इ । मधुप्राऽ२३४याम् ॥ वक्तापतिर्धीऽ२ । यः । अस्याऽ२ः । अदाभ्या-ऽ२३४याः ॥ दधातिपुत्राऽ२ः । पि । त्रोऽ२ः । अपीच्याऽ२३४याम् ॥ नामतृताइयाऽ२म् । अ । धिरोऽ२३ । चनाऽ३न्दाऽ५इ"वाऽ६५६ः ॥श्रीः॥

[१] अष्टमसूक्ते गीयते । [२] षष्ठसूक्ते गीयते ।

[१] अनुतरङ्गितपवमानसूक्ते गीयते । [२] एकोनविंशसूक्ते गीयते ।

३५८. गोतमो राहूगणः । जगती । उषाः ॥

११०५. एता उ त्या उषसꣳकेतुमक्रत पूर्वे अर्द्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवꣳप्रति गावोऽरुषीर्यन्ति मातरः ॥१॥

३५८. एताः । उ । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्द्धे । रजसः । भानुम् । अञ्जते । निष्कृण्वानाः । निः । कृण्वानाः । आयुधानि । इव ।

अवद्युतानाऽ२ः । क । लश ऽ२ । अचाइक्राऽ२३४दात् ॥ नृभिर्ये-माणाऽ२ः । को । शश्राऽ२ । हिरण्याऽ२३४याइ ॥ अभीक्ष्नतास्याऽ२ । दो । हनाऽ२ः । अनूपाऽ२३४ता ॥ अघित्रिपार्ष्ठाऽ२ः । उ । पसोऽ२३ । विराऽ३जाऽ५''साऽ६५६इ ॥ दी. ११. उ. १२. मा. ३४. खी. ॥७३२॥

१५. [1]कावानि ॥ कविः । जगती । अग्निः ॥

जनोवा ॥ स्यगोपाअजनाइ । प्रजागृवाऽ२इः । अग्निस्सुदक्षस्सु-विता । यनव्यासाऽ२इ । घृतप्रतीकोबृहता । दिविस्पृशाऽ२३ ॥ द्युमा-ऽ३द्वाइभा ॥ तिभराताऽ२३इ । भायाऽ३श्शूऽ५''चाऽ६५६इः ॥श्रीः॥ तुयोवा ॥ अग्नेअङ्गिरसो । गुहाहाइताऽ२म् । अन्वविन्दञ्छिश्रियाणाम् । वनेवानाऽ२इ । सजायसेमथ्यमानाः । सहोमाहाऽ२३त् ॥ तुवाऽ३माहुः ॥ सहसास्पूऽ२३त्र ॥ श्रा ऽ३ङ्गाऽ५इ''राऽ६५६ः ॥श्रीः॥ यज्ञोवा ॥ स्यकेतुं-प्रथमाम् । पुरोहाइताऽ२म् । अग्निन्नरस्त्रिषधस्थाइ । समिन्धाताऽ२इ । इन्द्रेणदेवैस्सरथाम् । सबर्हाइषाऽ२३इ ॥ साइदाऽ३न्नाइहो ॥ तायजाथा-ऽ३ । याम्रूऽ३क्राऽ५''तूऽ६५६ः ॥ दी. १९. उ. १५. मा. ३१. न. ॥७३३॥

१६. कविः । जगती । उषाः ॥

एतोवा ॥ उत्याउषसꣳकाइ । तुमक्राताऽ२ । पूर्वेअर्द्धेरजसोभा । नुमञ्जाताऽ२इ । निष्कृण्वानाआयुधानाइ । वधृष्णावाऽ२३ः ॥ आताऽ३-

[1] एकोननवतितमसूक्ते गीयते ।

११०६. उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥२॥

११०७. अर्चन्ति नारीरपसो न विष्टिभिस्समानेन योजनेना परावतः ।
इषं वहन्तीस्सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥३॥
धा. २६. उ. १. स्व. ३. कि. ॥१६॥

३५९. दीर्घतमा औचथ्यः । जगती । अश्विनौ ॥

११०८. अबोध्यग्निर्ज्म उदेति सूर्यो व्युऽ३षाश्चन्द्रा मह्यावो अर्चिषा ।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवस्सविता जगत्पृथक् ॥१॥

धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ॥ उत् । अपप्तन् । अरुणाः । भानवः । वृथा । स्वायुजः । सु । आयुजः । अरुषीः । गाः । अयुक्षत । अक्रन् । उषासः । वयुनानि । पूर्वथा । रुशन्तम् । भानुम् । अरुषीः । अशिश्रयुः ॥ अर्चन्ति । नारीः । अपसः । न । विष्टिभिः । समानेन । सम् । आनेन । योजनेन । आ । परावतः । इषम् । वहन्तीः । सुकृते । सु । कृते । सुदानवे । सु । दानवे । विश्वा । इत् । अह । यजमानाय । सुन्वते ॥

३५९. अबोधि । अग्निः । ज्मः । उत् । एति । सूर्यः । वि । उषाः । चन्द्रा । मही । आवः । अर्चिषा । आयुक्षाताम् । अश्विना । यातवे । रथम् ।

इगावाः । अरुपाइर्याऽ२३ । ताइमाऽ३ताऽ५''राऽ६५६ः ॥श्रीः॥ उदोवा ॥ अपप्तन्नरुणाभा । नवोवार्थाऽ२ । स्वायुजोअरुषीर्गाः । अयुक्षाताऽ२ । अक्रन्नुषासोवयुना । निपूर्वथाऽ२३ ॥ रुशाऽ३न्तांभा ॥ नुमरूषाऽ२३इः । श्राशाऽ३इश्राऽ५''यूऽ६५६ः ॥ श्रीः ॥ अर्चोवा ॥ तिनारीरपसो । नविष्टा-इभाऽ२इः । समानेनयोजनेना । परावाताऽ२ः । इषंवहन्तीस्सुकृताइ । सुदानावाऽ२३इ ॥ वाइश्वेऽ३दाहा ॥ यजमानाऽ२३ । याह्यऽ३न्वा-ऽ५''ताऽ६५६इ ॥ दी. २७. उ. १५. मा. २६. नू. ॥७३४॥

११०९. यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥२॥

१११०. अर्वाङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवन्धुरो मघवा विश्वसौभगश्शन्न आ वक्षद्द्विपदे चतुष्पदे ॥३॥

धा. २२. उ. २. स्व. २. छा. ॥१७॥

प्र। असावीत्। देवः। सविता। जगत्। पृथक्॥ यत्। युञ्जाथे इति। वृषणम्। अश्विना। रथम्। घृतेन। नः। मधुना। क्षत्रम्। उक्षतम्। अस्माकम्। ब्रह्म। पृतनासु। जिन्वतम्। वयम्। धना। शूरसाता। शूर। साता। भजेमहि॥ अर्वाङ्। त्रिचक्रः। त्रि। चक्रः। मधुवाहनः। मधु। वाहनः। रथः। जीराश्वः। जीर। अश्वः। अश्विनोः। यातु। सुष्टुतः। सु। स्तुतः। त्रिवन्धुरः। त्रि। वन्धुरः। मघवा। विश्वसौभगः। विश्व। सौभगः। शम्। नः। आ। वक्षत्। द्विपदे। द्वि। पदे। चतुष्पदे। चतुः। पदे॥

१७. कविः। जगती। अश्विनौ॥

अवोवा॥ धियग्निर्ज्मउदाइ। तिसूरायाऽ२ः। व्युपाश्चन्द्रामह्या। वोअचांइषाऽ२। आयुक्षातामश्विनाया। तवेराथाऽ२३म्॥ प्रासाऽ३वीदे॥ वस्सवाइताऽ२३। जागाऽ३त्पाऽ५''थाऽ६५६क्॥ श्रीः॥ यद्योवा॥ जाथेवृषणमा। श्विनाराथाऽ२म्। घृतेननोमधुनाक्षा। त्रमुक्षाताऽ२म्। अस्माकंब्रह्मपृतना। सुजिन्वाताऽ२३म्॥ वायाऽ३न्धाना॥ शूरसाता-ऽ२३। भाजाऽ३इमाऽ५"हाऽ६५६इ॥ श्रीः॥ अवोवा॥ त्रिचक्रोमधुवा। हनोराथाऽ२ः। जीराश्वोअश्विनोर्या। तुसुष्टूताऽ२ः। त्रिवन्धुरोमघवावाइ। श्वसौभागाऽ२३ः॥ शान्नाऽ३आवा॥ क्षद्द्विपादाऽ२३इ। चातूऽ३-ष्पाऽ५"दाऽ६५६इ॥

दी. २६. उ. १५. मा. २१. ङ. ॥७३५॥

१८. [1]कण्वरथन्तरम्॥ कण्वः। बृहती। पवमानस्सोमः॥

पारीतोषिञ्चतासुताम्॥ सोमोयऊ। ताऽ३मा०हाऽ३वाइः।

[1] आद्यन्तवर्जमुत्तरवन्ततमनूक्तं गीयते।



दधन्वा०योनर्योअप्स्वन्तराऽ२३४ऐही॥ सुपानाऽ२३४सो॥ समाऽ३१-उवाऽ२३॥ एऽ३। द्रिभिरा॥ श्रीः॥ सुपावसोमभद्रिभाइः॥ सुपावसो। माऽ३माद्राऽ३इभाइः। नूनंपुनानोअविभिष्परिस्रवाऽ२३४ऐही॥ अदब्धा-ऽ२३४स्सु॥ रभाऽ३१उवाऽ२३॥ एऽ३। तरआ॥ श्रीः॥ आदब्धस्सुर-भिन्तरः॥ अदब्धस्सु। राऽ३भाइन्ताऽ३राः। सुतेचित्वाप्सुमदामोअन्ध-साऽ२३४ऐही॥ श्रीणन्तोऽ२३४गो॥ भिरूऽ३आउवाऽ२३॥ एऽ३। तरमा॥

दी. २६. उ. ९. मा. २३. चि. ॥७३६॥

१९. [1]सौभरम्॥ सुभरिः। उष्णिक्। इन्द्रः॥

तंताऽ३इमाऽ३दंगृणीमसोवा॥ वृषणंपृक्षुसासाऽ२हाइशुलोऽ२३। हो। काऽ२३४क्॥ त्वमद्रिवः। हराऽ३इह्राऽ३इ॥ आऽ२याऽ२३४-औहोवा॥ श्रीः॥ येनाऽ३ज्योऽ३ती०षिआयवोवा॥ मनवेचविवेदाऽ२३-थामन्दाऽ२३। हो। नोऽ२३४आ॥ स्यपर्हिषः। विराऽ३हाऽ३इ॥ जाऽ२साऽ२३४औहोवा॥श्रीः॥ तदाऽ३द्याऽ३चित्तउक्थिनोवा॥ अनुष्टु-वन्तिपूर्वाऽ२थावृषाऽ२३। हो। पाऽ२३४तीः॥ अपोजया। दिवेऽ२हा-ऽ३इ॥ दाऽ२इवाऽ२३४औहोवा॥ ऊऽ२३४५॥

दी. १६. उ. न. मा. १७. हे. ॥७३७॥

२०. [2]माधुच्छन्दसम्॥ मधुच्छन्दाः। बृहती। पवमानस्सोमः॥

पुनानस्सो। हो। मधारयाऽ६प्॥ अपोवसा। नोअर्षाऽ२३४-साइ। आरत्नधायोनिमृत। स्यसाइदासा। औहोऽ३४वाहाइ॥ उत्सोदा-इवा। औहोऽ३४वाहाइ॥ हिरण्याऽ२३याऽ३४३ः। ओऽ२३४५इ॥डा॥

दी. १०. उ. ५. मा. ९. गो. ॥७३८॥

तृतीयो विंशः॥

एकोनविंशस्याद्धेः प्रपाठकः॥

[1] वृषदीप्तिवनुक्ते गीयते। [2] ... प्रथमस्तोत्रीयायां गीयते।

१. [1]भरद्वाजस्य पृश्नि ॥ भरद्वाजः । बृहती । पवमानस्सोमः ॥

तवाहाऽ२३ ऽसोमरारणहाउ ॥ सख्यइन्दोदिवेदिवे । पुरूणाऽ१-
ण्वाऽ२३ । हौवाऽ३हा । श्रोनिचर । तिमामाऽ१वाऽ२३ । हौवाऽ३हाइ ॥
पराइघाऽ१इ ऽराऽ२३ । हौवाऽ३हाइ ॥ ताइताऽइहि । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५इ ॥डा॥ दी. ६. उ. ३. मा. १०. गौ. ॥७३९॥

२. [2]मार्गीयवम् ॥ मृगयुः । गायत्री । पवमानस्सोमः ॥

अप्सोहोवा ॥ आइन्द्राऽ२ । यवायाऽ२३४वाइ । वरुणाय ।
मरुद्भ्याऽ१याऽ२ः ॥ सोमाः । हा । औऽ३होइ । आऽ२३४र्षा ॥ तूऽ२-
वाऽ२३४औहोवा ॥ एऽ३ । ण्णवाऽ२३४५इ ॥
दी. ६. उ. २. मा. ७. खे. ॥७४०॥

३. [3]अग्नेस्त्रिणिधनम् ॥ अग्निः । सतोबृहती । पवमानस्सोमः ॥

अनूपेगो ॥ सान्गोभाइराऽ२३४क्षाः । सोमोदुग्धाभिराऽ३१-
उवाऽ२३ । आऽ२३४क्षाः ॥ सामुद्राऽ२३४न्ना ॥ संवरणानियाऽ३१-
उवाऽ२३ । आऽ२३४ग्मान् ॥ सान्दीमाऽ२३४दा ॥ यतोऽ३आउवाऽ२३ ॥
शाऽ२३४ते ॥ दी. ८. उ. २. मा. ८. ठै. ॥७४१॥

४. [4]सन्तनि ॥ देवाः । पङ्क्तिः । इन्द्रः ॥

इन्द्रोहाउ ॥ भादायवाऽ३१उवाऽ२३ । वाऽ२३४धे । शवसे-
वृत्रहानृभिस्तसिन्महत्स्वाजिषूतिमर्भेहवामहाऽ२३४५इ ॥ सवाहाउ ॥ जाइ-
षुप्रनोऽ३आउवाऽ२३ । वाऽ२३४इषत् ॥ श्रीः ॥ असिहिवीरसेन्योसिभूरि-
परादिदरसिदभ्रस्यचिद्वृधोयजमानायशिक्षसाऽ२३४५इ ॥ सुन्वाहाउ ॥

[1] चतुर्नवतितमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[2] षोडशाधिकशततमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[3] सप्तदशाधिकशततमसूक्तस्य द्वितीयायामृचि गीयते ।
[4] एकोनविंशत्युत्तरशततमसूक्ते गीयते ।



ताइभृग्वताऽ३१उवाऽ२३इ ॥ वाऽ२३४स्तु ॥ श्रीः ॥ यदुर्दाग्नआजयोधृष्ण-
वेधीयतेधनंयुंक्ष्वामदच्युताहरीकऽहन ऽकंवसौदधाऽ२३४५ः ॥ अस्मान्हाउ ॥
आइन्द्रवसाऽ३१उवाऽ२३ ॥ दाऽ२३४धाः ॥
दी. २६. उ. न. मा. २०. ही. ॥७४२॥

५. [1]अङ्गिरसां गोष्ठः ॥ अङ्गिरसः । सतोबृहती । पवमानस्सोमः ॥

हाउहाउहाउवा । पुनानोवारेपवमानोअव्यये । इहा । उपाऽ२३४५ ॥
वृषोअचिक्रदद्वने । इहा । उपाऽ२३४५ ॥ देवानाऽसोमपवमाननिष्कृतम् ।
इहा । उपाऽ२३४५ ॥ हाउहाउहाउवा । गोभिरञ्जानोअर्षसि । इहा ।
उपाऽ२३४५ ॥ दी. १७. उ. २. मा. १०. छौ. ॥७४३॥

६. [2]मार्गीयवम् ॥ मृगयुः । गायत्री । पवमानस्सोमः ॥

तन्त्वौहोवा ॥ धार्ताऽ२ । रमोणाऽ२३४यो: । पवमान ।
सुवार्दृऽ१शाऽ२म् ॥ हिन्वे । हा । औऽ३होइ । वाऽ२३४जाइ ॥
पूऽ२वाऽ२३४औहोवा ॥ एऽ३ । जिनाऽ२३४५म् ॥
दी. ५. उ. २. मा. ६. फू. ॥७४[illegible]॥

७. [3]सन्तनि ॥ देवाः ॥ बृहती । इन्द्रः ॥

वयाऽहाउ ॥ घात्वासुताऽ३१उवाऽ२३ । वाऽ२३४न्ताः । आपो-
नवृक्तबर्हिषऽपवित्रस्यप्रस्रवणेषुवृत्रहाऽ२३४५न् ॥ पराइहाउ ॥ स्तोतार-
आऽ३१उवाऽ२३ ॥ माऽ२३४ते ॥ श्रीः ॥ स्वरन्तित्वासुतेनरोवसोनिरेक-
उक्थिनऽकदासुतन्तृपाणओकआगमाऽ२३४५ः ॥ इन्द्राहाउ ॥ स्वाब्दी-
वधाऽ३१उवाऽ२३ । माऽ२३४गाः ॥ श्रीः ॥ कण्वेभिर्धृष्णवाधृषद्वाजन्दर्षि-

[1] चत्वारिंशदुत्तरशततमसूक्तस्य द्वितीयस्यामृचि गीयते ।
[2] पञ्चपञ्चाशदुत्तरशततमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।
[3] षट्सप्ततितमसूक्ते गीयते ।

सहस्रिणंपिशङ्गरूपंमघवन्विचर्षणाऽ२३४५इ । मक्षूहाउ ॥ गोमन्तमाऽ३१-
उवाऽ२३इ । माऽ२३४हे ॥ दी. १९. उन्. न. मा. १९. लो. ॥७४५॥

८. [1]अच्छिद्रम् ॥ विश्वामित्रः । बृहती । पवमानस्सोमः ॥

प्रहिन्वानाः । ऋताऽ३१उवाऽ२३ । बृऽ२३४हात् । प्रहिन्वान-
ऋतंबृहाऽ१त् ॥ प्रहिन्वानाः ॥ ऋताऽ३१उवाऽ२३ । बृऽ२३४हात् ।
नृभिर्येमाणोहर्यतोविचक्षणाऽ१ः ॥ नृभिर्येमा ॥ णोहर्य । तः । विचा-
ऽ३१उवाऽ२३ । क्षाऽ२३४णाः । राजादेवस्समुद्रियाऽ१ः ॥ राजादेवाः ॥
समूऽ३आउवाऽ२३ । द्रीऽ२३४याः ॥ दी. १५. उ. १. मा. १७. पे. ॥७४६॥

९. [2]त्र्यन्तं त्वाष्ट्रीसाम ॥ त्वाष्ट्रश्वः । अनुष्टुप् । पवमानस्सोमः ॥

अभीनोवा ॥ जसाऽ३तमाम् । स्याइमर्षाऽ३शताऽ३ । एऽ३ ।
स्पृहमा ॥ इन्दोसहाऽ३"स्रभाऽ३ । एऽ३ । णसमा । तुवाइद्युम्नाऽ३"म्वि-
भाऽ३ । एऽ३ । सहमा ॥ दी. २. उ. न. मा. ३. यि. ७४७॥

१०. [3]इडानाᳲसंक्षारः ॥ इडा । गायत्री । पवमानस्सोमः ॥

औहोइहुवाऽ३होइ ॥ हिन्वन्तिसूऽ३राऽ३मुस्रयः ॥ स्वसारोजाऽ३-
माऽ३यस्पतिम् ॥ महामाऽ२३४इन्दूम् ॥ महीयुवः । इडाऽ२३ ॥ श्रीः ॥
पवमानाऽ३रूऽ३चारुचा ॥ देवदेऽ३वेऽ३भ्यस्सुतः ॥ विश्वावाऽ२३४सू ॥
नियाविश । इडाऽ२३॥श्रीः॥ आपवमाऽ३नाऽ३सुष्टुतिम् ॥ वृष्टिन्देऽ३वेऽ३-
भ्योदुवः ॥ औहोइहुवाऽ३होइ । इषाइषाऽ२३४वा ॥ स्वसंयतम् । इडा-
ऽ२३भाऽ३ । एहीडा । होऽ५इ ॥डा॥ दी. १४. उ. ३. मा. १५. दु. ॥७४८॥

११. [4]प्रतीचीनेडं काशीतम ॥ काशीतः । गायत्री । पवमानस्सोमः ॥

उपोषुजातम् । आऽ२प्तुरम् ॥ गोभिर्भङ्गम् । पराइष्कृताऽ२३४म् ।

[1] त्रिसप्ततितमसूक्तस्य द्वितीयस्याश्चतुर्थपादे द्विपदाविराजि च गीयते ।
[2] द्व्यशीत्यधिकशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[3] अष्टाशीतितमसूक्ते गीयते ।
[4] पञ्चविंशद्विशततमसूक्ते गीयते ।





हाहोइ ॥ इन्दुर्देवाआऽ३या ॥ सिषूः । औऽ२३होवा ॥ श्रीः ॥ तमिद्व-
र्धन्तु । नोऽ२गिराः ॥ वात्सᳲसᳲशि । श्वगाइश्विाऽ२३४ । हाहोइ ॥
यइन्द्रस्याहाऽ३र्दाम् ॥ मनाइः । औऽ२३होवा ॥ श्रीः ॥ अर्षानस्सोम ।
शाऽ२ङ्गवाइ ॥ भूद्धस्वपि । प्युपाइमिषाऽ२३४म् । हाहोइ ॥ वर्षा-
समूद्राऽ३मू ॥ विश्वया । औऽ३होवा ॥ ईडा ॥
दी. ९. उ. ६. मा. १९. तो ॥७४९॥

१२. [1]गौरीवितम् ॥ गौरीवितिः । बृहती । पवमानस्सोमः ॥

उत्सः । देवोऽ३ । हिरण्ययाः ॥ उत्सोदेवोहिरण्ययाऽ२३ः ।
दूहानऊऽ३१२३ । धर्दिवियंमधूऽ५प्रियाम् ॥ प्रत्नᳲसधाऽ३१२३ ॥
स्थमोवा । साऽ५दोऽ६"हाइ ॥ दी. ५. उ. न. मा. ६. वृ. ॥७५०॥

१३. [2]यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । त्रिष्टुप् । पवमानस्सोमः ॥

आजाऽ५गृ । वाऽ३इर्वाऽ३इग्रन्ऋतान् ॥ मातीनाᳲसोम ᳲपुनानो-
असा । दाऽ३चामूऽ३षू । सपाऽ२न्तियभ्मिथुनानोनि । कामाऽ२३आ ।
हुम्माइ । ध्वाऽ३२यी ॥ वीरधिरासस्मूऽ२हस्ताउ ॥ श्रीः ॥ तास्माः ॥
पुनानउपह्वरेदधानओभेअप्रारोदसी । वीऽ३षाआऽ३वाः । प्रियाऽ२चिदस्य-
प्रियसासः । ऊतीऽ२३सा । हुम्माइ ॥ तोऽ३२वा ॥ नाकारिणिनप्राऽ२-
यᳲसाउ ॥श्रीः॥ सात्साः ॥ वर्धिताबर्धनᳲपूयमानस्सोमोमीढ्वाᳲअभिनो ।
ज्योऽ३तीषाऽ३वीत् । यत्राऽ२नᳲपूर्वेपितरᳲप । दक्षाऽ२३स्व । हुम्माइ ॥
वाऽ२३र्वाइ ॥ दोयभिर्गागद्राऽ२इमिष्णाउ ॥ वाऽ३४५ ॥
दी. ३२. उ. न. मा. २६. पू. ॥७५१॥

१४. [3]कण्वरथन्तरम् ॥ कण्वः । बृहती । पवमानस्सोमः ॥

पावमानाभियर्षसाइ ॥ पवमाना । भाऽ३यार्षाऽ३साइ । पुनानो-

[1] नवमसूक्तस्य द्वितीयस्तोत्रीयायां गीयते ।
[2] अष्टोत्तरशततमसूक्ते गीयते ।
[3] चत्वारिंशदधिकशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

वारेपवमानोअव्ययाऽ२३४ण्ही ॥ वृषोआऽ२३४चाइ ॥ क्रदाऽ३१उवा-
ऽ२३ ॥ एऽ३ । वनआ ॥ दी. १२. उ. ३. मा. ८. जै. ॥७५२॥

१५. [1]आभीकम ॥ अङ्गिरसः । गायत्री । पवमानस्सोमः ॥

प्राऽ२३४सोमासोऽ५ । विपोहोआइताः ॥ अपोनयन्तऊऽ१र्मा-
ऽ३याः ॥ वनानाऽ२३४इसा ॥ हाइयाऽ३२उवाऽ३४३ । आऽ३४५इ-
वोऽ६"हाइ ॥श्रीः॥ आऽ२३४भिद्रोणाऽ५ । निवोहोआवाः ॥ शुक्रास्ऋतस्य-
धाऽ१राऽ३या ॥ वाजङ्गोऽ२३४सा ॥ तासाऽ३२उवाऽ३४३ । क्षाऽ३४५-
गोऽ६"हाइ ॥ श्रीः ॥ सूऽ२३४ताइन्द्राऽ५ । यवोहोयावाइ ॥ वरुणा-
यमरुऽ१द्भ्याऽ३याः ॥ सोमाआऽ२३४र्षा ॥ तूवाऽ३२उवाऽ३४३इ ।
ष्णाऽ३४५वोऽ६"हाइ ॥ दी. १४. उ. न. मा. २०. लौ. ॥७५३॥

१६. ऐड०सौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

प्रसोमासोवा ॥ वाइपश्चाऽ२३४इताः । अपोनया । तऊऽर्मा-
ऽ२३४याः ॥ वाऽ२ना । नाऽ२३इमा ॥ हाइपाइवा । औऽ३होवा ॥श्रीः॥
अभिद्रोणोवा ॥ नाइवआऽ२३४वाः । शुक्रास्ऋता । स्यधाऽ२राऽ२३४या ॥
वाऽ२जाम् । गोऽ२३मा ॥ तामक्षरान् । औऽ२३होवा ॥ श्रीः ॥ सुता-
इन्द्रोवा ॥ यावायाऽ२३४वाइ । वरुणाया । मरुऽ२द्भ्याऽ२३४याः ॥
सोऽ२माः । आऽ२३र्षा ॥ तूविष्णवा । औऽ३होवा । होऽ५इ ॥डा॥
दी. ६. उ. ६. मा. १८. कै. ॥७५४॥

१७. [2]द्विहिङ्कारवामदेव्यम् ॥ वामदेवः । बृहती । पवमानस्सोमः ॥

प्रसोमाऽ२३देववीतयाइ ॥ साइन्धुर्नपिप्येअर्णसा०शो४पयसाय-
दिरोनजोहोऽ३ । हुम्माऽ२ । गृऽ२३वीः ॥ अच्छाकोशम्मधोहोऽ३ ।
हुम्माऽ२ ॥ श्चुताम् । औऽ२३होवा ॥ श्रीः ॥ अच्छाकोऽ२३शम्म-

[1] द्विचत्वारिंशसूक्ते द्वे सामनी गीयेते ।
[2] त्रिचत्वारिंशत्तमसूक्ते गीयते ।



धुश्चुताम् ॥ आच्छाकोशंमधुश्चुतमाहर्यनोअर्जुनोआत्कओहोऽ३ । हुम्माऽ२ ।
व्याऽ२३ता ॥ प्रियस्सूनुर्नमोहोऽ३ । हुम्माऽ२ ॥ जिया । औऽ३होवा ॥
श्रीः ॥ प्रियस्सूऽ२३नुर्नमर्जियाः ॥ प्रायस्सूनुर्नमर्जियस्तमी०हिन्वन्त्यपसो-
यथोहोऽ३ । हुम्माऽ२ । गाऽ२३थाम् ॥ नदीषुवागमोहोऽ३ । हुम्माऽ२ ॥
स्तियोः । औऽ२३होवा । होऽ५इ ॥डा॥ दी. २५. उ. ६. मा. १३. पि. ॥७५५॥

१८. [1]शैशवम् ॥ शिशुः । गायत्री । पवमानस्सोमः ॥

स्वादिष्ठयामदिष्ठाया ॥ पवस्वसोमधारया ॥ इन्द्रायाऽ२३४पा ॥
तवाऽ३इसुऽ५"ताऽ६५६ः ॥श्रीः॥ रक्षोहाविश्वचर्षणाइः ॥ अभियोनिमयो-
हताइ ॥ द्रोणेसाऽ२३४धा ॥ स्थमाऽ३साऽ५"दाऽ६५६त् ॥श्रीः॥ वरिवो-
धातमोभूवाः ॥ म०हिष्ठोवृत्रहन्तमाः ॥ पर्षिराऽ२३४धाः ॥ माऽ३घो-
ऽ५"नाऽ६५६म् ॥ दी. १५. उ. ९. मा. १०. भौ. ॥७५६॥

१९. [2]वैश्वामित्रम् ॥ विश्वामित्रः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसुन्वानायअन्धसः । मर्तोनाऽ२३४वा ॥ ष्टाऽ३ताडाऽ३चाः ।
आपश्वानाऽ२३०हाऽ३इ । अराऽ२धाऽ२३४साम् ॥ हता । माखोवाओ
ऽ२३४वा ॥ नभृऽ५गवाः ॥श्रीः॥आजामित्त्केअव्यत । भुजाइनाऽ२३४पू ॥
त्राऽ३ओणाऽ२योः । सारजाराऽ२३हाऽ३ । नयोऽ२पाऽ२३४साम् ॥
वरो । नायोवाओऽ२३४वा ॥ निमाऽ५सदाम् ॥श्रीः॥ सवोरोदक्षसाधनः ।
विपास्ताऽ२३४स्ता ॥ भाऽ३रोदाऽ३साइ । हारि४पवाऽ२३हाऽ३इ ।
त्रेआऽ२व्याऽ२३४ता ॥ वेधाः । नायोवाओऽ२३४वा ॥ निमाऽ५सदाम् ।
होऽ५इ ॥डा॥ दी. ११. उ. न. मा. २२. हि. ॥७५७॥

२०. स्वारं कौत्सम् ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

प्रसुन्वानायाऽ३अन्धसाः ॥ मर्तोनिवष्टताऽ१हाऽ३चाः । आपश्वा-

[1] एकपदनी सूक्ते गीयते ।
[2] पञ्चाशदुत्तरद्विशततमसूक्ते त्रीणि सामानि गीयन्ते ।

नाऽ३म् । आऽ३राघाऽ३साम् ॥ आऽ२इ । हतामखोऽ२३४हाइ ॥ नभ्रू-
ऽ३गाऽ५"वाऽ६५६: ॥ श्रीः ॥ आजामिरत्केऽ३अव्यता ॥ भुजेनपुत्रओऽ१-
णाऽ३योः । सरज्जारोऽ३ । नाऽ३योपाऽ३शाम् ॥ आऽ२इ । वरोनयो-
ऽ२३४हाइ ॥ निमाऽ३साऽ"५दाऽ६५६म् ॥श्रीः॥ सवीरोदक्षाऽ३साधनाः ॥
वियस्तस्तम्भरोऽ१दाऽ३साइ । हरि ५पवाऽ३इ । त्रेऽ३आव्याऽ३ता ॥ आऽ२इ ।
वेधानयोऽ२३४हाइ ॥ निमाऽ३साऽ५"दाऽ६५६म् ॥
दी. १५. उ. न. मा. २२. वा. ॥७५८॥

चतुर्थो विंशः ॥

२१. औरुक्षयम् ॥ उरुक्षयः । अनुष्टुप् । पवमानस्सोमः ॥
प्रसुन्वानायअन्धसाः ॥ मर्तोनिवष्टतद्वाऽ२३चाः । अपश्वानमरा-
धाऽ२३साम् ॥ हतामखाऽ२म् ॥ नाऽ२भ्रू । गाऽ२ । याऽ२३४औहोवा ॥
वाऽ२३४५: ॥ श्रीः ॥ आजामिरत्केअव्यता ॥ भुजेनपुत्रओणाऽ२३योः ।
सरज्जारोनयोपाऽ२३शाम् ॥ वरोनयोऽ२ ॥ नाऽ२इमा । साऽ२ ।
याऽ२३४औहोवा ॥ दाऽ२३४५म् ॥श्रीः॥ सवीरोदक्षसाधनाः ॥ वियस्त-
स्तम्भरोदाऽ२३साइ । हरि ५पवित्रेअव्याऽ२३ता ॥ वेधानयोऽ२ ॥ ना-
ऽ२इमा । साऽ२ । याऽ२३४औहोवा । दाऽ२३४५म् ॥
दी. २७. उ. ३. मा २०. जो. ॥७५९॥

एकोनविंशः प्रपाठकः ॥

१. [1]हरिश्रीनिधनम् ॥ अङ्गिरसः । गायत्री । पवमानस्सोमः ॥
वृषापवस्वधारया । वृषापवा ॥ स्वधारयाऽ२ । मरुत्वतेचमाहोऽ२ ।
त्सारा२३: । हाउवा ॥ विश्वादाऽ२३धा ॥ नओ । जाऽ२साऽ२३४औहोवा ॥
श्रीः ॥ तन्त्वाधर्तारमोण्योः । तन्त्वाधर्ता । रमोण्योऽ२: । पवमान-
सुवाहोऽ२ । दृशाऽ२३म् । हाउवा ॥ हिन्वेवाऽ२३जाइ ॥ पुवा । जाऽ२-

[1] पञ्चपञ्चाशतमसूक्ते गीयते ।





इनाऽ२३४औहोवा ॥ श्रीः ॥ अयाचित्तोविपानया । अयाचित्तः । विपा-
नयाऽ२ । हरि ५पवस्वधाहोऽ२ । गयाऽ२३ । हाउवा ॥ युजांवाऽ२३जाइ ॥
पुचो । दाऽ२याऽ२३४औहोवा ॥ हरिऽ३श्रीऽ२३४५: ॥
दी. २८. उ. ४. मा. १६. तु. ॥७६०॥

२. [1]शान्मदम् ॥ शन्मन् । गायत्री । पवमानस्सोमः ॥
यस्तेमदोवरे । हीएहीऽ२३४या ॥ रेणियएऽ२हीएऽ२हीऽ३या ।
तेनापवस्वान्धसाएऽ२हीएऽ२हीऽ३या ॥ दाइवावाइराऽ३१२३ ॥ घशो-
ऽ२३४वा । नाऽ५होऽ६"हाइ ॥ श्रीः ॥ जघ्निर्वृत्रमए । हीएहीऽ२३४या ॥
मित्रियसेऽ२हीएऽ२हीऽ३या । सस्निर्वाजन्दिवेदिवएऽ२हीएऽ२हीऽ३या ॥
गोषाताइराऽ३१२३ ॥ धमोऽ२३४वा । आऽ५सोऽ६"हाइ ॥ श्रीः ॥
संमिश्लोअरुषे । हीएहीऽ२३४या ॥ योभुवएऽ२हीएऽ२हीऽ३या । सूपस्था-
भिर्नधेनुभिरेऽ२हीएऽ२हीऽ३या ॥ साइदाञ्छ्येनाइनाऽ३१२३: । नयो-
ऽ२३४वा । नाऽ५इमोऽ६"हाइ ॥ दी. १७. उ. ३. मा. २७. जे. ॥७६१॥

३. दावसुनिधनम् ॥ दावसुः । गायत्री । पवमानस्सोमः ॥
यस्तेमाऽ२३दोवरेणियोहाउ ॥ ताइनापव । स्वआन्धाऽ१साऽ२३ ।
होवाऽ३हाइ ॥ देवावाऽ१इराऽ२३ । होवाऽ३हाइ ॥ घशो ॥ माऽ२हा-
ऽ२३४औहोवा ॥ श्रीः ॥ जघ्निर्वाऽ२३त्रमसिन्त्रियहाउ ॥ सास्निर्वाजम् ।
दिवाइदाऽ१इवाऽ२३इ । होवाऽ३हाइ ॥ गोषाताऽ१इराऽ२३ । होवाऽ३हा ॥
घसाः । आऽ२साऽ२३४औहोवा ॥ श्रीः ॥ संमिश्लोऽ२३अरुषोभुवोहाउ ॥
सूपस्थाभिः । नधाइनूऽ१भाऽ२३इ: । होवाऽ३हाइ ॥ सोदाञ्छ्याऽ१इना-
ऽ२३: । होवाऽ३हाइ ॥ नयो । नाऽ२इमाऽ२३४औहोवा ॥ एऽ२ ।
दावसुऽ२३४५ ॥ दी. २१. उ. १०. मा. २८. कै. ॥७६२॥

[1] षष्टितमसूक्ते त्रीणि सामानि गीयन्ते ।

४. आश्वसूक्तम् ॥ आश्वसूक्तिः । गायत्री । पवमानस्सोमः ॥

आओहोवाहाइ । यस्तेमदाः ॥ वराइ । णियः । ऐहीयैहीऽ१ । ताइनापवस्वआन्धसा । ऐहीयैहीऽ१ ॥ आऽ२इ । दाइवाऽ२वाइराऽ२ ॥ वश । साऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ आओहोवाहाइ । जघ्निर्वृत्राम् ॥ अमाइ । त्रियम् । ऐहीयैहीऽ१ । सास्निर्वाजन्दिवाइदिवे । ऐहीयैहीऽ१ ॥ आऽ२इ । गोषाऽ२ताइराऽ२ ॥ श्वसाः । आऽ२साऽ२३४औहोवा ॥ श्रीः ॥ आओहोवाहाइ । संमिश्लोआ ॥ रुषो । भुवः । ऐहीयैहीऽ१ । सूपस्थाभिर्नधाइनुभिः । ऐहीयैहीऽ१ ॥ आऽ२इ । साइदाऽ२च्छ्याइनाऽ२ः ॥ नयो । नाऽ२इमाऽ२३४औहोवा ॥ शुक्रआहुताऽ२३४५ः ॥

दी. ३७. उ. ७. मा. ३५. कु. ॥७६३॥

५. [1]ऐडंकौत्सम् ॥ कुत्सः । अनुष्टुप् । पवमानस्सोमः ॥

अय७हीपूऽ२३ । पारयिर्भगईया ॥ सोम५पुनानोअर्षति । पातिर्विश्व । स्यभूमाऽ२३ना: ॥ वायाऽ३हा । स्याद्रोऽ३हा ॥ दसोऊऽ२३माऽ३४३इ ॥श्रीः॥ ससूहिमीऽ२३ । याअनूपतईया ॥ गावोमदायघृष्वयः । सोमास५क्रु । ण्वतेपाऽ२३थाः ॥ पावाऽ३हा । मानाऽ३हा ॥ सइन्दाऽ२३वाऽ३४३ः ॥श्रीः॥ यओहोजाऽ२३इ । छुस्तमाभरईया ॥ पवमानश्रवापियम् । या५पश्चच । पणीराऽ२३भाइ ॥ रायीऽ३७हाइ । याइनाऽ३हाइ ॥ वनामाऽ२३हाऽ३४३इ । औऽ२३४५इ ॥डा॥

दी. २२. उ. ६. मा. २१. च. ॥७६४॥

६. [2]सौमित्रम् ॥ सुमित्रः । गायत्री । पवमानस्सोमः ॥

उच्चातेजातमन्धसाऽ३ए ॥ दिविसद्भूमि । आऽ२१२३ । ददाऽ३४३इ ॥ ऊऽ२३ग्राम् ॥ शर्माऽ२औऽ२३ । महोवा । आऽ५वोऽ६"हाइ ॥ श्रीः ॥ सनइन्द्रायंयज्यवाऽ३ए ॥ वरुणायम । रूऽ२१२३ । द्भियाऽ२४३ः ॥ वाऽ२३गाइ ॥ वोवाऽ२औऽ२३ । परोवा ॥ साऽ५वोऽ६"हाइ ॥ श्रीः ॥ एनाविश्वान्यर्यआऽ३ए ॥ द्युम्नानिमा । नूऽ२१२३ । षाणाऽ३४३म् ॥ साऽ२३इषा ॥ सन्ताऽ२औऽ२३ । वनोवा । माऽ५होऽ६"हाइ ॥

दी. १३. उ. ५. मा. १७. णे. ॥७६५॥

७. ऐटतम् ॥ इटन्वा । गायत्री । पवमानस्सोमः ॥

उच्च । एऊच्चा ॥ तेजातम् । आऽ३ । ताऽ२माऽ२३४औहोवा । धाऽ२३४साः ॥ दिवाइमाऽ२३४द्भू ॥ मियाऽ३ । माऽ२याऽ२३४औहोवा । दाऽ२३४दे ॥ उग्रा७शाऽ२३४र्मा॥ महाऽ३इ । माऽ२हाऽ२३४औहोवा । श्राऽ२३४वाः ।।श्रीः॥ सनः । एसानाः ॥ इन्द्राय । याऽ३ । याऽ२याऽ२३४औहोवा । ज्याऽ२३४वे ॥ वरुणाऽ२३४या ॥ मरूऽ३ । माऽ२रूऽ२३४औहोवा । द्भीऽ२३४याः ॥ वराइवोऽ२३४वीन् ॥ परीऽ३इ । पाऽ२राऽ२३४औहोवा ॥ स्राऽ२३४वा ॥ श्रीः ॥ एन । एआइना ॥ विश्वानि । आऽ३ । नाऽ२आऽ२३४औहोवा । र्याऽ२३४आ । द्युम्नाऽ२३४नी ॥ मानूऽ३ । नाऽ२नूऽ२३४औहोवा । षाऽ२३४णाम् ॥ सिषासाऽ२३४न्ताः ॥ वनाऽ३ । वाऽ२नाऽ२३४औहोवा । माऽ२३४हे ॥

दी. २४. उ. न. मा. २७. हे. ॥७६६॥

८. धुरासाकमश्वम् ॥ साकमश्वः । गायत्री । पवमानस्सोमः ॥

उच्चातेजाऽ३ । हौऽ३होऽ३१ ॥ तमन्धसाऽ३ः । हौऽ३होऽ३१इ ॥ दिविसद्भूऽ३ । हौऽ३होऽ३१इ ॥ मियाददाऽ३इ । हौऽ३होऽ३१इ ॥ उग्र७शर्माऽ३ । हौऽ३होऽ३१इ ॥ महिश्रवाऽ३ः । हौऽ३होऽ३१२३४५इ ॥ डा ॥ श्रीः ॥ सनइन्द्राऽ३ । हौऽ३होऽ३१ । ययज्यवाऽ३इ । हौऽ३होऽ३१इ ॥ वरुणायाऽ३ । हौऽ३होऽ३१इ ॥ मरुद्भियाऽ३ः । हौऽ३होऽ३१इ ॥ वरिवोवोऽ३त् । हौऽ३होऽ३१इ ॥ परिस्रवाऽ३ । हौऽ३हो-ऽ३१इ ॥

[1] एकषष्टितमसूक्ते गीयते ।   [2] अष्टमसूक्ते चत्वारि सामानि गीयन्ते ।

ऽ३१२३४५इ ॥ डा ॥ श्रीः ॥ एनाविश्वाऽ३ । हौऽ३हौऽ३१ ॥ निअय-
आऽ३ । हौऽ३हौऽ३१इ ॥ द्युम्नानिमाऽ३ । हौऽ३हौऽ३१इ ॥ नुषाणाऽ३म् ।
हौऽ३हौऽ३१इ ॥ सिषासन्ताऽ३ः । हौऽ३हौऽ३१इ ॥ वनामहाऽ३इ ।
हौऽ३हौऽ३१२३४५इ ॥डा॥ दी. ११. उ. न. मा. २७. हे. ॥७६७॥

९. विलम्बसौपर्णम् ॥ सुपर्णः । गायत्री । पवमानस्सोमः ॥

उच्चातेजातमन्धसः । ईयइयाहाइ ॥ दिविसद्भूमिया । हाऽ३हाऽ३इ । दा-
ऽ२३४दाइ ॥ ऊग्राऽ३उवाऽ३ ॥ शाऽ२र्माऽ२३४औहोवा ॥ महिश्रवाऽ२३४५ः ॥
श्रीः ॥ सनइन्द्रायययज्यवे । ईयइयाहाइ ॥ वरुणायमरु । हाऽ३हाऽ३इ ।
द्भ्याऽ२३४याः ॥ वाराऽ३उवाऽ३ ॥ वोऽ२वाऽ२३४औहोवा ॥ परिस्रवा-
ऽ२३४५ ॥ श्रीः ॥ एनाविश्वान्यर्यआ । ईयइयाहाइ ॥ द्युम्नानिमानू ।
हाऽ३हाऽ३इ ॥ षाऽ२३४णाम् ॥ साइषाऽ३उवाऽ३ ॥ साऽ२न्ताऽ२३४-
औहोवा ॥ वनामहाऽ२३४५इ ॥ दी. २३. उ. २. मा. २४. ठी. ॥७६८॥

१०. [1]औशनम् ॥ उशनाः । गायत्री । पवमानस्सोमः ॥

तिस्रोवाचाः ॥ उदीराऽ२३ताइ । गावोमिम । तिधेनाऽ२३वाः ॥
हराइराऽ३इताऽ३इ ॥ कानाऽ२३इहाऽ३४३इ । क्राऽ२३४दोऽ६हाइ ॥
श्रीः ॥ अभिब्रह्माइः ॥ अनूषाऽ२३ता । याहीऋत । स्यमाताऽ२३राः ॥
मर्जायाऽ३न्तीऽ३ः ॥ दाइवाऽ२३हाऽ३४३इ । शाऽ२३४इशोऽ६हाइ ॥
श्रीः ॥ रायस्समू ॥ द्राऽ५क्षतूऽ२३राः । आस्मभ्यꣳसो । मविश्वाऽ२३ताः ॥
आपानाऽ३स्वाऽ३ ॥ साहाऽ२३हाऽ३४३इ । स्ताऽ२३४इणोऽ६हाइ ॥
दी. १२. उ. ६. मा. २२. चा. ॥७६९॥

११. वैरूपम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

तिस्रोवाऽ२३४चाः ॥ उदाइराऽ३ताऽ३इ । गावोऽ२माऽ२३४इमा ।
ताइधेऽ१नावाऽ२ः ॥ हराऽ२३इः ॥ एताऽ३४औहोवा ॥ कनिक्रदा-

[1] अष्टसप्ततितमसूक्ते द्वे सामनी गीयेते ।



ऽ२३४५न ॥ श्रीः ॥ अभिव्राऽ२३४व्रीः ॥ अनूषाऽ३ताऽ३ ॥ यह्वाऽ२-
इराऽ२३४र्ता । स्यामाऽ१नागाऽ२ः ॥ मर्जाऽ२३ ॥ यन्ताऽ३४औहोवा ॥
दिवशिशूऽ२३४५म् ॥ श्रीः ॥ रायस्माऽ२३४म् ॥ द्राऽ५क्षतूऽ३राऽ३ः ।
अस्माऽ२भ्याऽ२३४ꣳसो । माविश्वाताऽ२ः ॥ आपाऽ२३ ॥ वस्वाऽ३४-
औहोवा ॥ सहस्रिणाऽ२३४५ः ॥ दी. १२. उ. ९. मा. १९. ग्रो. ॥७७०॥

१२. [1]साध्रम् ॥ सध्रः । अनुष्टुप् । पवमानस्सोमः ॥

सुतासोऽ३माधुमत्तमाः ॥ सोमाइन्द्राऽ२ । यमाऽ३४५ । दी-
ऽ२३४नाः । पवित्रवन्तोअक्षराऽ२३४५न् ॥ दाइवाओऽ२३४वा । गान्छा-
ओऽ२३४वा ॥ तुवोऽ५मदाः ॥ श्रीः ॥ इन्दुराऽ३इन्द्रायपवताइ ॥ इता-
इदेवाऽ२ । सोआऽ३४५ । नूऽ२३४वान् । वाचस्पतिर्मखस्यताऽ२३४५इ ॥
वाइश्वाओऽ२३४वा । स्याइशाओऽ२३४वा ॥ नओऽ५जसाः ॥ श्रीः ॥
महस्राऽ३धारꣳपवताइ ॥ समुद्रोवाऽ२ । चमाऽ३४५इ । त्ताऽ२३४याः ।
सोमस्पतीरयीणाऽ१म् ॥ सखाओऽ२३४वा । इन्द्रस्याओऽ२३४वा ॥ दि-
वेऽ५दिवाइ । हौऽ५इ ॥डा॥ दी. ११. उ. ५. मा. २९. को. ॥७७१॥

१३. श्यावाश्वम् ॥ श्यावाश्वः । अनुष्टुप् । पवमानस्सोमः ॥

सुताऽ३१ । सोऽ३मा । धुम । ताऽ३म । एहिया ॥ सो ।
माइन्द्राया । म । दिनाऽ२ः । एहियाऽ२ । पवित्रवान्तोऽ३क्षाऽ३ ॥
क्षाऽ२३४रान् ॥ एहाऽ२इ । एहियाऽ२ । देवान्गच्छान्तुऽ३वोऽ३ ।
माऽ३४५दोऽ६हाइ ॥श्रीः॥ इन्दूऽ३१ः । आऽ३इन्द्रा । यप । वाऽ३ते ।
एहिया ॥ आइ । तिदेवासो । अ । मुवाऽ२न् । एहियाऽ२ । वाचस्प-
ताइर्माऽ३खाऽ३ ॥ स्याऽ२३४ताइ ॥ एहाऽ२इ । एहियाऽ२ । विष-
स्येशानाऽ३ओऽ३ । जाऽ३४५सोऽ६हाइ ॥श्रीः॥ सहाऽ३१ । स्राऽ३धा ।

[1] एकोनाशीतितमसूक्ते द्वे सामनी गीयेते ।

२४१। वाऽ३ने। एहिया ॥ साम्। उद्रोवाचाम्। ई। यशाऽ२ः।
एहियाऽ२। सोमस्पातीऽ३गाऽ३ ॥ याऽ२३४३णाम् ॥ एहाऽ२इ।
एहियाऽ२। सखेन्द्रस्यादाऽ३इवेऽ३। दाऽ३४५इवोऽ६"हाइ ॥

दी. २५. उ. ९. मा. २४. भो. ॥७७२॥

१४. [1]अर्कपुष्पम् ॥ आदित्यः। बृहती। पवमानस्सोमः ॥

तवाह५सोमरारण। हुवेऽ२३ ॥ सख्यइन्दोदिवेदिवे। हुवेऽ२३ ॥
पुरूणिबभ्रोनिचरन्तिमामव। हुवेऽ२३ ॥ परिधी५रतिता५इहि। हुवेऽ२३ ॥
श्रीः ॥ परिधी५रतिता५इहि। हुवेऽ२३ ॥ (द्वे द्विः) तवाहस्नक्तमुतसोम-
तेदिवा। हुवेऽ२३ ॥ दुहानोबभ्रऊधनि। हुवेऽ२३ ॥ श्रीः ॥ दुहानोबभ्र-
ऊधनि। हुवेऽ२३ ॥ (द्वे द्विः) घृणातपन्तमतिसूर्यंपरः। हुवेऽ२३ ॥
शकुनाइवपप्तिम। हुवेऽ२३ (द्विः) होवाऽ३हाऽ३। हाऽ३४। औहोवा।
अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न् ॥

दी. ३७. उ. ११. मा. १०. चो. ॥७७३॥

१५. बार्हदुक्थम् ॥ बृहदुक्थः। बृहती। पवमानस्सोमः ॥

तवाह५सोम। राऽ२रणा ॥ सख्यइन्दोदिवेदाऽ२३इवाइ। पूरू-
ऽ१णाइबाऽ२। भ्रोनिचाराऽ२। तिमामवा ॥ परिधाऽ२३इ५रा ॥
तिता५आऽ२३इहाऽ३४३इ ॥ श्रीः ॥ परिधी५रति। त५ऽ२इहाइ ॥
परिधी५रतिता५आऽ२३इहाइ। तावाऽ१हाना-ऽ२। क्तमुतासोऽ२।
मतेदिवा ॥ दुहानोऽ२३वा ॥ भ्रऊधाऽ२३नाऽ३४३इ ॥ श्रीः ॥ दुहानो-
बभ्रो। ऊऽ२धनाइ ॥ दुहानोबभ्रऊधाऽ२३नाइ। घार्णाऽ१तापाऽ२।
तामताइसूऽ२। र्यिंपराः ॥ शकुनाऽ२३आइ ॥ वपप्ताऽ२३इमाऽ३४३।
औऽ२३४५इ ॥डा॥

दी. १८. उ. ८. मा. २४. डी. ॥७७४॥

[1] चतुर्नवतितमसूक्ते त्रीणि सामानि गीयन्ते।



१६. मारुतम्। मरुतः। बृहती। पवमानस्सोमः ॥

तवाह५सोमरारणा ॥ सख्यइन्दोदिवेदिवे। पुरूणाऽ१इवाऽ२।
भ्रोनिचर। तिमामाऽ१वाऽ२ ॥ परिधाऽ२३इ५रा ॥ तितान्। आऽ२-
इहाऽ२३४औहोवा ॥श्रीः॥ परिधी५रतिता५आइहाइ ॥ परिधी५रतिता५इहि।
तवाहाऽ१न्नाऽ२। क्तमुतसो। मताइदाऽ१इवाऽ२॥ दुहानोऽ२३वा ॥ भ्रऊ।
धाऽ२नाऽ२३४औहोवा ॥ श्रीः ॥ दुहानोबभ्रऊधानाइ ॥ दुहानोबभ्रऊधनि।
घृणाताऽ१पाऽ२। तामतिसू। र्यिंपाऽ१राऽ२ः। शकुनाऽ२३आइ ॥ वप।
प्ताऽ२इमाऽ२३४औहोवा ॥ विदावसूऽ२३४५ ॥

दी. २८. उ. १६. मा. २२. दा. ॥७७५॥

१७. [1]ईनिधनं मार्गीयवम्। मृगयुः। गायत्री। पवमानस्सोमः ॥

परिप्रियादिवः कवाऽ३इरे ॥ वयाऽ५सिनप्त्योर्हिताः ॥ स्वानैर्या-
ऽ२३ताइ ॥ ऐऽ२होऽ१आऽ२३इही। कवि। काऽ२तूऽ२३४औहोवा ॥
श्रीः ॥ सद्गुमर्मातिराशुचाऽ३ए ॥ जातोजातअरोचयात् ॥ महान्माऽ२३ही ॥
ऐऽ२होऽ१आऽ२३इही। प्सता। वाऽ२र्षाऽ२३४औहोवा ॥ श्रीः ॥ प्रप्रक्ष-
यायपन्यसाऽ३ए ॥ जनायजुष्टोअद्रुहः ॥ वीतियाऽ२३र्षा ॥ ऐऽ२हो-
ऽ१आऽ२३इही। पनि। ष्ठाऽ२याऽ२३४औहोवा ॥ ईऽ२३४५ ॥

दी. २५. उ. ३. मा. १८. बै. ॥७७६॥

१८. [2]शुद्धाशुद्धीयम् ॥ इन्द्रः। अनुष्टुप्। पवमानस्सोमः ॥

पुरोजितीवोअन्धाऽ३सः ॥ सुतायमा। दयि। त्नावाऽ२इ।
अपाश्वाऽ३नाऽ३म्। श्नथाऽ२इष्टाऽ२३४ना ॥ सखायोऽ२३दी ॥ र्घाजि-
ह्वियम्। इडाऽ२३ ॥ श्रीः ॥ सखायोदीर्घजिह्वाऽ३याम् ॥ योधारया।
पाव। कायाऽ२। पराइप्राऽ३स्याऽ२। दताऽ२इन्दुऽ२३४साः ॥ इन्दुरा-
ऽ२३श्वाः ॥ नाकृतियः। इडाऽ२३ ॥ श्रीः ॥ इन्दुरश्वोनकृत्वाऽ३याः ॥

[1] एकोनपञ्चाशत्तमसूक्ते गीयते। [2] अष्टादशे सूक्ते गीयते।

तन्दुरोषाम् । अभी । नागाऽ२: । सोमांवाऽ३इश्वाऽ३ । चियाऽ२घा-

ऽ२३४या ॥ यज्ञायाऽ२३सा ॥ नूवद्रयः । इडाऽ२३भाऽ३४३ ।

औऽ२३४५इ ॥डा॥ दी. १६. उ. ६. मा. १८. कै. ॥७७७॥

१९. [1]वैष्णवायम् ॥ विष्णुः । बृहती । पवमानस्सोमः ॥

सोमउष्वा ॥ णस्सोऽ२तृभाइः । नृभिः । अधिष्णुभिराऽ२वीनाम् ।

वीनाम् । अक्षयेवहरितायातिघाऽ२रया । रया ॥ मन्द्रयायातिघाऽ२"रयाऽ२३।

गऽ२ । याऽ२३४ । औहोवा ॥ श्रीः ॥ मन्द्रयाया ॥ तिघाऽ२रया ।

रया । मन्द्रयायातिघाऽ२रया । रया । अनूपेगोमान्गोभिराऽ२क्षाः । क्षाः ॥

सोमोदुग्धाभिराऽ२"क्षाऽ२३: । आऽ२ । क्षाऽ२३४ । औहोवा ॥ श्रीः ॥

सोमोदुग्धा ॥ भिराऽ२क्षाः । क्षाः । सोमोदुग्धाभिराऽ२क्षाः । क्षाः ।

समुद्रन्नसंवरणानियाऽ२ग्मान् । ग्मन् ॥ मन्दीमदायतोऽ२"शताऽ२३इ ।

शाऽ२ । ताऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥

दी. ४०. उ. ३. मा. १६. बू. ॥७७८॥

२०. [2]वैष्णवोत्तरम् ॥ विष्णुः । बृहती । पवमानस्सोमः ॥

सोमः । सोमाः ॥ उष्वाणस्सोतृभिः । अधाइष्णूऽ३भाइः ।

आओऽ३हो । वाइनाऽ२म् । अक्षयेवहरितायातिघाऽ१राऽ३या ॥ मन्द्रा-

औऽ३हो ॥ यायातिघोऽ२३४वा । राऽ५योऽ६हाइ ॥

दी. ८. उ. २. मा. ११. ट. ॥७७९॥

पञ्चमो विंशः ॥

विंशत्यार्द्धप्रपाठकः ॥

१. [3]यौक्तस्रुचम् ॥ युक्तस्रुक् । बृहती । पवमानस्सोमः ॥

सोमउष्वाणस्सो ॥ तृभाइः । अधिष्णुभिरवाऽ२३इनाम् । आ-

धाऽ२ । येवहरितायातिघाराऽ२३या ॥ मान्द्राऽ२ ॥ यायातिघोऽ२३४-

[1] सप्तदशोत्तरशततमसूक्ते गीयते ।
[2] तत्रैव प्रथमस्तोत्रीयायां गीयते ।
[3] सप्तदशाधिकशततमसूक्ते गीयते ।

वा ॥ राऽ२३४या ॥ श्रीः ॥ मन्द्रयायातिघा ॥ रया । मन्द्रयायातिघा-

राऽ२३या । आनूऽ२ । पेगोमान्गोभिराऽ२३क्षाः ॥ सोमाऽ२: ॥

दुग्वाभिरोऽ२३४वा ॥ आऽ२३४क्षाः ॥ श्रीः ॥ सोमोदुग्धाभिरा । क्षाः ॥

सोमोदुग्धाभिराऽ२३क्षाः । सामूऽ२ । द्रन्नसंवरणानियाऽ२३ग्मान् ॥

मान्दीऽ२ ॥ मादायतोऽ२३४वा ॥ शाऽ२३४ते ॥

दी. २५. उ. १. मा. ११. प. ॥७८०॥

२. [1]अध्यर्द्धेड॰सोमसाम ॥ सोमः । गायत्री । पवमानस्सोमः ॥

असाव्य॰शुमदायाऽ३ए ॥ अप्सुदक्षोगिरिष्ठाः ॥ श्येनोनयाऽ२३ ।

हाइ ॥ नाइमाउवा । सादाउवाऽ३ ॥ श्रीः ॥ शुभ्रमन्धोदेववाताऽ३मे ॥

अप्सुधौतन्नृभिस्सुताम् ॥ स्वदन्तिगाऽ२३ । हाइ ॥ वाऽपाउवा । योभा-

उवाऽ३ ॥श्रीः॥ आदीमश्वन्नहेताराऽ३मे ॥ अशुशुभन्नमृताया ॥ मधोरसा-

ऽ२३म् । हाइ ॥ साधाउवा । सादाउवाऽ३ ॥ ऊऽ२३४पा ॥

दी. १६. उ. ३. मा. १४. गो. ॥७८१॥

३. [2]त्रासदस्यवम् ॥ त्रसदस्युः । अनुष्टुप् । पवमानस्सोमः ॥

पाऽ२३४ । व । स्वधा । जासातयाऽ२३इ ॥ पाऽ२३४ । वि ।

त्रेधा । रायासुताऽ२३: ॥ आऽ२३४इ । द्रा । यशो । माविष्णवाऽ२३इ ॥

दाऽ२३४इ । वे । स्पोला । धूमचराऽ२१उ ॥श्रीः॥ तुऽ२३४ । वाम् ।

रिहा । वीधीतयाऽ२३: ॥ हाऽ२३४ । रिम् । पवाइ । त्रेअद्रुहाऽ२३: ॥

वाऽ२३४ । त्सम् । जाताम् । नामातराऽ२३: ॥ पाऽ२३४ । व ।

माना । वीधर्मणाऽ३१उ । श्रीः ॥ तुऽ२३४ । बम् । धाम्ना । माहि-

व्रताऽ२३ ॥ पाऽ२३४ । वि । बीभा । वीजन्निपाऽ२३इ ॥ श्राऽ२३४ ।

ति । द्रापाइम् । आयुष्वयाऽ२३: ॥ पाऽ२३४ । व । माना । माहित्व-

नाऽ३१उ ॥ वाऽ२३४५ ॥ दी. २७. उ. १२. मा. २२. पा. ॥७८२॥

[1] एकविंशोत्तरशततमसूक्ते गीयते ।
[2] चतुर्विंशत्यधिकशततमसूक्ते गीयते ।

४. [1]वाङ्निधनं कौञ्चम् ॥ क्रुङ् । अनुष्टुप् । । पवमानस्सोमः ॥
पराइत्या॰हाऽ३१२३४ । यंतम् । हराऽ३इम् ॥ बभ्रुंपुना-
ऽ३१२३४ । तिवा । रेणाऽ३ ॥ योदेवान्वाऽ३१२३४इ । श्वा॰इत् ।
पराऽ३इ ॥ मदेनासाऽ३१२३ । हगाऽ५च्छताउ ॥ श्रीः ॥ द्वियांपाश्वा-
ऽ३१२३४ । स्वय । शसाऽ३म् ॥ सखायोआऽ३१२३४ । द्रिसं । हता-
ऽ३म् ॥ प्रियामाइन्द्राऽ३१२३४ । स्यका । मियाऽ३म् ॥ प्रस्नापाया-
ऽ३१२३ । तऊऽ६मेयाउ ॥ श्रीः ॥ इन्द्रायासोऽ३१२३४ । मपा ।
तवाऽ३इ ॥ वृत्रघ्नेपाऽ३१२३४ । रिपि । च्यसाऽ३इ ॥ नरेचादा-
ऽ३१२३४ । क्षिणा । वताऽ३इ । वीरायासाऽ३१२३ । दनाऽ५सदाउ॥वा॥
दी. ११. उ. १२. मा. २०. खो. ॥७८३॥

५. [2]गौरीवितम् ॥ गौरीवितिः । पिपीलिकामध्यानुष्टुप् । पवमानस्सोमः ॥
परि । ऊपूऽ३ । प्रधन्वावा ॥ जसातयेपरिस्त्राऽ२३ । णाइसक्षणा-
ऽ३१२३इः । द्विपाऽ५स्तरा ॥ ध्याऋणयाऽ३१२३ः ॥ नओवा । रा-
ऽ६सोऽ६"हाइ ॥ दी. ४. उ. न. मा. ७. ले. ॥७८४॥

६. [3]ओकोनिधनम् ॥ प्रहितिः । पिपीलिकामध्यानुष्टुप् । पवमानस्सोमः ॥
अजाऽ३इजनोहिपवसा ॥ नसू । रियंविधारेशक्मनाऽ२पायाऽ२ः ।
गोजाऽ२इरावाऽ२ ॥ र॰इमाऽ२३४णाः ॥ पुरम् । घाऽ२ । याऽ२३४-
औहोवा ॥ ओऽ२३४काः ॥ दी. ६. उ. ४. मा. ७. पे. ॥७८५॥

७. [4]कण्वरथन्तरम् ॥ कण्वः । बृहती । पवमानस्सोमः ॥
मार्ज्यमानस्सुहस्तिया । समुद्रेवा । चाऽ३माइन्वाऽ३साइ । रयिं-
पिशङ्गंबहुलंपुरुस्पृहाऽ२३४मैही ॥ पवमाऽ२३४ना ॥ भियाऽ३१उवाऽ२३ ॥
एऽ३ । पसश्वा ॥ दी. ४. उ. ३. मा. ४. बी. ॥७८६॥

[1] चतुर्विंशत्यधिकद्विशततमसूक्ते गीयते । [2] षोडशोत्तरद्विशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते । [3] षोडशोत्तरद्विशततमसूक्तस्य द्वितीयस्तोत्रीयायां गीयते ।
[4] चत्वारिंशदधिकशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।



८. [1]अर्कपुष्पोत्तरम् ॥ आदित्यः । बृहती । पवमानस्सोमः ॥
मृज्यमानस्सुहस्त्या । हुवाइ । औहोवाऽ२ ॥ समुद्रेवाचमिन्वसि ।
हुवाइ । औहोवाऽ२ । रयिंपिशङ्गंबहुलंपुरुस्पृहम् । हुवाइ । औहोवाऽ२ ॥
पवमानाभियर्षसि । हुवाइ । औ । होऽ२ । वाऽ२३४ । औहोवा ॥श्रीः॥
पवमानाभियर्षसि । हुवाइ । औहोवाऽ२ ॥ (त्रीणि द्विः) पुनानोवारेपवमा-
नोअव्यये । हुवाइ । औहोवाऽ२ ॥ वृषोअचिक्रदद्वने । हुवाइ । औ ।
होऽ२ । वाऽ२३४ । औहोवा ॥ श्रीः ॥ वृषोअचिक्रदद्वने । हुवाइ ।
औहोवाऽ२ ॥ ( त्रीणि द्विः ) देवाना॰सोमपवमाननिष्कृतम् । हुवाइ ।
औहोवाऽ२ ॥ गोभिरञ्जानोअर्षसि । हुवाइ । औ । होऽ२ । वाऽ२३४ ।
औहोवा ॥ अर्कस्यदेवा४परमेवियोऽ२माऽ२३४५न् ॥
दी. ५२. उ. १५. मा. २०. भी. ॥७८७॥

९. [2]गौपूक्तम् ॥ गौपूक्तिः । गायत्री । पवमानस्सोमः ॥
वृषापवस्वधो । होहोवाहाइ । रया ॥ मरुत्वतेचमोऽ२ । हुवाइ ।
हुवाऽ२इ । त्साराऽ२ः ॥ विश्वादधानओऽ२ । हुवाइ । हुवाऽ२इ ॥
जासाऽ२३ । होऽ२वाऽ२३४औहोवा ॥ श्रीः ॥ तन्त्वाधर्तारमो । होहोवा-
हाइ । णियोः ॥ पवमानसुवोऽ२ । हुवाइ । हुवाऽ२इ । हुवाऽ२म् ॥
हिन्वेवाजेपुवोऽ२ । हुवाइ । हुवाऽ२इ ॥ जाइनाऽ२३म् । होऽ२वाऽ२३४-
औहोवा ॥श्रीः॥ अयाचित्तोविपो । होहोवाहाइ । नया ॥ हरि४पवस्वधोऽ२ ।
हुवाइ । हुवाऽ२इ । रायाऽ२ ॥ युजंवाजेपुचोऽ२ । हुवाइ । हुवाऽ२इ ॥
दायाऽ२३ । होऽ२वाऽ२३४औहोवा ॥ अग्निराहुताऽ२३४५ः ॥
दी. २७. उ. ५. मा. २५. नु. ॥७८८॥

१०. शाकलम् ॥ शाकलः । गायत्री । पवमानस्सोमः ॥
वृषापवाऽ२स्वधारया ॥ मरुत्वतेचमत्साऽ२३राः ॥ वाइश्वाऽ२ ॥

[1] चत्वारिंशदधिकशततमसूक्ते गीयते । [2] एकपञ्चाशत्सूक्ते सामनी गीयेते ।

दाधानओऽ२३ । हुम् । जाऽ३४५सोऽ६"हाइ ॥ श्रीः ॥ तन्त्वाघर्ताऽ२रसो-
णियोः ॥ पवमानसुवर्दृऽ२३शाम् ॥ हाइन्वेऽ२ ॥ वाजिपुत्राऽ२३ । हुम् ।
जाऽ३४५इनोऽ६"हाइ ॥ श्रीः ॥ अयाचित्तोऽ२विपानया ॥ हरि ऽपवस्वधा-
राऽ२३या ॥ यूजाऽ२म् ॥ वाजिपुत्रोऽ२३ । हुम् । दाऽ३४५योऽ६"हाइ ॥
दी. १२. उ. न. मा. १४. यी. ॥७८९॥

११. [1]उभयतस्स्तोमं गौतमम् ॥ गोतमः । बृहती । पवमानस्सोमः ॥

हाउपुनानस्सोमधारयाहाउ ॥ आपोवसा । नोअर्षसाऽ२३४इ ।
हाहोइ । आरत्नधायोनिमृत । स्यासीदसाऽ२३४इ । हाहोइ ॥ उत्सोदाइवा-
ऽ३४ः । हाहोऽ३ ॥ हिरोऽ२३४वा । ण्याऽ५योऽ६"हाइ ॥ श्रीः ॥ हाउ-
त्सोदेवोहिरण्ययोहाउ ॥ उत्सोदेवः । हिराण्ययाऽ२३४ः । हाहोइ ।
दुहानऊधर्दिवियम् । माधुप्रियाऽ२३४म् । हाहोइ ॥ प्रात्न७साधाऽ३४ ।
हाहोऽ३ ॥ स्थमोऽ२३४वा । साऽ५दोऽ६"हाइ ॥श्रीः॥ हाउप्रत्न७सधस्थमा-
सदद्धाउ ॥ प्रात्न७सध । स्थमासदाऽ२३४त् । हाहोइ । आपृच्छ्यंधरुणंवा ।
जायर्षसाऽ३४इ । हाहोइ ॥ नृभिर्धौताऽ३४ः । हाहोऽ३ ॥ विचोऽ२३४-
वा । क्षाऽ५णोऽ६"हाइ ॥ दी. ३५. उ. ९. मा. २८. भै. ॥७९०॥

१२. [2]द्विरभ्यासं त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । पवमानस्सोमः ॥

पुरः । जिताऽ३इ । हाऽ३हाइ । वोअन्धासाऽ२३४ः ॥ सुता ।
यमाऽ३ । हाऽ३हा । दयित्नावाऽ२३४इ ॥ अप । श्वानाऽ३म् । हाऽ३हा ।
श्नथिष्टानाऽ२३४ ॥ सखा । योदाऽ३ । हाऽ३हाइ । धजाऽ२होऽ२३४ ।
वा । हाऽ५योऽ६"हाइ ॥श्रीः॥ सखा । योदाऽ३ । हाऽ३हाइ । धजिह्वा-
याऽ२३४म् ॥ योवा । स्याऽ३ । हाऽ३हा । पावकायाऽ२३४ ॥ परि ।
प्रस्याऽ३ । हाऽ३हा । दतेसुताऽ२३४ः ॥ इन्दुः । अश्वाऽ३ः । हाऽ३हा ।

[1] नवमसूक्ते गीयते । [2] अष्टादशसूक्ते द्वे सामनी गीयेते ।



नकाऽ३होऽ२३४ । वा । त्वाऽ५योऽ६"हाइ ॥श्रीः॥ इन्दुः । अश्वाऽ३ः ।
हाऽ३हा । नकृत्वायाऽ२३४ः ॥ तन्दु । रोषाऽ३म् । हाऽ३हाइ । अभी-
नाराऽ२३४ः ॥ सोमम् । विश्वाऽ३ । हाऽ३हा । चियाधायाऽ२३४ ॥
यज्ञा । यसाऽ३ । हाऽ३हा । तुवाऽ२होऽ२३४ । वा । द्राऽ५योऽ६"हाइ ॥
दी. १६. उ. न. मा. २३. हि. ॥७९१॥

१३. आनिधनं त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअन्धसः । सुताहाउ ॥ यमाऽ३दायित्नावाऽ२३ ।
यमाऽ३हो । दयाऽ२इत्नाऽ२३४वाइ । अपश्वानऽ३७श्नथिष्टानाऽ२ । श्ना-
नाऽ३७हो । श्नथाऽ२इष्टाऽ२३४ना । सखायोदीऽ३र्घजिह्वायाऽ२म् ॥
सखाऽ३होइ । योदोऽ२३४हाइ ॥ घाऽ२जाऽ२३४औहोवा ॥ ह्वियऽ३-
माऽ२३४५ ॥श्रीः॥ सखायोदीर्घजिह्वियम् । योवाहाइ ॥ स्याऽ३पावका-
याऽ२ । स्याऽ३हो । पावाऽ२काऽ२३४या । परिप्रस्यऽ३न्दतेसुताऽ२ः ।
प्रस्याऽ३हो । दताऽ२सुऽ२३४ताः । इन्दुरश्वोऽ३नकृत्वायाऽ२ः ॥
इन्दुऽ३होइ । अश्वोऽ२३४हाइ ॥ नाऽ२काऽ२३४औहोवा । त्वियऽ३आ-
ऽ२३४५ ॥ श्रीः ॥ इन्दुरश्वोनकृत्वियः । तन्दूहाउ ॥ रोषऽ३माभीऽ१-
नागऽ२ः । रोषाऽ३७होइ । अभाऽ२इनाऽ२३४राः । सोमंविश्वाऽ३चाया-
धायाऽ२ । विश्वाऽ३होइ । चियाऽ२धाऽ२३४या । यज्ञायसऽ२न्तूवद्रा-
याऽ२ः ॥ यज्ञाऽ३होइ । यसोऽ२३४हा ॥ तूऽ२वाऽ२३४औहोवा ॥
द्रुयऽ३आऽ२३४५ ॥ दी. ३१. उ. १. मा. ३२. का. ॥७९२॥

१४. [1]भार्गीयवम् ॥ भृगवः । गायत्री । पवमानस्सोमः ॥

उवोहोवा ॥ तेजाऽ२ । तमान्धाऽ२३४साः । दिविसदूभू ।
मियादाऽ१दाऽ२इ ॥ उग्रम् । शा । औऽ३होइ । शाऽ२३४र्मा ॥ माऽ२-

[1] अष्टमे सूक्ते गीयते ।

हाऽ२३४औहोवा ॥ एऽ३ । श्रवाऽ२३४५ः ॥ श्रीः ॥ सनोहोवा ॥
आइन्द्राऽ२ । ययाज्याऽ२३४वाइ । वरुणाय । मरुद्भ्याऽ१याऽ२ः ॥
वरा । हा । औऽ३होइ । वोऽ२३४वीत् ॥ पाऽ२राऽ२३४औहोवा ॥
एऽ३ । सवाऽ२३४५ ॥ श्रीः ॥ एनोहोवा ॥ वाइश्वाऽ२ । निश्रायो-
ऽ२३४आ । द्युम्नानिमा । नृपाऽ१णाऽ२म् । सिपा । हा । औऽ३होइ ।
साऽ२३४न्ताः ॥ वाऽ२नाऽ२३४औहोवा ॥ एऽ३ । महाऽ२३४५इ ॥

दी. १६. उ. ५. मा. २०. जौ. ॥७९३॥

१५. ¹द्विहिङ्कारं वामदेव्यम् ॥ वामदेवः । बृहती । पवमानस्सोमः ॥

पुनानाऽ२३स्सोमधारया ॥ आपोवसानोअर्षस्यारत्नधायोनिमृतास्य-
सीहोऽ३ । हुम्माऽ२ । दाऽ२३साइ । उत्सोदेवोहिरोहोऽ३ । हुम्माऽ२ ॥
ण्यया । औऽ३होवा ॥श्रीः॥ उत्सोदाऽ२३इवोहिरण्ययाः ॥ उत्सोदेवोहि-
रण्ययोदुहानऊधर्दिवियाम्मधोहोऽ३ । हुम्माऽ२ । प्राऽ२३याम् ॥ प्रत्नꣳस-
धस्थमोहोऽ३ । हुम्माऽ२ ॥ सदात् । औऽ२३होवा ॥ श्रीः ॥ प्रत्नꣳसा-
ऽ२३धस्थमासदात् ॥ प्रात्नꣳसधस्थमासददापृच्छ्यंधरुणंवाजियोहोऽ३ ।
हुम्माऽ२ । षाऽ२३साइ ॥ नृभिर्धौतोविचोहोऽ३ । हुम्माऽ२ ॥ क्षणा ।
औऽ३होवा । होऽ५इ ॥डा॥ दी. २९. उ. ६. मा. १०. तौ. ॥७९४॥

१६. द्वैगतम् ॥ द्विगत् । बृहती । पवमानस्सोमः ॥

पुनानाऽ३सोमधारया ॥ आपोवसा । नोआर्षाऽ१साऽ२इ । आ-
राऽ३ । हौऽ३होऽ३वा । त्नधायोनिमृतस्यासीऽ१दसाऽ२इ ॥ उत्सोऽ२३ ॥
दाऽ२इवाऽ२३४औहोवा ॥ एऽ३ । हिराऽ२ण्ययाऽ२३४५ः ॥ श्रीः ॥
उत्सोदाऽ३इवोहिरण्ययाः ॥ उत्सोदेवः । हिराण्याऽ१याऽ२ः । दुहाऽ३ ।
हौऽ३होऽ३वा । नऊधर्दिवियंमाधुप्रायाऽ२म् ॥ प्रत्नाऽ२३म् ॥ साऽ२-

¹ नवमसूक्ते त्रीणि सामानि गीयन्ते ।

घाऽ२३४औहोवा ॥ एऽ३ । स्थमाऽ२सदाऽ२३४५त् ॥ श्रीः ॥ प्रत्नꣳसा-
ऽ३धस्थमासदात् ॥ प्रात्नꣳसध । स्थमामाऽ१दाऽ२त् । आपाऽ३ । हौऽ३-
होऽ३वा । छ्यंधरुणंवाजायर्षासाऽ२इ ॥ नृभाऽ२३इः ॥ धौऽ२ताऽ२३४-
औहोवा ॥ एऽ३ । विचाऽ२क्षणाऽ२३४५ः ॥

दी. २३. उ. ३. मा. २२. डा. ॥७९५॥

१७. अर्कपुष्पम् ॥ आदित्यः । बृहती । पवमानस्सोमः ॥

पुनानस्सोमधारया । हुवेऽ२३ ॥ अपोवसानोअर्षसि । हुवेऽ२३ ॥
आरत्नधायोनिमृतस्यसीदसि । हुवेऽ२३ ॥ उत्सोदेवोहिरण्ययः । हुवेऽ२३ ॥
श्रीः ॥ उत्सोदेवोहिरण्ययः । हुवेऽ२३ ॥ ( द्वे द्विः ) दुहानऊधर्दिव्यं-
मधुप्रियम् । हुवेऽ२३ ॥ प्रत्नꣳसधस्थमासदत् । हुवेऽ२३ ॥ श्रीः ॥
प्रत्नꣳसधस्थमासदत् । हुवेऽ२३ ॥ ( द्वे द्विः ) आपृच्छ्यंधरुणंवाज्यर्षसि ।
हुवेऽ२३ ॥ नृभिर्धौतोविचक्षणः । हुवेऽ२३ । ( द्विः ) होवाऽ३हाऽ३ ।
हाऽ३४ । औहोवा । अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न् ॥

दी. ३५. उ. ८. मा. ११. व. ॥७९६॥

१८. ¹मधुश्चुन्निधनम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

अयंपूपारयिर्भगाऽ३ए ॥ सोमꣳपुनाऽ३नोअर्षताऽ२इ । हाऽ३हा ।
औऽ३होऽ३वा । आइहीऽ२ । पतिर्विश्वऽ३स्याभूमनाऽ३ः । हाऽ३हा ।
औऽ३होऽ३वा । आइहीऽ२ ॥ वायख्यद्रोऽ३ । हाऽ३हाइ । औऽ३होऽ३वा ।
आइहीऽ२ ॥ दसी । ऊऽ२भाऽ२३४औहोवा ॥श्रीः॥ समुप्रियाअनूषताऽ३ए ॥
गावोमदाऽ३यावृष्वयाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ।
सोमासꣳकृऽ३ण्वातेपथाऽ३ः । हाऽ३हा । औऽ३होऽ३वा । आइहीऽ२ ॥
पावमानाऽ३ । हाऽ३हाइ । औऽ३होऽ३वा । आइहीऽ२ ॥ सइ । वाऽ२-
वाऽ२३४औहोवा ॥श्रीः॥ यओजिष्ठस्तमाभराऽ३ए ॥ पवमानऽ३श्रावायि-

¹ एकपञ्चाशसूक्ते गीयते ।

याऽ३म् । हाऽ३हा । ओऽ३होऽ३वा । आइहीऽ२ । य॰पञ्चचऽ३र्पणीर-
माऽ३इ । हाऽ३हा । ओऽ३होऽ३वा । आइहीऽ२ ॥ रयियेनाऽ३ ।
हाऽ३हाइ । ओऽ३होऽ३वा । आइहीऽ२ ॥ वना । माऽ२हाऽ२३४-
औहोवा ॥ मधुश्चुताऽ२३४५: ॥ दी. २८. उ. ४. मा. २९. हो. ॥७९७॥

१९. [1]अर्कपुष्पोत्तरम् ॥ आदित्यः । अनुष्टुप् । पवमानस्सोमः ॥

यओजिष्ठस्तमाभर । हुवाइ । ओहोवाऽ२ ॥ पवमानश्रवाय्यम् ।
हुवाइ । ओहोवाऽ२ ॥ य॰पञ्चचर्पणीरभि । हुवाइ । ओहोवाऽ२ ॥
रयियेनवनामहे । हुवाइ । ओ । होऽ२ । वाऽ२३४ । औहोवा ॥ अर्कस्य-
देवा॰परसेवियोऽ२साऽ२३४५न् ॥ दी. १७. उ. ५. मा. ७. चे. ॥७९८॥

२०. [2]आश्वसूक्तम् ॥ आश्वसूक्तिः । गायत्री । पवमानस्सोमः ॥

आओहोवाहाइ । स्वादिष्ठया ॥ मदाइ । ष्ठया । ऐहीयैहीऽ१ ।
पावस्वसोमधारया । ऐहीयैहीऽ१ ॥ आऽ२इ । आइन्द्राऽ२यापाऽ२ ॥
तवे । हुऽ२ताऽ२३४औहोवा ॥ शुक्रआहुताऽ२३४५: ॥
दी. १५. उ. ३. मा. ८. धै. ॥७९९॥

षष्ठो विंशः ॥

विंशतिप्रपाठकः ॥

इत्यूहगाने सत्रपर्व सम्पूर्णम् ॥

---

[1] एकषष्टितमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
[2] पञ्चदशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

## अथोहगाने षष्ठं प्रायश्चित्तपर्व ॥

१. [1]उद्वत्प्राजापत्यम् ॥ प्रजापतिः । बृहती । पवमानस्सोमः ॥

ॐ ॥ प्रत्न॰सधस्थमा । हो॒ऽ२सदात् ॥ प्रत॰सधस्थमाहोऽ२ । सादाऽ२त् । आपृच्छ्यंधरुणंवाजियाहोऽ२ । पामाऽ२इ ॥ नृमाऽ२इहोंऽ१इ । श्चौऽ२३ताऽ३ः ॥ विचोऽ२३४वा । क्षाऽ५णोऽ६"हाइ ॥

द्वी. ३. उ. ३. मा. ७. डे. ॥८००॥

२. [2]सफम् ॥ देवाः । गायत्री । पवमानस्सोमः ॥

उपशोऽ३क्षाप । तस्थूऽ२३४षाः ॥ भियासाऽ२म् । आधाइहो-ऽ३शाऽ२ । त्राऽ३२३४वाइ ॥ पवा ॥ मानावोऽ३दाऽ३ः । राऽ३४५-योऽ६"हाइ ॥

द्वी. ३. उ. ४. मा. ६. तु ॥८०१॥

३. [3]कालेयम् ॥ कलिः । अनुष्टुप् । इन्द्रः ॥

इन्द्रंवाऽ३इश्वाअवोवृधान् ॥ समुद्रव्या । चसंगिराऽ२३ः । रथा-ऽ३इ । ताऽ२३४ । म॰र । थाऽ३इनाम् ॥ वाजाना॰सौ । वाऽ३४३-ओऽ३४वा ॥ पताऽ५इम्पताइम् ॥ श्रीः ॥ सख्येताऽ३इन्द्रवाजिनाः ॥ माभाइमशा । वसस्पताऽ२३इ । तुवाऽ३म् । आऽ२३४ । सिप्रनो । सूऽ२-माः ॥ जेतारमो । वाऽ३४३ओऽ३४वा ॥ पराऽ५जिताम् ॥ श्रीः ॥ पूर्वीराऽ३इन्द्रस्यरातयाः ॥ नवाइदस्या । तियूतयाऽ२३ः । यदाऽ३ । वाऽ२३४ । जस्यगो । माऽ३ताः ॥ स्तोतृभ्योमो । वाऽ३४३ओ-ऽ३४वा ॥ हताऽ५इमघाम् ॥ होऽ५इ ॥डा॥

द्वी. १६. उ. ३. मा. २८. गै. ॥८०२॥

४. [4]सौभरम् ॥ सुभरिः । बृहती । पवमानस्सोमः ॥

तवोऽ३दाऽ३स्मामुतोपहोवा ॥ वसोमन्दानमन्धसोभिवस्संनस्व-साऽ२राइषुधाऽ२३ । होइ । नाऽ२३४वाः ॥ इन्द्रंगोभिः । नयाऽ२हा-

---

[1] नवमसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।

[2] एकचत्वारिंशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[3] चतुष्षष्टितमसूक्ते गीयते ।

[4] त्रयोदशसूक्ते गीयते ।

ऽ३इ ॥ माऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ इन्द्राऽ३ज्ञाऽ३इभिर्नवामहोवा ॥ इन्द्रंगाभिर्नवामहेद्युक्षंसुदानुन्तवाऽ२इषाइभिगाऽ२३ । हो । वाऽ२३४-वाम् ॥ गिरिन्नपु । रुभोऽ३हाऽ३इ ॥ जाऽ२साऽ२३४औहोवा ॥ श्रीः ॥ गिराऽ३इन्नाऽ३पुरुभोजसोवा ॥ गिरिन्नपुरुभोजसंद्युमन्तंवाजंशताऽ२इना-ंसहाऽ२३ । हो । स्राऽ२३४इणाम् ॥ मद्भूगोम । तमाऽ३हाऽ३इ ॥ माऽ२हाऽ२३४औहोवा ॥ ऊऽ२३४५ ॥ दी. २१. उ. न. मा. १८. है. ॥८०३॥

५. [1]त्रैककुभम् ॥ त्रिककुप् । बृहती । इन्द्रः ॥

त्वमङ्गप्रशंसाऽ३इषाः ॥ देवश्शवाइष्ठाऽ३मा । हुम् । ताऽ२३४-याम् । नत्वदन्योमघवन्न । स्ताइम । डितेन्द्रा ॥ ब्राऽ२३४वी ॥ माइतेव । चाऽ२ । याऽ२३४औहोवा ॥ श्रीः ॥ इन्द्रब्रवीमितेवाऽ३चाः ॥ इन्द्रब्रवीमीऽ३ताइ । हुम् । वाऽ२३४चाः । मातेराधांसिमातऊ । तायः । वसोस्मान् ॥ काऽ२३४दा ॥ चानाद । भाऽ२ । याऽ२३४औहोवा ॥ श्रीः ॥ अस्मान्कदाचनादाऽ३भान् ॥ अस्मान्कदाचाऽ३ना ॥ हुम् । दाऽ२३४भान् । विश्वाचनउपमिमी । हाइमा । नुपवसू ॥ नाऽ२३४इचा ॥ पाणिभ्यः । आऽ२ । याऽ२३४औहोवा । ईऽ२३४न्द्राः ॥

दी. २७. उ. ४. मा. २५. क्रु. ॥८०४॥

६. [2]सत्रासाहीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

वराऽ३४इ । वोश्नातमोसुवः । ओऽ६वा ॥ मंहिष्ठोवृत्रहन्ता-ऽ२माः । पाऽ२र्षीइ । राऽ२३धाः ॥ मओऽ२हो । वाहाऽ३४३इ ॥ घोऽ२३४नोऽ६हाइ ॥ दी. ६. उ. न. मा. ८. है. ॥८०५॥

७. [3]अभिनिधनं काण्वम् ॥ कण्वः । बृहती । पवमानस्सोमः ॥

औहोहोहाइ । आइही । ऊत्साः ॥ दाऽ२३४इवो । हाइरण्या-

[1] सप्तचत्वारिंशदुत्तरत्रिशततमसूक्ते गीयते । [2] पञ्चदशसूक्तस्य तृतीयस्तोत्रीयायां गीयते ।
[3] नवमसूक्तस्य द्वितीयस्तोत्रीयायां गीयते ।



३६० अवत्सारः काश्यपः । गायत्री । पवमानः सोमः ॥

११११. प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः ।
अच्छा वाजंसहस्रिणम् ॥१॥

१११२. अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति ।
हरिस्तुञ्जान आयुधा ॥२॥

१११३. स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
श्येनो न वंसु षीदति ॥३॥

१११४. स नो विश्वा दिवो वसूतो पृथिव्या अधि । पुनान इन्दवा भर ॥४॥

धा. १४. उ. १. स्व. ४. सी. ॥१८॥

पञ्चमः खण्डः ॥

इत्येकोनविंशोऽध्यायः ॥

अष्टमप्रपाठकस्यतृतीयोऽर्धः ॥

अष्टमः प्रपाठकः ॥

३६०. प्र । ते । धाराः । असश्चतः । अ । सश्चतः । दिवः । न । यन्ति । वृष्टयः । अच्छ । वाजम् । सहस्रिणम् ॥ अभि । प्रियाणि । काव्या । विश्वा । चक्षाणः । अर्षति । हरिः । तुञ्जानः । आयुधा ॥ सः । मर्मृजानः । आयुभिः । इभः । राजा । इव । सुव्रतः । सु । व्रतः । श्येनः । न । वंसु । सीदति ॥ सः । नः । विश्वा । दिवः । वसु । उत । उ । पृथिव्याः । अधि । पुनानः । इन्दो । आ । भर ॥

ऽ२३४याः । ऊत्सोदाऽ२३४इवो । हौरण्ययाः । एहोइ । आऽ२३४इहौ ॥ दूहानाऽ२३४ऊ । धादाइवाऽ२३४याम् । माधुप्रियाम् । एहोइ । आ-ऽ२३४इहौ ॥ प्रावंसाऽ२३४धा ॥ स्थमाऽ३साऽ५दाऽ६५६त् ॥ आ-ऽ२३४भौ ॥ दी. ५. उ. ५. मा. १७. से. ॥८०६॥

## अथ विंशोऽध्यायः ॥

नवमप्रपाठकस्य प्रथमोऽर्धः ॥

३६१. नृमेध आङ्गिरसः । गायत्री । पवमानः सोमः ॥

१११५. प्रास्य धारा अक्षरन्वृष्णस्सुतस्यौजसः । देवाँ अनु प्रभूषतः ॥१॥

१११६. सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा ।
ज्योतिर्जज्ञानमुक्थ्यम् ॥२॥

१११७. सुषहा सोम तानि ते पुनानाय प्रभूवसो । वर्धा समुद्रमुक्थ्य ॥३॥

धा. १२. उ. न. स्व. ३. पि. ॥१॥

३६२. नृमेधः । द्विपदा गायत्री । इन्द्रः ॥

१११८. एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥१॥

१११९. त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥२॥

११२०. विश्रुतयो यथा पथ (इन्द्र त्वद्यन्तु रातयः) ॥३॥

धा. ५. उ. १. स्व. १. प. ॥२॥

---

३६१. प्र । अस्य । धाराः । अक्षरन् । वृष्णः । सुतस्य । ओजसः । देवान् । अनु । प्रभूषतः । प्र । भूषतः ॥ सप्तिम् । मृजन्ति । वेधसः । गृणन्तः । कारवः । गिरा । ज्योतिः । जज्ञानम् । उक्थ्यम् ॥ सुषहा । सु । सहा । सोम । तानि । ते । पुनानाय । प्रभूवसो । प्रभु । वसो । वर्ध । समुद्रम् । सम् । उद्रम् । उक्थ्य ॥

३६२. एषः । ब्रह्मा । यः । ऋत्वियः । इन्द्रः । नाम । श्रुतः । गृणे ॥ त्वाम् । इत् । शवसः । पते । यन्ति । गिरः । न । संयतः । सम् । यतः ॥ वि । श्रुतयः । यथा । पथः । इन्द्र । त्वत् । यन्तु । रातयः ॥

---

८. कालेयम् ॥ कलिः । द्विपदा गायत्री । इन्द्रः ॥

एषाऽ३ब्राह्मा ॥ योऽ२३ः । आऽ३ । त्वोऽ२३ । याः ॥ इन्द्रो नामौ । वाऽ३४३ओऽ२३४वा ॥ श्रुतोऽ५गृणाइ ॥श्रीः॥ तुवाऽ३माइच्छा ॥ वाऽ२३ । साऽ३ः । पोऽ२३ । ताइ ॥ यन्ताइगिरौ । वाऽ३४३ओ-



ऽ३४वा ॥ नसाऽ५म्यताः ॥ श्रीः ॥ विश्रूऽ३तायाः ॥ योऽ२३ । थाऽ३ । पाऽ२३ । थाः ॥ इन्द्रात्वद्यौ । वाऽ३४३ओऽ३४वा ॥ तुरा-ऽ५तयाः । होऽ५इ ॥डा॥

दी. २. उ. न मा. १५. यु. ॥८०७॥

९. [1]आष्कारनिधनं काण्वम् ॥ कण्वः । बृहती । इन्द्रः ॥

तंवोदाऽ३स्ममृतीषहाम् ॥ वासोमन्दा । नमाऽ२३न्धसाउ । वाऽ३२ । अभिवत्साम् । नस्वसराउ । धेनाऽ२३४वाः ॥ आऽ२३-इन्द्राम् ॥ गोभिर्नै । वामाऽ२३४५हाऽ६५६इ ॥ श्रीः ॥ इन्द्रंगाऽ३इर्भिर्न-वामहाइ ॥ आइन्द्रंगीर्भिः । नवाऽ२३महाउ । वाऽ३२ । द्युक्षऽसुदा-नुन्तविषाइ । भिरावाऽ२३४तीम् ॥ गाऽ२३इरीम् ॥ नपुरु । भोजा-ऽ२३४५साऽ६५६म् ॥ श्रीः ॥ गिरिन्नाऽ३पुरुभोजसाम् ॥ गाइरिन्नपु । रुभोऽ२३जसाउ । वाऽ३२ । क्षुमन्तंवा । जऽशतिनाम् । सहस्राऽ२३४-इणाम् ॥ माऽ२३क्षू ॥ गोमन्तम् । ईमाऽ२३४५हाऽ६५६इ ॥ आ-ऽ२३४५म् ॥

दी १४. उ. ५. मा. २७. धे. ॥८०८॥

१०. [2]कालेयम् ॥ कलिः ॥ ककुप् । इन्द्रः ॥

वयमूऽ३त्वामपूर्विया ॥ स्थूरान्नकात् । चिद्भराऽ२३ । ताऽ३ः । आऽ२३४ । व । स्याऽ३वाः ॥ वज्राइन्चित्रौ । वाऽ३४३ओऽ३४वा ॥ हवाऽ५महाइ ॥श्रीः॥ वज्रिन्चाऽ३इत्रऽहवामहाइ ॥ उपात्वाकौ । मन्मुता-ऽ२३ । याऽ३इ । साऽ२३४ः । नः । यूऽ३वा ॥ उग्राश्चकौ । वाऽ३४३-ओऽ३४वा ॥ मयोऽ५धृषात् ॥श्रीः॥ उग्रश्चाऽ३क्रामयोधृषात् ॥ तुवामिदाइ । अवितोऽ२३ । रोऽ३म् । वोऽ२३४ । वृ । मोऽ३हाइ । सखायऔ । वाऽ३४३ओऽ३४वा ॥ तृमाऽ५नसाइम् । होऽ५इ ॥डा॥

दी. ८. उ. ६. मा. २२. डा. ॥८०९॥

---

[1] अर्धर्चसमुच्चो गीयते । [2] द्वाविंशगुरो गीयते ।

११. [1]यज्ञायज्ञीयानि ॥ अग्निर्वैश्वानरः । गायत्री । पवमानस्सोमः ॥

उपाऽ५स्मै । गाऽ३याऽ३तानाराः ॥ पाऽ३वामाऽ३ना । याऽ२३आ । हुम्माइ ॥ दाऽ३२वाइ ॥ आभिदेवाꣳइयाऽ२क्षताउ ॥ श्रीः ॥ तेश्रा ॥ भितेमा । भृऽ३नापाऽ३याः । अथाऽ२र्वा । णोश्राऽ२३शा । हुम्माइ ॥ श्राऽ३२यूः ॥ दाइवंदेवायदाऽ२इवयाउ ॥ श्रीः ॥ यूमाः ॥ नꣳपवा । स्वाऽ३शांगाऽ३वाइ । शङ्खाऽ२ना । यशाऽ२३मा । हुम्माइ ॥ वाऽ३२ताइ ॥ शाꣳराजन्नोपथाऽ२इस्यआउ ॥

दी. १२. उ. न. मा. २१. च. ॥८१०॥

१२. [2]दवाऽ५इद्यु । ताऽ३तीऽ३याऽरुचा ॥ पाऽ३राइष्टोऽ३भा । ताऽ२३आ । हुम्माइ ॥ काऽ३२र्पा ॥ सोमाश्शुक्रागवाऽ२शिराउ ॥ श्रीः ॥ राहाइ ॥ न्वानोहे । तृऽ३भाइर्हाऽ३इताः । आवाऽ२जम् । वाजाऽ२३या । हुम्माइ ॥ क्राऽ३२मीत् ॥ साइदन्तोवनुषोऽ२यथाउ ॥ श्रीः ॥ थाम्नृ ॥ घक्सोमा । सूऽ३वास्ताऽ३याइ । संजाऽ२ग्मा । नोदाऽ२३इवा । हुम्माइ ॥ काऽ३२वाइ ॥ पावस्वद्युरियोऽ२इशाउ ॥ दी. १२. उ. न. मा. २०. यो. ॥८११॥

१३. [3]पवाऽ६मा । नाऽ३स्याऽ३तेकावाइ ॥ वाऽ३जाइन्त्साऽ३र्गाः । श्राऽ२३सा । हुम्माइ ॥ क्षाऽ३२ता ॥ श्रार्वन्तोनश्रवाऽ२स्यवाउ ॥श्रीः॥ वाश्रा ॥ च्छाकोशाम् । माऽ३धूश्चूऽ३ताम् । असाऽ२ग्रम् । वारेऽ२३आ । हुम्माइ ॥ व्याऽ३२याइ ॥ आवावशन्तधाऽ२इतयाउ ॥ श्रीः ॥ याआ ॥ चासम् । द्राऽ३माइन्दाऽ३वाः ॥ अस्ताऽ२ज्ञा । वोनाऽ२३घे । हुम्माइ ॥ नाऽ३२वाः ॥ आग्मन्नृतस्ययोऽ२निमाउ । वाऽ३४५ ॥

दी. १०. उ. न. मा. २०. बौ. ॥८१२॥

[1] प्रथमसूक्ते गीयते । [2] द्वितीयसूक्ते गीयते ।
[3] तृतीयसूक्ते गीयते ।



१४. [1]सफम ॥ देवाः । ककुप् । पवमानस्सोमः ॥

सगुन्वेऽ३यः । वासुऽ२३४नाम् ॥ योगायाऽ२म् । आनाइताऽ३याऽ३ः । इडाऽ३२३४नाम् ॥ सोमाः ॥ यास्मुऽ३क्षीऽ३ । ताऽ३४५इनोऽ६हाइ ॥

दी. ३. उ. ४. मा. ६. डो. ॥८१३॥

१५. [2]पौष्कलम् ॥ प्रजापतिः । गायत्री । पवमानस्सोमः ॥

उपशीऽ३क्षाप । तस्थूऽ२३४पाः ॥ भियासमा । धाइ । हीशाश्राऽ२३४वाइ ॥ पवा ॥ माऽ२३४५नाऽ६५६ ॥ विदाग्योऽ२३४५म् ॥

दी. २. उ. ४. मा. ४. क्षी. ॥८१४॥

१६. [3]कालेयम् ॥ कलिः । अनुष्टुबुत्तरा बृहती । पवमानस्सोमः ॥

मत्सियाऽ३पायितेमहाः ॥ पात्रास्येता । हरिवोमाऽ२३ । त्सरोमदाऽ३ः । वाऽ२३४ । पतिवृष्णे । श्राऽ३इन्दूः ॥ वाजाइसदी । वाऽ३४३ओऽ३४वा ॥ समाऽ५तमाः ॥श्रीः॥ आनस्तेऽ३गन्तुमत्सराः ॥ वृषामदो । वरेणियाऽ२३ः। सहाऽ३ । वꣳऽ२३४ । इन्द्रसा । नाऽ३साइः ॥ पृतानाषो । वाऽ३४३ओऽ३४वा ॥ अमाऽ५र्तियाः ॥ श्रीः ॥ तुवꣳहीऽ३शूरस्सनिता ॥ चोदायोमा । तुपोरथाऽ२३म् । सहाऽ३ । वाऽ२३४न् । दस्युम । व्राऽ३ताम् ॥ ओषाꣳपात्रो । वाऽ३४३ओऽ३४वा ॥ नशोऽ५पिपा । होऽ५इ ॥डा॥

दी. २०. उ. ३. मा. १८. वै. ॥८१५॥

१७. [4]ककुत्तरनौधसम् ॥ नोधाः । ककुत्तरा बृहती । इन्द्रः ॥

ताऽ२३४म् । वोदस्ममृती । षाहाम् ॥ वसोर्मन्दा । नाऽ३मान्धाऽ३साः । श्राऽ२३भी । वात्सव । स्वस । गइ । पूर्वनाऽ२३४वाः ॥ आऽ२३इन्द्राम् ॥ गाइर्भिर्नवोऽ२३४वा ॥ माऽ२३४हे ॥ श्रीः ॥ आ-

[1] द्व्यावारिंशदधिकशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[2] एकचत्वारिंशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[3] चत्वारिंशदधिकद्विशततमसूक्ते गीयते ।
[4] त्रयोदशे सूक्ते गीयते ।

३६३. प्रियमेध आङ्गिरसः। अनुष्टुब्गायत्र्यौ। इन्द्रः॥

११२१. आ त्वा रथं यथोतये (सुम्नाय वर्तयामसि।
तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पतिम्) ॥१॥

११२२. तुविशुष्म तुविक्रतो शचीवो विश्वया मते।
आ पप्राथ महित्वना ॥२॥

११२३. यस्य ते महिना महः परि ज्मायन्तमीयतुः।
हस्ता वज्रं हिरण्ययम् ॥३॥

धा. १०. उ. न. स्व. १. व. ॥३॥

---

३६३. आ। त्वा। रथम्। यथा। ऊतये। सुम्नाय। वर्तयामसि। तुवि-कूर्मिम्। तुवि। कूर्मिम्। ऋतीषहम्। ऋति। सहम्। इन्द्रम्। शविष्ठ। सत्प-तिम्। सत्। पतिम्॥ तुविशुष्म। तुवि। शुष्म। तुविक्रतो। तुवि। क्रतो। शचीवः। विश्वया। मते। आ। पप्राथ। महित्वना॥ यस्य। ते। महिना। महः। परि। ज्मायन्तम्। ईयतुः। हस्ता। वज्रम्। हिरण्ययम्॥

---

ऽ२३४इ। द्रंगीर्भिर्नवा। माहाइ॥ चूऽ३त्वाऽचूऽ३दा। नूऽ२३न्ता। वि। पाइ। माहरावाऽ२३४र्ताम्॥ गाऽ२३इरीम्॥ नपुरुमोऽ२३४वा। जाऽ२३४सास्॥ श्रीः॥ गाऽ२३४इ। रिन्नपुरुभो। जासाम्॥ चूऽ३-मान्ताऽ३म्वा। जाऽ२३ऽशा। ति। नाम्। साहस्राऽ२३४इणाम्॥ माऽ२३न्नू॥ गोमन्तमोऽ२३४वा॥ माऽ२३४हे॥

दी. ६. उ. १. मा. २१. क. ॥८१६॥

१८. कालेयम्॥ कलिः। गायत्र्युत्तरानुष्टुप्। इन्द्रः॥

आत्वाराऽ३थंयथोतयाइ॥ सुम्नायवा। तयामसाऽ२३इ। तुवा-ऽ३इ। कूऽ२३४। मिमृती। षाऽ३हाम्॥ इन्द्राऽशवी। वाऽ३४३-ओऽ२३४वा॥ ष्ठसाऽ६त्पताइम्॥ श्रीः॥ तुविशुऽ३ष्मतुविक्रवाउ॥ शचा-





ऽ२३इ। वोऽ३। वाऽ२३४इ। श्वया। माऽ३नाइ॥ आपाप्राथो। वाऽ३४३ओऽ२३४वा॥ महाऽ५इत्वना॥ श्रीः॥ यस्यतेऽ३महिनामहाः॥ पराऽ२३इ। ज्माऽ३। याऽ२३४। तमी। याऽ३तूः॥ हस्तावज्रा। वाऽ३४३ओऽ२३४वा॥ हिराऽ५ण्ययाम्। होऽ५इ॥७॥

दी. १०. उ. ३. मा. १९. बो. ॥८१७॥

१९. [1]पौष्कलम्॥ प्रजापतिः। अक्षरपङ्क्तिः। पवमानस्सोमः॥

परिप्राऽ३घ। न्वाईऽ२३४न्द्रा॥ यसो। मास्वाऽ२३४दूः॥ मित्रो॥ याऽ२३४५पूऽ६५६॥ ण्णेभगायाऽ२३४५॥

दी. २. उ. ४. मा. २. शा. ॥८१८॥

२०. [2]ऐडं कौत्सम्॥ कुत्सः। गायत्री। पवमानस्सोमः॥

स्वादीष्ठिष्ठाऽ२३। यामदिष्ठयाईया॥ पवस्वसोमधारया। पाव-स्वमो। मघाराऽ२३या॥ आइन्द्राऽ३हा। यापाऽ३हा॥ तवेसुऽ२३-ताऽ३४३ः॥ श्रीः॥ रक्षोहाहाऽ२३। विश्वचर्षणिरीया॥ अभियोनिम-योहते। आभियोनिम्। अयोहाऽ२३ताइ॥ द्रोणेऽ३हाइ। साधाऽ३हा॥ स्थमासाऽ२३दाऽ३४३त्॥ श्रीः॥ वरीहीवोऽ२३। धातमोसुवईवा॥ मऽहिष्ठोवृत्रहन्तमः। मोऽहिष्ठो। वृहन्ताऽ२३माः॥ पार्षाऽ३इहाइ। राधोऽ३हाइ॥ मघोऽ२३नाऽ३४३म्। ओऽ२३४५इ॥डा॥

दी. २४. उ. ७. मा. १५. पु. ॥८१९॥

प्रथमो विंशः॥

एकविंशस्यार्द्धः प्रपाठकः॥

१. [3]द्वितीयं कौत्सम्॥ कुत्सः। अनुष्टुप्। पवमानस्सोमः॥

सखायोदाइ॥ (द्विः)। षजिहियाम्। योधारायाऽ२। पाव-कया। परिप्रास्याऽ२। ओन्दाताऽ१इन्दुताऽ२ः॥ ओइन्दुराऽ२३श्वाः॥

---

[1] अध्यायाधिकद्विगानानुकूलस्य प्रथमस्तोत्रीयायां गीयते।
[2] पञ्चदशानुकूले गीयते।
[3] अध्यायानुकूलस्य प्रथमस्तोत्रीयायां गीयते।

नाक्रुस्त्रियः । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. ७ उ. ४. मा. ६. को. ॥८२०॥

२. [1]सौभरम् ॥ सुभरिः । गायत्री । इन्द्रः ॥

एवाऽ३होऽ३असिर्दोरयोवा ॥ एवाशूऽ२राउताऽ२३ । हो ।
स्थाऽ२३४इराः ॥ एवातेरा । धियाऽ३ऽहाऽ३इ ॥ माऽ२नाऽ२३४-
औहोवा ॥श्रीः॥ एवाऽ३राऽ३तिस्तुवीमघोवा ॥ विश्वेभाऽ२इर्धायिघाऽ२३ ।
हो । तुऽ२३४भाइः ॥ अधाचिदि । द्रनाऽ३हाऽ३इ ॥ साऽ२चाऽ२३४-
औहोवा ॥ श्रीः ॥ मोपूऽ३ब्राऽ३ह्मेवतन्द्रयोवा ॥ भुवोवाऽ२जानाऽ२३म् ।
हो । पाऽ२३४ताइ ॥ सत्स्वासुत । स्यगोऽ३हाऽ३इ ॥ माऽ२ताऽ२३४-
औहोवा ॥ ऊऽ२३४५ ॥

दी. २१. उ. ३. मा. १५. गु. ॥८२१॥

३. [2]नार्मेधम् ॥ नृमेधाः । अनुष्टुप् । इन्द्रः ॥

इन्द्रंविश्वाअवीवृधाऽ३ने ॥ स । मू । द्र । व्या । चसाङ्गाऽ३इराः ।
रथाऽ२इताऽ२३४माम् ॥ रथाइनाम् । औहोहोऽ२३४वा ॥ वाऽ२३४-
जाहाइ ॥ नाऽसात्पाता । औहोहोऽ२३४वा ॥ पाऽ२३४तीम् । एहिया-
ऽ६हा ॥श्रीः॥ सख्येतइन्द्रवाजिनाऽ३ए ॥ मा । भाइ । स । शा । वसा-
स्पाऽ३ताइ । तुवाऽ२भाऽ२३४भी ॥ प्रनोनूमा । औहोहोऽ२३४वा ॥
जाऽ२३४इतहाइ ॥ रमापारा । औहोहोऽ२३४वा ॥ जाऽ२३४इताम् ।
एहियाऽ६हा ॥श्रीः॥ पूर्वीरिन्द्रस्यरातयाऽ३ए ॥ न । वाइ । द । स्या ।
तियूताऽ३याः । यदाऽ२वाऽ२३४जा ॥ स्यगोमाता । औहोहोऽ२३४वा ॥
स्तोऽ२३४तृहाइ ॥ म्योमाऽहाता । औहोहोऽ२३४वा ॥ माऽ२३४घाम् ।
एहियाऽ६हा । होऽ५इ ॥डा॥

दी. २६. उ. ९. मा. २३. घि. ॥८२२॥

[1] त्रिषष्टितमसूक्ते गीयते ।



३६४. दीर्घतमा औचथ्यः । विराट् । अग्निः ॥

११२४. आयꣳपुरन्नार्मिणीमदीदेदत्यꣳकविर्नभन्योऽ३नार्वा ।
सूरो न रुरुकाञ्छतात्मा ॥१॥

११२५. अभि द्विजन्मा त्री रोचनानि विश्वा रजाꣳसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपाꣳसधस्थे ॥२॥

४. [1]कालेये ॥ कलिः । गायत्री । इन्द्रः ॥

इन्द्रायाऽ३हिधियेपिताः ॥ विप्राऽ२३ । जूऽ३ । ताऽ२३४ः ।
सुता । वाऽ३ताः ॥ उपाब्रह्मो । वाऽ३४३ओऽ२३४वा ॥ णिवाऽ५घताः ॥
श्रीः ॥ इन्द्रायाऽ३हिचित्रभानाउ ॥ सुताऽ२३ः । आऽ३इ । माऽ२३४इ ।
तुवा । याऽ३वाः ॥ अण्वीभिस्तो । वाऽ३४३ओऽ२३४वा ॥ नापूऽ५तासाः ॥
श्रीः ॥ इन्द्रायाऽ३हितूतुजानाः ॥ उपाऽ२३ । ब्राऽ३ । ह्माऽ२३४ ।
णिह । गाऽ३इवाः ॥ सुताइदधो । वाऽ३४३ओऽ२३४वा । ष्वनाऽ५श्चनाः ॥

दी. ११. उ. ३. मा. १८. गै. ॥८२३॥

५. [2]कलिः । अनुष्टुप् । इन्द्रः ॥

गायन्ताऽ३इत्वागायत्रिणाः ॥ अर्चान्तिया । कर्मकिणाऽ२३ः ।
ब्रह्माऽ३ । णाऽ२३४ः । त्वाशत । क्राऽ३ताउ ॥ उद्वाꣳशमो । वाऽ३४३-
ओऽ३४वा ॥ वयाऽ५इमिराइ ॥श्रीः॥ यत्सानोऽ३स्सानुमारुहाः ॥ भूर्या-
स्पष्टा । कर्तुवाऽ२३म् । तदाऽ३इ । द्रोऽ२३४ । अर्थञ्चे । ताऽ३ताइ ॥
यूथेनवो । वाऽ३४३ओऽ२३४वा ॥ ष्णिरेऽ५जताइ ॥ श्रीः ॥ युक्ष्वाहाऽ३-
इकेशिनाहराइ ॥ वृषाणाका । क्षियप्राऽ२३ । अथाऽ३ । नोऽ२३४ः ।
इन्द्रसो । माऽ३पाः ॥ गिरामुपो । वाऽ३४३ओऽ२३४वा ॥ श्रुताऽ५इचरा ।
होऽ५इ ॥डा॥

दी. १५. उ. ५. मा. २१. म. ॥८२४॥

[1] सप्तपञ्चाशदुत्तरशततमसूक्ते गीयते । अर्थैनमकोमेयम्-सूक्ते या प्रथमा सात्र द्वितीया ऋक् । या द्वितीया सा प्रथमा ज्ञेयेति । [2] नवाधिकद्विशततमसूक्ते गीयते ।

११२६. अयꣳस होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥३॥

धा. १२. उ. २. स्व. १. छ. ॥४॥

३६५. वामदेवो गौतमः । पदपङ्क्तिः । अग्निः ॥

११२७. अग्ने तमद्याश्वन्न स्तोमैः क्रतुन्न भद्रꣳहृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥१॥

११२८. अधाह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥२॥

---

३६४. आ । यः । पुरम् । नार्मिणीम् । अदीदेत् । अत्यः । कविः । नभन्यः । न । अर्वा । सूरः । न । रुरुक्वान् । शतात्मा । शत । आत्मा ॥ अभि । द्विजन्मा । द्वि । जन्मा । त्रि । रोचनानि । विश्वा । रजाꣳसि । शुशुचानः । अस्थात् । होता । यजिष्ठः । अपाम् । सधस्थे । सध । स्थे ॥ अयम् । सः । होता । यः ॥ द्विजन्मा । द्वि । जन्मा । विश्वा । दधे । वार्याणि । श्रवस्या । मर्तः । यः । अस्मै । सुतुकः । सु । तुकः । ददाश ॥

३६५. अग्ने । तम् । अद्य । अ । द्य । अश्वम् । न । स्तोमैः । क्रतुम् । न । भद्रम् । हृदिस्पृशम् । हृदि । स्पृशम् । ऋध्याम । ते । ओहैः ॥ अध । हि ।

---

६. साकमश्वे ॥ साकमश्वः । विराट् । अग्निः ॥

आयꣳपूऽ३र्न्नार्मिणीऽ६मा ॥ दीदेदत्यꣳकविर्नभन्योनार्वाऽ२ह्व ।
रोनाऽ२रुरू ॥ क्वाञ्छाऽ२३हाऽ३४३इ ॥ ताऽ२३४त्मोऽ६"हाइ ॥श्रीः॥
अभिद्वाऽ३इजन्मात्रीऽ६री ॥ चनानिविश्वारजाꣳसिशुशुचानोअस्थाद्वोऽर-
ता । यजाऽ२इष्ठोआ ॥ पाꣳसाऽ२३हाऽ३४३इ ॥ धाऽ२३४स्थोऽ६"हाइ ॥
श्रीः ॥ अयꣳसाऽ३होतायोद्वाऽ६इजा ॥ न्माविश्वादधेवार्याणिश्रवस्याम-
र्तोऽ२यो । अस्माऽ२इसुतू ॥ कोदाऽ२३हाऽ३४३इ॥ दाऽ२३४शोऽ६"हाइ॥

दी. २७. उ. ३. मा. १३. जि. ॥८२५॥



११२९. एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वऽ३र्ण ज्योतिः ।
अग्ने विश्वेभिस्सुमना अनीकैः ॥३॥

धा. ७ उ. १. स्व. ३ चि. ॥५॥

प्रथमः खण्डः ॥

---

अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः । रथीः । ऋतस्य । बृहतः । बभूथ ॥ एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न । ज्योतिः । अग्ने । विश्वेभिः । सुमनाः । सु । मनाः । अनीकैः ॥

---

७. साकमश्वः । पदपङ्क्तिः । अग्निः ॥

अग्नेताऽ३मद्याश्वाऽ६न्ना ॥ स्तोमैꣳक्रतुन्नभद्रꣳहाऽ२दीइ । स्पृ-
शाऽ२मृध्या ॥ माताऽ२३हाऽ३४३इ ॥ ओऽ२३४हौऽ६"हाइ ॥ श्रीः ॥
अधाह्याऽ३अग्नेक्रतोऽ६र्भा ॥ द्रस्यदक्षस्यसाधोरथाऽ२इरा । तस्याऽ२बृहा ॥
तोबाऽ२३हाऽ३४३इ ॥ भूऽ२३४थोऽ६"हाइ ॥श्रीः॥ एभिर्नोऽ३अर्कैर्भवा-
ऽ६नाः ॥ अर्वाङ्स्वर्णज्योतिरग्नाऽ२इवाइ । श्वेभाऽ२इस्सुमा ॥ नाना-
ऽ२३हाऽ३४३इ ॥ नाऽ२३४इकोऽ६"हाइ ॥

दी. १६. उ. ३. मा. १६. गू. ॥८२६॥

८. [1]वारवन्तीयानि ॥ इन्द्रः । ककुबुत्तरा बृहती । अग्निः ॥

एनावोआओहोहाइ ॥ ग्नाइम्नामाऽ२३४सा । ऊर्जोनपातमाहुवो-
ऽ२३४हाइ । प्रियञ्चेतिष्ठमरतिꣳस्वध्वाऽ३४ । औहोवा । इहाऽ२३४हाइ ।
उहुवाऽ२३४राम् ॥ विश्वस्य । दूतममाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ ॥
औहोऽ३१२३४ । ताम् । एहियाऽ६हा ॥ श्रीः ॥ विश्वस्यदूओहोहाइ ॥
तामामाऽ२३४ताम् । मयोजाऽ२३४हा । तेअरुणाविश्वमोजाऽ३४ । औ-
होवा । इहाऽ२३४हाइ । उहुवाऽ२३४सा ॥ मदुद्र । वाल्सुवाहूऽ३४ ।
औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । ताः । एहियाऽ६हा ॥

[1] धर्वाग्नियमुक्ते गीयन्ते ।

श्रीः ॥ मदुद्रवाओहोहाइ ॥ सुवाहूऽ२३४ताः ॥ सुत्राहाऽ२३४हाइ । यज्ञस्सुशर्मावसूऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४नाम् ॥ देवऽरा । धोजनाऽ३४ । ओहोवा । इहाऽ२३४हाइ । ओहोऽ३१२३४ । नाम् । एहियाऽ६हा ॥

दी. ३९. उ. ९. मा. २४. धी. ॥८२७॥

९. [1]इन्द्रः ॥ ककुबुत्तरा बृहती । उषाः ॥

प्रत्युवदाओहोहाइ ॥ शीआयाऽ२३४ताइ । उच्छन्तीदुहितादा-इवोऽ२३४हाइ । अपोमहीवृणुतेचक्षुपाताऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४साः ॥ ज्योतिष्कृ । णोतिसूनाऽ३४ । ओहोवा ॥ इहाऽ२३४-हाइ । ओहोऽ३१२३४ । राइ । एहियाऽ६हा ॥श्रीः॥ ज्योतिष्कृणोओहो-हाइ ॥ ताइसूनाऽ२३४राइ । उदुस्रीऽ२३४हा । यास्सृजतेसूरियस्साऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४चा ॥ उद्यन्न । क्षात्रमर्चा२४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । वात् । एहियाऽ६हा ॥ श्रीः ॥ उद्यन्नक्षाओहोहाइ ॥ त्रामर्चाऽ२३४इवात् । तवेदूऽ२३४हाइ । षोवियुषिसूरियस्याऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४चा ॥ संभक्ते । नागमेमाऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । हाइ । एहियाऽ६हा ॥

दी. ४०. उ. ९. मा. २५. सु. ॥८२८॥

१०. [2]इन्द्रः । ककुबुत्तरा बृहती । अश्विनौ ॥

इमाउवाओहोहाइ ॥ दाइविष्टाऽ२३४याः । उस्राहवन्तेअश्विनो-ऽ२३४हाइ । अयंवामह्वेअवसेशचीवाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४सू ॥ विशंवि । शा८हिगच्छाऽ३४ । ओहोवा ॥ इहाऽ२३४-हाइ । ओहोऽ३१२३४ । थाः । एहियाऽ६हा ॥श्रीः॥ विशंविशाओहोहाइ ॥ हाइगच्छाऽ२३४थाः । युवाभ्याऽ२३४इहाइ । त्रन्ददधुर्भोजनस्याऽ३४ ।

[1] सप्तत्रिंशसूक्ते गीयते । [2] अष्टत्रिंशसूक्ते गीयते ।



ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४रा ॥ चोदयाम् । सूनृतावाऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१ ३४ । ताइ । एहियाऽ६हा ॥ श्रीः ॥ चोदया८सूओहोहाइ ॥ नातावाऽ२३४ताइ । अर्वाग्राऽ२३४हा । थ८समर्तयानियच्छाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४-ताम् ॥ पिबतम् । सोमियम्माऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । धू । एहियाऽ६हा । होऽ५इ ॥डा॥

दी. ४० उ. ९ मा. ३०. भौ ॥८२९॥

११. [1]वामदेव्यानि ॥ वामदेवः । ककुबुत्तरा बृहती । अग्निः ॥

आऽ५इना । वोआऽ३ग्नाऽ३इन्नमसा ॥ ऊ । ऊर्जोनपातमाहुवेप्रिय-ञ्चेतिष्ठमरति८सुवध्व । राम् । औऽ२३होहाइ । विश्वाऽ२३स्यद् ॥ नमो-होऽ३ । हुम्माऽ२ ॥ माऽ२तोंऽ३५हाइ ॥ श्रीः ॥ वाऽ५इश्व । स्यदूऽ३-ताऽ३ममृताम् ॥ माः । योजनेअरुपाविश्वभोज । सा । औऽ३होहाइ । सदूऽ२३द्रवात् ॥ सुवाहोऽ३ । हुम्माऽ२ ॥ हऽ२तोऽ३५हाइ ॥ श्रीः ॥ साऽ५दु । द्रवाऽ३त्सूऽ३वाहुताः ॥ सु । व्रावायज्ञस्सुशर्मावसू । नाम् । औऽ२३होहाइ । देवाऽ२३८राधाः ॥ जनोहोऽ३ । हुम्माऽ२ ॥ नाऽ२-मोऽ३५हाइ ॥

दी. २२ उ. न. मा. १८. रै. ॥८३०॥

१२. [2]वामदेवः । ककुबुत्तरा बृहती । उषाः ॥

प्राऽ५त्यु । अदाऽ२र्शीऽ२आयताइ ॥ ऊ । उच्छन्तीदुहितादिवोअपो-महीवृणुतेचक्षुषात । मा । औऽ३होहाइ । ज्योताऽ२३इष्कृणो ॥ नितो-होऽ३ । हुम्माऽ२ ॥ नाऽ२रोऽ३५हाइ ॥ श्रीः॥ ज्योऽ५तिः । कृणोऽ३-ताऽ३इसूनराइ ॥ उत् । उस्रियास्सृजतेसूरियस्स । चा । औऽ३होहाइ । उद्याऽ२३न्नक्षा । त्रमोहोऽ३ । हुम्माऽ२ । चाऽ२इचोऽ३५हाइ ॥ श्रीः ॥

[1] षट्त्रिंशसूक्ते गीयते । [2] सप्तत्रिंशसूक्ते गीयते ।

ऊऽ५श्चन । नक्षाऽ३त्राऽ३मर्चिवान् ॥ ता । वेदुपोवियुपियूरियन्य । चा ।
औऽ३होहाइ । सम्माऽ२३क्तेना ॥ गमोहोऽ३ । हुम्माऽ२ ॥ माऽ२हो-
ऽ३५ हाइ ॥ दी. २३. उ. न. मा. १७ रे. ॥८-१॥

१३. [1]वामदेवः । ककुबुत्तरा बृहती । अश्विनौ ॥

आऽ५इमाः । उषाऽ३न्दाऽ३इविष्टयाः ॥ ऊ ॥ स्त्राहवन्तेअश्विना-
अयंवामह्वेअवसेशचीव । सू । औऽ३होहाइ । विशाऽ२३म्विशाम् ॥
हिगोहोऽ३ ॥ हुम्माऽ२ ॥ ह्वाऽ२थोऽ३५ हाइ ॥ श्रीः ॥ वाऽ५इशाम् ।
विशाऽ३ हाऽ३इगच्छथाः ॥ यू । वश्चित्रंददथुर्भोजनन्न । रा । औऽ३हो-
हाइ । चोदेऽ२३थाऽ सू ॥ नृतोहोऽ३ । हुम्माऽ२ ॥ वाऽ२तोऽ३५ हाइ ॥
श्रीः ॥ चोऽ५दे । थाऽसूऽ३नाऽ३र्तावताइ ॥ आ । वांग्रथसमनसानि-
यच्छ । ताम् । औऽ२३होहाइ । पिबाऽ२३तसो ॥ मियोहोऽ३ ।
हुम्माऽ२ ॥ माऽ२थोऽ३५ हाइ ॥ दी. २२. उ. न. मा. २०. यौ. ॥८२॥

१४. [2]श्रुध्यानि ॥ प्रजापतिः । ककुबुत्तरा बृहती । अग्निः ॥

एनावोआऽ२ग्निम् । नमसोवा ॥ ऊर्जोनपा । तमाहुवाइ । प्रिय-
श्चेतिष्ठमरतिस्वध्वरंविश्वस्यदूतम् । आऽ२३ । मृताउवा ॥ श्रूधियाऽ२ ॥
श्रीः॥ विश्वस्यदूऽ२तम् । अमृतोवा ॥ सयोजते । अरुषावाइ । श्वभोज-
नासदुद्रवत्सु । आऽ२३ । हुताउवा ॥ श्रूधियाऽ२ ॥श्रीः॥ सदुद्रवाऽ२त्सु ।
आहुतोवा ॥ सुब्रह्मायो । ज्ञस्सुशमाइ । वसूनान्देवराधोज । नाऽ२३ ।
नाउवा ॥ श्रूधियाऽ२ ॥ दी. २२. उ. ७. मा. १०. ढी. ॥८३॥

१५. [3]प्रजापतिः । ककुबुत्तरा बृहती । उषाः ॥

प्रत्युवदाऽ२र्शि । आयतोवा ॥ उच्छन्तीदू । हितादिवाः । अपो-
महीवृणुतेचक्षुपातमोज्योतिष्कृणोति । सूऽ२३ । नराउवा ॥ श्रूधियाऽ२ ॥

[1] अष्टाविंशसूक्ते गीयते । [2] पांचविंशसूक्ते गीयते । [3] सप्तविंशसूक्ते गीयते ।



३६६. प्रस्कण्वः काण्वः । बृहतीसतोबृहत्यौ । अग्निः ॥

११३०. अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥१॥
११३१. जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥२॥
भा. ९. उ. न. स्व. २. का. ॥३॥

३६६. अग्ने । विवस्वत् । वि । वस्वत् । उषसः । चित्रम् । राधः ।
अमर्त्य । अ । मर्त्य । आ । दाशुषे । जातवेदः । जात । वेदः । वह । त्वम् ।
अद्य । अ । द्य । देवान् । उषर्बुधः । उषः । बुधः ॥ जुष्टः । हि । दूतः । असि ।
हव्यवाहनः । हव्य । वाहनः । अग्ने । रथीः । अध्वराणाम् । सजूः । स । जूः ।
अश्विभ्याम् । उषसा । सुवीर्यम् । सु । वीर्यम् । अस्मे इति । धेहि । श्रवः । बृहत् ॥

श्रीः ॥ ज्योतिष्कृणोऽ२ति । सूनरोवा ॥ उदुस्रियाः । सृजतेसू । रियस्स-
चाउद्यन्नक्षत्रम् । आऽ२३ । चिवाउवा ॥ श्रूधियाऽ२ ॥ श्रीः ॥ उद्यन्नक्षा-
ऽ२त्रम् । अर्चिवोवा ॥ तवेदुषो । वियुषियू । रियस्यचसंभक्तेनग । मा-
ऽ२३इ । महाउवा ॥ श्रूधियाऽ२ ॥ दी. १५. उ. ६. मा. ९. तो. ॥८४॥

१६. [1]प्रजापतिः । ककुबुत्तरा बृहती । अश्विनौ ॥

इमाउवाऽ२न्दि । विष्टयोवा ॥ उस्राहवा । तेअश्विना । अयंवा-
महेवसेशचीवसूविशंविश हि । गाऽ२३ । छथाउवा । श्रूधियाऽ२ ॥
श्रीः ॥ विशंविशाऽ२ हि । गच्छथोवा ॥ युवंचित्राम् । ददथुर्भो ।
जनन्नराचोदेथासूनृ । ताऽ२३ । वताउवा ॥ श्रूधियाऽ२ ॥श्रीः॥ चोदेथा-
सूऽनृ । तावतोवा ॥ अवांग्रथाम् । समनसा । नियच्छतंपिबतसोमि ।
याऽ२३म् । मधाउवा ॥ श्रूधियाऽ२ ॥ एऽ२३हियाऽ३४३ । औ-
ऽ२३४५इ ॥ डा ॥ दी. २२. उ. ७. मा. ९. बो. ॥८५॥

[1] अष्टाविंशसूक्ते गीयते ।

१७. वारवन्तीयम् ॥ इन्द्रः । ककुबुत्तरा बृहती । अग्निः ॥

अग्नेविवाओहोहाइ ॥ स्वादुपाऽ२३४ना: । चित्रऽराधाअमर्तियो-ऽ२३४हाइ । आदाशुषेजातवेदोवहातूऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४वाम् ॥ अयादे । वऽउपवृऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । वा: । एहियाऽ६हा ॥ श्रीः ॥ अयादेवाऽओहोहाइ ॥ ऊपवृऽ२३४... दूतोअसिहव्यवाहाऽ३४ । औ-होवा । इहाऽ२३४हाइ । उहुवाऽ२३४ना: ॥ अग्ने । रथाइरध्वराऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । णाम् । एहियाऽ६हा ॥श्रीः॥ अग्नेरथाओहोहाइ ॥ आध्वाराऽ२३४णाम् । सजूराऽ२३४हा । श्चिम्या-सुपमासुवीरा ऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४याम् ॥ अस्मधे । हाइश्रवोवृऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । हात् । एहियाऽ६हा । होऽ५इ ॥डा॥ दी. ४६. उ. ६. मा. ३०. धौ. ॥२३६॥

१८. वामदेव्यम् ॥ वामदेवः । ककुबुत्तरा बृहती । अग्निः ॥

आऽ५ग्ने । विवाऽ३स्वाऽ३दुषसः ॥ चाइ । त्रऽराधोअमर्तियआदा-शुषेजातवेदोवहातु । वाम् । औऽ२३होहाइ । अयाऽ२३देव ॥ उपौहोऽ३ । हुम्माऽ२ ॥ बूऽ२घोऽ३५हाइ ॥श्रीः॥ आऽ५या । देवऽऽ३ऊऽ२षर्बुधः ॥ जू । घोहिदूतोअसिहव्यवाह । ना । औऽ२३होहाइ । अग्नाऽ२३इरधाइः ॥ अध्वौहोऽ३ । हुम्माऽ२ ॥ राऽ२णोऽ३५हाइ ॥ श्रीः ॥ आऽ५ग्ने । रथा-ऽ३इराऽ३ध्वराणाम् ॥ सा । जूरश्चिम्यासुपसासुवीरि । याम् । औऽ२३होहाइ । अस्माऽ२३इधेहाइ ॥ श्रवौहोऽ३ । हुम्माऽ२ ॥ बृऽ२होऽ३५हाइ ॥

दी. ३०. उ. न. मा. २२. बा. ॥२३७॥

१९. श्रुध्यम् ॥ प्रजापतिः । बृहती । अग्निः ॥

अग्नेविवाऽ२स्वन् । उपसोवा ॥ चित्रऽराधो । अमर्तिया । आ-

दाशुषेजातवेदोवहात्वमद्यादेवाऽउ । पाऽ२३: । बुधाउवा ॥ श्रुधियाऽ२ ॥ श्रीः ॥ अयादेवऽऽ२उ । षर्बुधोवा ॥ जुषोहिदू । तोअसिहा । व्यवाह-नोऽग्नेरथीरध्व । राऽ२३ । णाउवा ॥ श्रुधियाऽ२ ॥श्रीः॥ अग्नेरथाऽ२इ । ध्वराणोवा ॥ सजूरश्वी । भ्यामुषसा । सुवीरियमस्मेधेहिश्र । वोऽ२३ । बृहाउवा ॥ श्रुधियाऽ२ ॥ एऽ२३हियाऽ३४३ । ओऽ२३४५इ ॥डा॥

दी. २०. उ. ६ मा १० पौ. ॥२३८॥

२०. [1]महावैश्वामित्रम् ॥ विश्वामित्रः । ककुबुत्तरा बृहती । अग्निः ॥

हयाइ । हयाऽ३ । ओहाओहा ( त्रीणि त्रिः ) यज्ञायज्ञा । वाअग्नयाऽ२इ ॥ इराइरा । चदक्षसाऽ२इ । प्रप्रवयममृतञ्जा । तवेदा-साऽ२म् ॥ प्रियंमित्राम् । सुशऽसाइषाऽ२म् ॥ श्रीः ॥ प्रियंमित्राम् । सुशऽसाइषाऽ२म् ॥ ऊर्जः । नापाऽ२ ॥ तऽसहिना । यमस्मायुऽ२: ॥ दाशेमहा । व्यदातायाऽ२इ ॥श्रीः॥ दाशेमहा । व्यदातायाऽ२इ ॥ भुवत् । वाजाऽ२इ । ष्वविता । भुवद्वार्धाऽ२इ ॥ उतत्राता । तनूनाऽ२म् । उतत्रा । तातनूनाऽ२म् । हयाइ । हयाऽ३ । ओहाओहा ( त्रीणि त्रिः ) हो ऽ२ इडा (द्विः) होऽ२३४५इ ॥डा॥ दी. १४ उ १. मा ३५. सु ॥२३९॥

द्वितीयो विंशः ॥

२१. दैर्घश्रवसम् ॥ दीर्घश्रवाः । ककुबुत्तरा बृहती । अग्निः ॥

यज्ञायज्ञावोअग्नयओहाओहाऽ३ए ॥ इराइराचदक्षसे । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ प्रप्रोऽ३४वयम् ॥ अमृतम् । जातवेदसम् । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ प्रियाऽ३४म्मित्राऽ३म् ॥ सुशोऽ२३४-वा । साऽ५इषोऽ६हाइ ॥ श्रीः ॥ प्रियंमित्रऽसुशऽसिषमोहाओहाऽ३ए ॥ ऊर्जोनपा । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ तऽसाऽ३४हिना ॥ या-मस्मयुः । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ दाशाऽ३४इमहाऽ३ ॥ व्यदा-

[1] विश्वामित्र सूक्ते है सामनी गीयेते ।

ऽ२३४वा । ताऽ५योऽ६"हाइ ॥ श्रीः ॥ दाशेमहव्यदातयओहाओहाऽ३ए ॥ भुवद्वाजाइ ॥ ओऽ३हा । ओऽ३हाऽ३एऽ३४ । पुत्राऽ३४र्ववता ॥ भूवद्वृधे । ओऽ३हा । ओऽ३हाऽ३एऽ३४ ॥ उताऽ३४त्राताऽ३ ॥ तोऽ२३४वा । नूऽ५नोऽ६"हाइ ॥ दी. २६. उ. ६. मा. २७ के ॥८४०॥

एकविꣳशत्याद्यः । द्वितीयो विभागः ॥

१. [1]सꣳहितम् ॥ संहितः । गायत्री । पवमानस्सोमः ॥

अचिक्रदद्वृ । षाऽ२हरीइः ॥ महाऽ२न् । माऽ२३इत्रो । नदाऽ२-र्शताः ॥ साऽ२३ꣳवू ॥ रीऽ२ये । णदाऽ२३ । हाउवाऽ३ ॥ वृऽ२३४-ते ॥ श्रीः ॥ गिरस्तइन्द्रा । ओऽ२जसा ॥ मर्मृऽ२ । ज्याऽ२३न्ताइ । अपाऽ२स्युवाः ॥ याऽ२३भीः ॥ माऽ२दा । यशूऽ२३ । हाउवाऽ३ ॥ भाऽ२३४से ॥ श्रीः ॥ तन्त्वामदाय । घाऽ२ष्वयाइ ॥ उलोऽ२ । काऽ२३कृ । त्नुमीऽ२माहाइ ॥ ताऽ२३वा ॥ प्राऽ२शा । स्तयाऽ२३ । हाउवाऽ३ ॥ माऽ२३४हे ॥ दी. ३. उ. ३. मा. १४. डी. ॥८४१॥

२. [2]वषट्कारणिधनम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

पवस्ववाजसातये । पवस्वाऽ३वाजसातयाइ ॥ पवित्रेधारऽ३या-सुताऽ२ः । रयाम्रूऽ१ताऽ२३ः । ओमाऽ३वा ॥ इन्द्रायसोमऽ३वाइष्ण-वाऽ२इ । मवाइष्णाऽ१वाऽ२३इ । ओमोऽ३वा ॥ देवेभ्योमधुऽ३मात्त-राऽ२ः । धुमात्ताऽ१राऽ२३ः । ओम् । ओऽ२ । वाऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥ दी. १७. उ. ३. मा. १०. जौ. ॥८४२॥

३. [3]यज्ञायज्ञीयम् ॥ अग्निर्वैश्वानरः । गायत्र्युत्तरानुष्टुप् । पवमानस्सोमः ॥

पुरोऽ५जि । ताऽ३इवोऽ३अन्धासाः ॥ सूतायमा । दाऽ३याइवा-ऽ३वै । अपाऽ२श्वा । नꣳश्नाऽ२३था । हुम्माइ ॥ ष्टाऽ३२ना ॥ सखा-

---

[1] एकविंशदधिकशततमसूक्तस्य षष्ठसप्तमाष्टममन्त्रेषु गीयते ।

[2] चतुर्विंशत्युत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[3] अध्यादनसूक्ते गीयते ।



३६९. बृहदुक्थो वामदेवः । त्रिष्टुप् । इन्द्रः ॥

११३२. विधुन्दद्राणꣳसमने बहूनां युवानꣳसन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यस्समान ॥१॥
११३३. शाक्मना शाको अरुणस्सुपर्ण आ यो महश्शूरस्सनादनीडः ।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥२॥
११३४. ऐभिर्ददे वृष्ण्या पौꣳस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
ये कर्मणꣳक्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥३॥
धा. ३१. उ. ४. स्व. ७. पे. ॥७॥

३६९. विधुम । वि । धुम । दद्राणम । समने । सम । अने । बहूनाम् । युवानम । सन्तम् । पलितः । जगार । देवस्य । पश्य । काव्यम् । महित्वा । अद्य । म । व । ममार । सः । ह्यः । सम् । आन ॥ शाक्मना । शाकः । अरुणः । सुपर्णः । सु । पर्णः । आ । यः । महः । शूरः । सनात् । अनीडः । अ । नीडः । यत् । चिकेत । सत्यम् । इत् । तत् । न । मोघम् । वसु । स्पार्हम् । उत । जेता । उत । दाता ॥ आ । एभिः । ददे । वृष्ण्या । पौꣳस्यानि । येभिः । औक्षत् । वृत्रहत्याय । वृत्र । हत्याय । वज्री । ये । कर्मणः । क्रियमाणस्य । मह्ना । ऋते-कर्मम् । ऋते । कर्मम् । उदजायन्त । उत् । अजायन्त । देवाः ॥

योदीर्घजाऽ३इहियाउ ॥ श्रीः ॥ यांयाः ॥ धारया । पाऽ३वाकाऽ३या । पराऽ२इत्र । स्यन्दाऽ२३ता । हुम्माइ ॥ वुऽ३२ताः ॥ आइन्दुरश्वोनक्वा-ऽ२त्वियाउ ॥ श्रीः ॥ यास्ताम् ॥ दुरोषाम् । आऽ३भाइनाऽ३राः । सोमा-ऽ२म्बि । श्वाचाऽ२३या । हुम्माइ ॥ धाऽ३३या ॥ याज्ञायसन्तुवाऽ२-द्रयाउ ॥ वाऽ३४५ ॥ दी. ११. उ. न. मा. १९. हो. ॥८४३॥

४. वषट्कारणिधनम् ॥ प्रजापतिः । त्रिष्टुप् । इन्द्रः ॥

विधुन्दद्राणꣳसमने । बहूनाऽ३म्मन्तेबहूनाम् ॥ युवानꣳसन्तं-पलितांजऽ३गाराऽ२ । राऽ२३ । ओमोऽ३वा ॥ देवस्यपश्यकाव्यम्मऽ३-

३६८. विन्दुः पूतदक्षो वा आङ्गिरसः । गायत्री । विश्वेदेवाः ॥

११३५. अग्नि सोमा अय सुत पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥१॥

११३६. पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥२॥

११३७. उतोन्वस्य जोषमा इन्द्रस्सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥३॥

धा. ९ उ. न. स्व. ४. लो. ॥८॥

३६९. जमदग्निर्भार्गवः । बृहतीसतोबृहत्यौ । सूर्यः (इन्द्रो वा) ॥

११३८. बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥१॥

३६८. अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य । मरुतः । उत । स्वराजः । स्व । राजः । अश्विना ॥ पिबन्ति । मित्रः । मि । त्रः । अर्यमा । तना । पूतस्य । वरुणः । त्रिषधस्थस्य । त्रि । सधस्थस्य । जावतः ॥ उत । उ । नु । अस्य । जोषम् । आ । इन्द्रः । सुतस्य । गोमतः । प्रातः । होता । इव । मत्सति ॥

हाइत्वाऽ२ । वियस्माहाऽ१इत्वाऽ२३ । ओमोऽ३वा ॥ अग्नामसाग्सयन्म-ऽ३मानाऽ२ । नाऽ२३ । ओम् । ओऽ२ । वाऽ२३४ । औहोवा ॥श्रीः॥ शाक्मनाशाकाअरुणः । सुपर्णाऽ३रुणस्सुपर्णाः ॥ आयोमहश्शूरस्सनादऽ३-नाइडाऽ२ः । डाऽ२३ः । ओमोऽ३वा ॥ यश्चिकेतसत्यमित्तनऽ३मोघाऽ२म् । इत्तनामोऽ१घाऽ२३म् । ओमोऽ३वा ॥ वसुस्पार्हमुतजेतोतऽ३दाताऽ२ । ताऽ२३ । ओम् । ओऽ२ । वाऽ२३४ । औहोवा ॥श्रीः॥ एभिर्ददेवृष्ण्या-पौंऽसि । यानाऽ३इष्ण्यापौंऽसियानाइ ॥ येभिरौक्षद्वृत्रहत्यायऽ३वज्रा-ऽ२इ । आऽ२३इ । ओमोऽ३वा ॥ येकर्मणः क्रियमाणस्यऽ३माह्नाऽ२ । माणस्यामाऽ१ह्नाऽ२३ । ओमोऽ३वा ॥ ऋतेकर्मसुदजायन्तऽ३दाइवाऽ२ः । वाऽ२३ः । ओम् । ओऽ२ । वाऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥

दी. ५४ उ. ३. मा. २१. द ॥८४॥



११३९. बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥२॥

धा. १४. उ. १. स्व. १. त. ॥९॥

द्वितीयः खण्डः ॥

३६९. बट् । महान् । असि । सूर्य । बट् । आदित्य । आ । दित्य । महान् । असि । महः । ते । सतः । महिमा । पनिष्टम । मह्ना । देव । महान् । असि ॥ बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि । मह्ना । देवानाम् । असुर्यः । अ । सुर्यः । पुरोहितः । पुरः । हितः । विभु । वि । भु । ज्योतिः । अदाभ्यम् । अ । दाभ्यम् ॥

५. गौरीविते ॥ गौरीवितिः ॥ बृहती । इन्द्रः ॥

बण्म । हाऽआऽ३ । सिसूरिया ॥ बडादित्यमहाऽअसाऽ२३इ । माहस्तेसाऽ३१२३ । तोमहिमापनाऽ५इष्टमा ॥ माह्नादेवाऽ३१२३ ॥ महोवा । आऽ५सोऽ६"हाइ ॥श्रीः॥ । मह्ना । देवाऽ३ । महाऽअसाइ ॥ मह्नादेवमहाऽअसाऽ२३इ । बाट्सूर्यश्राऽ३१२३ । वसामहऽऽ५असाइ ॥ सात्रादेवाऽ३१२३ ॥ महोवा । आऽ५सोऽ६"हाइ ॥ श्रीः ॥ सत्रा । देवाऽ३ । महाऽअसाइ ॥ सत्रादेवमहाऽअसाऽ२३इ ॥ माह्नादेवाऽ३१२३ । नामसुर्यः पुरोऽ५हिताः ॥ वाइभुज्योताऽ३१२३इः ॥ अदोवा । भाऽ५-योऽ६"हाइ ॥

दी. २९. प. न. मा. २१. ल. ॥८५॥

६. [1]गौरीवितिः । त्रिष्टुप् । विष्णुः ॥

किमित् । तेवाऽ३इ । ष्णोपरिचा ॥ शिनामयद्वक्षेशिपिविष्टो-अस्माऽ२३इ । मावपौश्राऽ३१२३ । एमदपगूहएतयाऽ५दन्या । रूपस्समा-ऽ३१२३इ ॥ येबोवा । भूऽ५थोऽ६"हाइ ॥ श्रीः ॥ प्रतत् । तेआऽ३ । शिशिपिवाइ ॥ एहव्यमर्यश्शऽसामिवयुनानिविद्वाऽ२३न् । तान्त्वागृणा-

[1] यशोविशद्गुरुविष्णवतमनुक्ते गीयते ।

ऽ३१२३ । मितवसमतव्यान्क्षाऽ७यन्ताम् ॥ आस्यरजाऽ३१२३ ॥ स४पोवा । हाऽ५कोऽ६"हाइ ॥ श्रीः ॥ वषट् । तेवाऽ३इ । ष्णवासआ ॥ कृणोमितन्मेजुषस्वशिपिविष्टहव्याऽ२३म् । वार्धन्तुत्वाऽ३१२३ । सुष्टु-तयोगिरोमेयूऽ७यंपा ॥ तामुवस्ताऽ३१२३इ ॥ भिस्सोवा । दाऽ५नो-ऽ६"हाइ ॥ दी. २१. उ. न. मा. २०. हौ. ॥८४६॥

७. [1]श्रायन्तीयम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

पवस्ववाजसाऽ१तायाइ ॥ पवाऽ२इत्रेधाऽ२ । रयाऽ२सुताः । आइन्द्रायसो । मवाइष्णाऽ१वाऽ२इ ॥ देवेभ्योमधुमत्तरः । देऽ२३वे ॥ भ्योमाधूऽ३मा । हुम् । तराऽ३ः । ओऽ२३४वा ॥ हेऽ२३४५ ॥ दी. ८. उ. ३. मा. ९. डो. ॥८४७॥

८. [2]आन्धीगवम् ॥ अन्धीगुः । अक्षरपङ्क्तिः । पवमानस्सोमः ॥

पाऽ१वास्वा ॥ सोऽ२३मा । हुम्माऽ२१२ । महान्तसमुद्र४पिता-देवानाऽ२३४५म् ॥ वाइश्वाऽ२उवा ॥ माऽ२३इघा । मा । औऽ३होवा । हौऽ५इ ॥डा॥ दी. ४. उ. २. मा. ५. शु. ॥८४८॥

९. [3]द्यौतानम् ॥ द्युतानः । बृहती । पवमानस्सोमः ॥

हाऽ३ । ओऽ३हाऽ३ (द्विः) हाइ । उत्सोदेवोऽ२ । हिरण्याऽ२३४याः ॥ ( द्वे द्विः ) दुहानऊधर्दिवियाऽ२म् । मधूप्राऽ२३४याम् ॥ प्रत्न७सधाऽ२ । स्थमासाऽ२३४दात् । हाऽ३ । ओऽ३हाऽ३ ( द्विः ) हाऽ३४ । औहोवा ॥ आऔऽ३होऽ२३४५ ॥ दी. ८. उत्. न. मा. ८. रे. ॥८४९॥

एकविंशः प्रपाठकः ॥

इत्यूहगाने प्रायश्चित्तपर्व सम्पूर्णम् ॥

[1] चतुर्विंशत्युत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[2] अशीत्युत्तरशततमसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[3] नवमसूक्तस्य द्वितीयस्तोत्रीयायां गीयते ।

अथोहगाने सप्तमं क्षुद्रपर्व ॥

१. [1]ककुबुत्तराकण्वरथन्तरम् ॥ कण्वः । ककुबुत्तरा बृहती । इन्द्रः ॥

ॐ॥ आभित्वाशूरनोनुमाः॥ अदुग्धाआइ । वाऽ२धाइनाऽ२वाः। ईशा-
नमस्यजगतस्सुवर्दृशाऽ२३४मैही ॥ ईशानाऽ२३४मों ॥ इन्द्रऽ३आउवाऽ२३॥
एऽ३ । स्थुषुश्रा ॥श्रीः॥ आइशानमिन्द्रसुस्थुपाः ॥ नाऽ३त्वावँ६ऽ३श्यान् ।
यादिवियोनपार्थिवाऽ२३४एही ॥ नजातोऽ२३४ना ॥ जनाऽ३१उवाऽ२३ ॥
एऽ३ । ष्यतआ ॥श्रीः॥ नाजातोनजनिष्यताइ ॥ आऽ३श्वायाऽ३न्तः ॥
मघवन्निन्द्रवाजिनाऽ२३४एही ॥ गव्यन्ताऽ२३४स्त्वा ॥ हवाऽ३१उवाऽ२३॥
एऽ३ । महआ ॥

दी. २२. उ. ७. मा. २०. क्री. ॥८५०॥

२. [2]नौधसम् ॥ नोधाः । अनुष्टुप् । पवमानस्सोमः ॥

आऽ२३४इ । दुरश्वोनक्त । त्वायाः ॥ तन्दुरोषाम् । आऽ३भोइ-
नाऽ३राः । सोऽ२३माम् । वि । श्वा । चायावाऽ२३४या ॥ याऽ२३ना ॥
यासन्तुवोऽ२३४वा ॥ द्राऽ२३४याः ॥

दी. २. उ. १. मा. ७. चे. ॥८५१॥

३. श्यैतम् ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

इन्दुरश्वोनक्त । त्वियाऽ३४औहोवा ॥ तान्दुरोषम् । अभाइनरा-
ऽ२३४ः । ओऽ६हा । सो । मांवाऽ२३इश्वा । चियाऽ२ । याऽ२३४या ॥
यज्ञायसान्तूऽ३ना ॥ हुम्माइ । द्राऽ२याऽ२३४औहोवा ॥ वाऽ२३४ऊ ॥

दी. ८. उ. १. मा. ७. दे. ॥८५२॥

४. [3]ऐडं कौत्सम् ॥ कुत्सः । गायत्री । पवमानस्सोमः ॥

सनाइन्द्राऽ२३ । ययज्यवईया ॥ वरुणायमरुद्भ्यः । वाजुणाय ।
मरुद्भ्याऽ२३याः ॥ वाराऽ३इहाइ । वोवीऽ२ट्टाइ ॥ परिस्राऽ२३वाऽ३४३ ।
ओऽ२३४५इ ॥डा॥

दी. ४. उ. २. मा. ७. धे. ॥८५३॥

[1] एकादशे सूक्ते गीयते ।

[2] अष्टादशसूक्तस्य तृतीयस्तोत्रीयायां द्वे सामनी गीयेते ।

[3] अष्टमसूक्तस्य मध्यमस्तोत्रीयायां गीयते ।

५. [1]नौधसम् ॥ नोधाः । बृहती । पवमानस्सोमः ॥

ऊऽ२३४त् । सोदेवोहिर । ण्ययायाः ॥ उत्सोदेवो । हाऽ३-इराण्याऽ३याः । दूऽ२३हा । नाऊधः । दिवि । याम् । माधुश्राऽ२३४-याम् ॥ श्राऽ२३लाम् ॥ साघस्थमोऽ२३४वा ॥ साऽ२३४दात् ॥

दी. ६. उ. १. मा. १०. कौ. ॥८५४॥

६. [2]द्विरभ्यस्तमाकूपारम् ॥ अकूपारः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअन्धसः । पूऽ२३४ । रोजितोहोऽ५इवोअन्धसाः ॥ सुतायमादयित्नवे । सूऽ२३४ । तायमोहोऽ५दयित्नवाइ ॥ अपश्वानꣳश्न-थिष्टन । आऽ२३४ । पश्वानोहोऽ५श्नथिष्टना ॥ सखायोदीर्घजिह्वियम् ॥ साऽ२३४ । खायोदोहोऽ५र्घजि । ह्वाऽ५योऽ६"हाइ ॥श्रीः॥ सखायोदीर्घ-जिह्वियम् । साऽ२३४ । खायोदोहोऽ५र्घजिह्वियाम् ॥ योधारयापावकया । योऽ२३४ । धारयोहोऽ५पावकया ॥ परिप्रस्यन्दतेसुतः । पाऽ२३४ । रिप्रस्योहोऽ५न्दतेसुताः ॥ इन्दुरश्वोनकृत्वियः । आऽ२३४इ । दुरश्वोहोऽ५-नकृ । त्वाऽ५योऽ६"हाइ ॥श्रीः॥ इन्दुरश्वोनकृत्वियः । आऽ२३४इ । दुर-श्वोहोऽ५नकृत्वियाः ॥ तन्दुरोषमभीनरः । ताऽ२३४म् । दुरोषोहोऽ५-अभीनराः ॥ सोमंविश्वाच्याधिया । सोऽ२३४ । मंविश्वोहोऽ५चियाधिया ॥ यज्ञायसन्त्वद्रयः । याऽ२३४ । ज्ञायसोहोऽ५न्तुव । द्राऽ५योऽ६"हाइ ॥

दी. ५५. उ. न. मा. २४. वी. ॥८५५॥

७. [3]श्यैते ॥ प्रजापतिः । अनुष्टुप् । पवमानस्सोमः ॥

पुरोजितीवोअ । धसाऽ३४औहोवा ॥ सुतायमा । दयाइत्नवा-ऽ२३४इ । ओऽ६हा । अ । पश्वाऽ२३नाम् । श्नथाऽ२इ । ष्टाऽ२३४ना ॥ सखायोदाइर्घाऽ३जा ॥ हुम्माइ । ह्वाऽ२याऽ२३४औहोवा ॥

दी. ११. उ. १. मा. ६. को. ॥८५६॥

८. [1]प्रजापतिः । बृहती । पवमानस्सोमः ॥

उत्सोदेवोहिर । ण्ययाऽ३४औहोवा ॥ ऊत्सोदेवः । हिरण्यया-ऽ२३४ः । ओऽ६हा । दुहानऊधः । दाइवाऽ२३याम् । मधूऽ२ । प्राऽ२३४-याम् ॥ प्रत्नꣳसधस्थाऽ३मा ॥ हुम्माइ । साऽ२दाऽ२३४औहोवा ॥ दाऽ२३४त् ॥

दी. ११. उ. २. मा. १०. खौ. ॥८५७॥

९. [2]नौधसम् ॥ नोधाः । अनुष्टुप् । पवमानस्सोमः ॥

पूऽ२३४ । रोजितीवोअ । धासाः ॥ सुतायमा । दाऽ३याइत्ना-ऽ३वे । आऽ२३पा । श्वा । नाम् । श्नथिष्टाऽ२३४ना ॥ साऽ२३खा ॥ योदीर्घजोऽ२३४वा ॥ ह्वीऽ२३४याम् ॥

दी. ६. उ. १. मा ५. कु. ॥८५८॥

१०. [3]नौधसश्यैतम् । नोधाः प्रजापतिश्च । बृहती । इन्द्रः ॥

ताऽ२३४म् । वोदस्मऋती । षाहाम् ॥ वसोर्मन्दा । नाऽ३मा-न्धाऽ३साः । अभिवत्सन्न । स्वासाऽ२३राइ । पुवाऽ२इ । नाऽ२३४वाः ॥ इन्द्रंगीर्भाइर्नाऽ३वा ॥ हुम्माइ । माऽ२हाऽ२३४औहोवा ॥ श्रीः ॥ आऽ२३४इ । द्रंगीर्भिर्नवा । माहाइ ॥ इन्द्रंगीभाइः । नाऽ३वामाऽ३-हाइ । द्युक्षꣳसुदानुम् । तावाऽ२३इषाइ । भिराऽ२ । वाऽ२३४ताम् ॥ गिरिन्नपूरूऽ३भो ॥ हुम्माइ । जाऽ२साऽ२३४औहोवा ॥श्रीः॥ गाऽ२३४इ । रिन्नपुरुभो । जागाम् । गिरिन्नपु । रूऽ३भोजाऽ३साम् । क्षुमन्तंवाजम् । शाताऽ२३इनाम् । सहाऽ२ । स्राऽ२३४इणाम् ॥ मक्षूगोमान्ताऽ३मा ॥ हुम्माइ । माऽ२हाऽ२३४औहोवा ॥ वाऽ२३४इ ॥

दी. १८. उ. ६. मा. २०. टी. ॥८५९॥

११. [4]श्यैतनौधसम् । प्रजापतिः नोधाश्च । बृहती । इन्द्रः ॥

अभिप्रवस्सुरा । धसाऽ३४औहोवा ॥ आइन्द्रमर्च । यथा-विदाऽ२३४इ । ओऽ६हा । योऽ२३जा । रीतृभ्यः । मघ । वा । पुरुवा-

[1] नवमसूक्तस्य मध्यमस्तोत्रीयायां गीयते । [2] अष्टादशे सूक्ते गीयते ।
[3] अष्टादशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।

[1] नवमसूक्तस्य मध्यमस्तोत्रीयायां गीयते । [2] अष्टादशसूक्तस्य प्रथमस्तोत्रीयायां गीयते ।
[3] नवोदशसूक्ते गीयते । [4] अष्टपञ्चाशत्सूक्ते गीयते ।

ऽ२३४मुः ॥ साऽ२३हा ॥ स्रेणेवशोऽ२३४वा ॥ क्षाऽ२३४तौ ॥ श्रीः ॥ सहस्रेणेवशि । क्षताऽ३४औहोवा ॥ साहस्रेणे । वशाइक्षताऽ२३४इ । ओऽ६हा । शाऽ२३ता । नीकेव । प्रजि । गा । ताइघाष्णूऽ२३४या ॥ हाऽ२३न्ताइ ॥ वार्त्राणिदोऽ२३४वा । शूऽ२३४पे ॥श्रीः॥ हन्तिवृत्राणिदा । शुषाऽ३४औहोवा ॥ हान्तिवृत्रा । णिदाशुषाऽ२३४इ । ओऽ६हा । गाऽ२३इरः । आइव । प्रर । साः । आ । स्यापिन्वाऽ२३४इराइ ॥ दाऽ२३त्रा ॥ णाइपुरुभोऽ२३४वा ॥ जाऽ२३४साः ॥

दी. १७. उ. ३. मा. २०. जौ. ॥८६०॥

१२. [1]वारवन्तीये ॥ इन्द्रः । ककुबुत्तरा बृहती । इन्द्रः ॥

अभित्वाशाऔहोहाइ ॥ रानोनूऽ२३४माः । अदुग्धाइवधेनावोऽ२३४हाइ । ईशानमस्यजगतस्सुवर्दृऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । उहुवाऽ२३४शाम् ॥ ईशानम् । आइन्द्रसुस्थूऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । पाः । एहियाऽ६हा ॥ श्रीः ॥ ईशानमाऔहोहाइ ॥ द्रासुस्थूऽ२३४पाः । नत्वावाँऽ२३४हाइ ॥ अन्योदिवियोनपार्थोऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४वाः ॥ नजातः । नाजनिष्याऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । ताइ । एहियाऽ६हा ॥ श्रीः ॥ नजातोनाऔहोहाइ ॥ जानाइष्याऽ२३४ताइ । अश्वायाऽ२३४हा । तोमघवन्निन्द्रवाजाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४नाः ॥ गव्यन्तः । त्वाहवामाऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । हाइ । एहियाऽ६हा ॥ दी. ४२. उ. ९. मा. २९. झो. ॥८६१॥

१३. [2]तुवामिद्धाऔहोहाइ ॥ हावामाऽ२३४हाइ । सातौवाजस्यकारावोऽ२३४हाइ । त्वांवृत्रेष्विन्द्रसत्पतिन्नाऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४गः ॥ तुवांका । ष्ठास्वर्वतोऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । ताः । एहियाऽ६हा ॥ श्रीः ॥ तुवांकाष्ठाऔहोहाइ ॥ स्वर्वतोऽ२३४ताः । सत्वान्नाऽ२३४हाइ । चित्रवज्रहस्तधृष्णूऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४या ॥ महस्त । वानोअद्राऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । वाः । एहियाऽ६हा ॥ श्रीः ॥ महस्तवाऔहोहाइ ॥ नोअद्राऽ२३४इवाः । गामाश्वाऽ२३४हाइ । रथियमिन्द्रसङ्काऽ३४ । औहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४श ॥ सत्रावा । जाक्षजिग्यूऽ३४ । औहोवा ॥ इहाऽ२३४हाइ । औहोऽ३१२३४ । पाइ । एहियाऽ६हा । होऽइ ॥डा॥ दी. ३९. उ. ९. मा. २८. धै. ॥८६२॥

१४. [1]वाज्निधनकौत्से ॥ कुत्सः । बृहती । इन्द्रः ॥

तंवोदास्माऽ३१२३४म् । ऋतो । षहाऽ३म् ॥ वसोर्मन्दाऽ३१२३४ । नम । धसाऽ३ः ॥ अभीवात्साऽ३१२३४म् । नस्वसरेषु । नवाऽ३ः ॥ इन्द्रांगाइर्भीऽ३१२३इः । नवाऽ५महाउ ॥श्रीः॥ इन्द्रांगाइर्भीऽ३१२३४इः । नवा । महाऽ३इ ॥ इन्द्रंगीर्भीऽ३१२३४इः । नवा । महाऽ३इ ॥ द्युक्षाँसुदाऽ३१२३४ । तुन्तविषीभिरा । वृताऽ३म् ॥ गिराइन्नापूऽ३१२३ । रुभोऽ५जसाउ ॥श्रीः॥ गिराइन्नापूऽ३१२३४ । रुभो । जसाऽ३म् ॥ गिरिन्नपूऽ३१२३४ । रुभो । जसाऽ३म् ॥ द्युमान्तांवाऽ३१२३४ । ज़ँशतिनँसह । स्रिणाऽ३म् ॥ मक्षूगोमाऽ३१२३ । तमाऽ५इमहाउ ॥ दी. ११. उ. १२. मा. २५. खु. ॥८६३॥

१५ [2]अभाइप्रावाऽ३१२३४ः । सुरा । धसाऽ३म् ॥ इन्द्रमर्चाऽ३१२३४ । यथा । विदाऽ३इ । योजारितृऽ३१२३४ । भ्योमघवापुरू ।

[1] एकादशसूक्ते गीयते । [2] सप्तपञ्चाशत्तमसूक्ते गीयते ।

[1] त्रयोदशसूक्ते गीयते । [2] अष्टपञ्चाशत्तमसूक्ते गीयते ।

वसू३ः ॥ महास्रेणा३१२३इ । वज्राऽ५इक्षताउ ॥ श्रीः ॥ महास्रेणा-
ऽ३१२३४इ । वशि । क्षता३इ ॥ महस्रेणाऽ३१२३४इ । वशि ।
क्षताऽ३इ ॥ शतानीकाऽ३१२३४इ । वज्रजिगातिग्र । ष्णुयाऽ३ ॥ हन्ता-
इवार्त्राऽ३१२३ । णिदाऽ५शुपाउ ॥ श्रीः ॥ हन्ताइवार्त्राऽ३१२३४ ।
णिदा । शुपाऽ३इ ॥ हन्तिवृत्राऽ३१२३४ । णिदा । शुपाऽ३इ ॥ गिरे-
गइवाऽ३१२३४ । प्ररसाअस्यपि । न्विराऽ३इ ॥ दत्राणाइपूऽ३१२३ ।
रुमोऽ७जसाउ ॥वा॥ दी. ११. उ. १२. मा. २३. लि. ॥८६४॥

१६. [1]कण्वरथन्तरम् ॥ कण्वः । ककुबुत्तरा बृहती । इन्द्रः ॥

आभित्वापूर्वपीतयाइ ॥ इन्द्रस्तोमाइ । भीऽ३रायाऽ३वाः । समी-
चीनासऋभवस्समस्वराऽ२३४नैही ॥ रुद्रागाऽ२३४र्णा । तपूऽ२आउवा-
ऽ२३॥ एऽ३ । वियमा॥श्रीः॥रुद्रागृणन्तपूर्वियाम् ॥ आऽ३स्येदाऽ३इन्द्राः ।
वावृधेवृष्णियऽशवाऽ२३४एही ॥ मदेसूऽ२३४ता ॥ स्यवाऽ३१उवाऽ२३ ॥
एऽ३ । ष्णविया ॥ श्रीः ॥ सादेसुतस्यविष्णवाइ ॥ आऽ३ग्राताऽ३मा ।
स्यमहिमानमायवाऽ२३४एही ॥ अनुष्टूऽ२३४वा ॥ तिपूऽ३आउवाऽ२३ ॥
एऽ३ । वथआ ॥ दी. २२. उ. ७. मा. १६. बू. ॥८६५॥

१७. [2]कण्वबृहती ॥ कण्वः । ककुबुत्तरा बृहती । इन्द्रः ॥

औहोतुवामिद्धाऽ३ए ॥ हवामाऽ१हाऽ२३४इ । हाहोइ । सातौ-
वाजस्यकारवः । तुवांवाऽ१त्राऽ२३४ । हाहोइ । पूइन्द्रसत् । पताइवा-
ऽ१राऽ२३४ः । हाहोइ ॥ तुवांकाऽ१ष्ठाऽ२३४ । हाहो ॥ सुअ्राऽ३ ।
वोऽ२३४ताः । उहुवाऽ६हाउ ॥ वा ॥ श्रीः ॥ औहोतुवांकाष्ठाऽ३ए ॥
सुआर्वाऽ१ताऽ२३४ः । हाहोइ । सात्वन्नधि । त्रवाऽज्राऽ१हाऽ२३४ ।
हाहो । स्तघाष्णूऽ१याऽ२३४ । हाहोइ ॥ महास्ताऽ१वाऽ२३४ । हाहो ॥

[1] एकोननवत्युत्तरद्विशततमसूक्ते गीयते ।

[2] सप्तपञ्चाशमसूक्ते गीयते ।

नोआऽ३ । द्राऽ२३४इवाः । उहुवाऽ६हाउ ॥वा॥ श्रीः ॥ औहोमहस्तवा-
ऽ३ए ॥ नोआद्राऽ१इवाऽ२३४ः । हाहोइ । गामश्रुवम् । स्थाइयाऽ१मा-
ऽ२३४ । हाहोइ । द्रसांकाऽ१इगाऽ२३४ । हाहोइ ॥ सत्रावाऽ१जा-
ऽ२३४म् । हाहो ॥ नजाऽ३इ । ग्मूऽ२३४पाइ । उहुवाऽ६हाउ ॥वा॥
दी. २६. उ. ८. मा. ३६. गू. ॥८६६॥

१८. [1]औहोतुवऽहियाऽ३ए ॥ हिवाइराऽ१वाऽ२३४इ । हाहोइ ।
वाइदामगंवसुत्तये । उद्वावाऽ१पीऽ२३४ । हाहो । स्वामघवन्न । गवा-
इष्टाऽ१याऽ२३४इ । हाहोइ ॥ उदाइन्द्राऽ१आऽ२३४ । हाहो । उदाआ-
ऽ१इन्द्राऽ२३४ । हाहो ॥ श्रमाऽ३इ । ष्टाऽ२३४याइ । उहुवाऽ६हाउ ॥वा॥
श्रीः॥ औहोउदिन्द्रआऽ३ए ॥ श्रमाइष्टाऽ१याऽ२३४इ । हाहोइ । तुवंपुरू ।
सहास्राऽ१णाऽ२३४इ । हाहोइ । शतानाऽ१इचाऽ२३४ । हाहोइ ॥
यूथादाऽ१नाऽ२३४ । हाहो ॥ यमाऽ३ । हाऽ२३४साइ । उहुवाऽ६हाउ ॥
वा ॥ श्रीः ॥ औहोयूथादानाऽ३ए ॥ यमाऽहाऽ१साऽ२३४इ । हाहोइ ।
आपुरन्दरम् । चकृमाऽ१वाऽ२३४ । हाहोइ । प्रवाचाऽ१साऽ२३४ः ।
हाहोइ ॥ इन्द्रांगाऽ१याऽ२३४ । हाहो ॥ तोआऽ३ । वाऽ२३४साइ ।
उहुवाऽ६हाउ ॥वा॥ दी. २७. उ. ८. मा. ३८. जै. ॥८६७॥

१९. [2]महावैष्टम्भे ॥ विष्टम्भः । बृहती । इन्द्रः ॥

यद्यावइन्द्रोहाइ । द्रतेशतोवा ॥ शतंभूमीः । उतास्योऽ१यूऽ२३ः ।
होवाऽ३हाइ । नत्वावज्रिन्त्सहस्रऽसू । रियोआऽ१नूऽ२३ । होवाऽ३हाइ ॥
नजाताऽ१माऽ२३ । होवाऽ३हा ॥ ष्टरो । दाऽ२साऽ२३४औहोवा ॥श्रीः॥
नजातमोहा । ष्टरोदसोवा ॥ नाजातम । ष्टरोदाऽ१नाऽ२३इ । होवाऽ३हाइ ।
आपप्राथमहिनाद्रु । ष्णियावाऽ१पीऽ२३न । होवाऽ३हाइ ॥ विश्वाशा-

[1] द्विनवत्युत्तरद्विशततमसूक्ते गीयते ।

[2] पञ्चषष्ठ्युत्तरत्रिशततमसूक्ते गीयते ।

३७०. सुकक्ष आङ्गिरसः। ।।गायत्री। इन्द्रः॥

११४०. उप नो हरिभिस्सुतं याहि मदानां पते। उप नो हरिभिस्सुतम् ॥१॥

११४१. द्विता यो वृत्रहन्तमो विद इन्द्रश्शतक्रतुः। उप नो हरिभिस्सुतम् ॥२॥

११४२. त्व९हि वृत्रहन्नेषां पाता सोमानामसि। उप नो हरिभिस्सुतम् ॥३॥

धा. १३. उ. न. स्व. ४. री. ॥१०॥

३७१. वसिष्ठो मैत्रावरुणिः। विराट्। इन्द्रः॥

११४३. प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥१॥

११४४. उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः।
तस्य व्रतानि न मिनन्ति धीराः ॥२॥

---

३७०. उप। नः। हरिभिः। सुतम्। याहि। मदानाम्। पते। उप। नः। हरिभिः। सुतम्॥ द्विता। यः। वृत्रहन्तमः। वृत्र। हन्तमः। विदे॥ इन्द्रः। शतक्रतुः। शत। क्रतुः। उप। नः। हरिभिः। सुतम्॥ त्वम्। हि। वृत्रहन्। वृत्र। हन्। एषाम्। पाता। सोमानाम्। असि। उप। नः। हरिभिः। सुतम्॥

३७१. प्र। वः। महे। महेवृधे। महे। वृधे। भरध्वम्। प्रचेतसे। प्र। चेतसे। प्र। सुमतिम्। सु। मतिम्। कृणुध्वम्। विशः। पूर्वीः। प्र। चर। चर्षणिप्राः। चर्षणि। प्राः॥ उरुव्यचसे। उरु। व्यचसे। महिने। सुवृक्तिम्। सु। वृक्तिम्। इन्द्राय। ब्रह्म। जनयन्त। विप्राः। वि। प्राः॥ तस्य। व्रतानि।

---

ऽ१वाऽ२३। होवाऽ३हा। प्रश। वाऽ२साऽ२३४औहोवा॥ श्रीः॥
विश्वाशवोहाइ। प्रशवसोवा॥ वाइश्वाशवि। प्रशावाऽ१साऽ२३। होवा-
ऽ३हाइ। अस्मा९अवमघवन्गो। मताइग्राऽ१जाऽ२३इ। होवाऽ३हाइ॥
वज्राइन्वाऽ१इन्नाऽ२३। होवाऽ३हाइ॥ भिरू। ताऽ२इमाऽ२३४औहोवा॥

दी. २४. उ. १३. मा. २५. दु. ॥८६८॥



११४५. इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै।
हर्यश्वाय बर्हया समापीन् ॥३॥

धा. २६. उ. न. स्व. ३. हि. ॥११॥

३७२. वसिष्ठो मैत्रावरुणिः। बृहतीसतोबृहत्यौ। इन्द्रः॥

११४६. यदिन्द्र यावतस्त्वमेतावदहमीशीय।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय र९सिषम् ॥१॥

११४७. शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे।
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न ॥२॥

धा. १४. उ. १. स्व. २. ना. ॥१२॥

---

न। मिनन्ति। धीराः॥ इन्द्रम्। वाणीः। अनुत्तमन्युम्। अनुत्त। मन्युम्। एव। सत्रा। राजानम्। दधिरे। सहध्यै। हर्यश्वाय। हरि। अश्वाय। बर्हय। सम्। आपीन्॥

३७२. यत्। इन्द्र। यावतः। त्वम्। एतावत्। अहम्। ईशीय। स्तोतारम्। इत्। दधिषे। रदावसो। रद। वसो। न। पापत्वाय। र-सिषम्॥ शिक्षेयम्। इत्। महयते। दिवेदिवे। दिवे। दिवे। रायः। आ। कुहचिद्विदे। कुह-चित्। विदे॥ न। हि। त्वत्। अन्यत्। अन्। यत्। मघवन्। नः। आप्यम्। वस्यः। अस्ति। पिता। च। न॥

---

२०. यदिन्द्रयोहा। वतस्तुवोवा॥ आइतावद। हमाइशाऽ१याऽ२३।
होवाऽ३हाइ। स्तोतारमिद्दधिषे। रदावाऽ१साऽ२३उ। होवाऽ३हाइ॥
नपापाऽ१त्वाऽ२३। होवाऽ३हा॥ यर। साऽ२इपाऽ२३४औहोवा॥ श्रीः॥
नपापत्वोहा। यर९सिपोवा॥ नापापत्वा। यरा९साऽ१इपाऽ२३म्।
होवाऽ३हाइ। शिक्षेयमिन्महयते। दिवाइदाऽ१इवाऽ२३इ। होवाऽ३हाइ॥
रायाआऽ१कूऽ२३। होवाऽ३हाइ॥ हचित्। वाऽ२इदाऽ२३४औहोवा॥
श्रीः॥ रायआकोहाइ। हचिद्विदोवा॥ रायआकु। हचाइद्वाऽ१इदाऽ२३इ।

३७३ वसिष्ठो मैत्रावरुणिः । विराट् । इन्द्रः ॥

११४८. श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।

कृष्वा दुवाꣳस्यन्तमा सचेमा ॥१॥

३७३. श्रुधि । हवम् । विपिपानस्य । वि । पिपानस्य । अद्रेः । अ । द्रेः । बोध । विप्रस्य । वि । प्रस्य । अर्चतः । मनीषाम् । कृष्व । दुवाꣳसि । अन्तमा । सचा । इमा ॥ न । ते । गिरः । अपि । मृष्ये । तुरस्य । न । सुष्टुतिम् । सु ।

होवाऽ३हाइ । नहित्वदन्यन्मघवन् । नआपाऽ१याऽ२३म् । होवाऽ३हाइ ॥ वस्योआऽ१स्ताऽ२३इ । होवाऽ३हाइ ॥ पिता । चाऽ२नाऽ२३४ओहोवा ॥ दोऽ२३४शाः ॥ दी. २०. उ. १५. मा. ३५. शु. ॥८६९॥

प्रथमो विꣳशः ॥

द्वाविꣳशस्यार्द्धप्रपाठकः ॥

१. [1]सहोदैर्घतमसे ॥ इन्द्रः । विराट् । इन्द्रः ॥

हाउपिबा ॥ सोममिन्द्र । मा । दतुत्वाऽ३ । दतुत्वा । यन्ते-सुषावहरिया । श्वाऽ१द्रीऽ२ः ॥ श्वाद्रीऽ२ः ॥ सोतुर्बाहुभ्याम् । सुयताऽ३ः ॥ (द्विः) नाऽ२र्वाऽ२३४ओहोवा ॥श्रीः॥ हाउयास्ताइ ॥ मादोयुजियः । चा । रुरस्ताऽ३इ । रुरस्ताइ । येनवृत्राणिहर्यश्वा । हाऽ१ꣳसाऽ२इ । हाꣳसा-ऽ२इ ॥ सत्वामिन्द्रा । प्रभूवसाऽ३उ । भूवसाऽ३उ ॥ ममाऽ२त्तूऽ२३४-ओहोवा ॥श्रीः॥ हाउबोधा ॥ सुमेमघवन् । वा । चमेमाऽ३म् । चमेमाम् । यान्तेवसिष्ठोअर्चतिप्रा । शाऽ१स्ताऽ२इम् । शास्ताऽ२इम् ॥ इमाब्रह्मा । सधमादाऽ३इ । धमादाऽ३इ ॥ जुषाऽ२स्वाऽ२३४ओहोवा ॥ दी. २५. उ. ९. मा. २९. भो. ॥८७०॥

२. हाउश्रुधाइ ॥ हावंविपिपा । ना । स्याद्राऽ३इः । स्याद्राइः ॥ बोधाविप्रस्यार्चतोमा । नीऽ१षाऽ२ । नीषाऽ२ ॥ कृष्वादुवाꣳसाइ ।

[1] षण्णवतितमसूक्ते गीयते ।



११४९. न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।

सदा ते नाम स्वयशो विवक्मि ॥२॥

११५०. भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।

मारे अस्मन्मघवञ्ज्योक्कः ॥३॥

धाः १५. उ. ३. स्व २. बा. ॥१३॥

तृतीयः खण्डः ॥

स्तुतिम् । असुर्यस्य । अ । सुर्यस्य । विद्वान् । सदा । ते । नाम । स्वयशः । स्व । यशः । विवक्मि । भूरि । हि । ते । सवना । मानुषेषु । भूरि । मनीषी । हवते । त्वाम् । इत् । मा । आरे । अस्मत् । मघवन् । ज्योक् । करिति ॥

अन्तमाऽ३ ॥ ( द्विः ) सचेऽ२माऽ२३४ओहोवा ॥ श्रीः ॥ हाउनताइ ॥ गाइरोअपिम् । ष्याइ । तुरस्याऽ३ । तुरस्या । नसुष्टुतिमसुर्यस्यवाइ । दूऽ१वाऽ२न् । दूवाऽ२न् ॥ सदातेनामा । स्वयशाऽ३ः ॥ ( द्विः ) विवा-ऽ२क्मीऽ२३४ओहोवा ॥श्रीः॥ हाउभूराइ ॥ हाइतेसवना । मा । नुषेभूऽ३ । नुषेभू । भूरिमनीषीहवतेत् । वाऽ१माऽ२इत् । त्वामाऽ२इत् ॥ मारेअस्मात् । मघवाऽ३न् ॥ (द्विः) ज्योऽ२काऽ२३४ओहोवा । ईऽ२३४५ ॥ दी. २९. उ. ३. मा. २१. ष. ॥८७१॥

३. [1]सराये ॥ राशिमरायः । विराट् । इन्द्रः ॥

हाउहाउहाउ । पाइबा । सोमाम् । इन्द्रमन्दतुत्वा । त्वा । त्वा ॥ यन्ताइ । सुषा । वहर्यश्वाद्रिः । द्रिः । द्रिः ॥ सोतुः । बाहु । भ्याꣳ-सुयतोनार्वा । र्वा । र्वा ॥श्रीः॥ यास्ताइ । मदो । युजियश्चारुरस्ति । स्ति । स्ति ॥ याइना । वृत्रा । णिहर्यश्वहꣳसि । सि । सि ॥ सात्वाम् । इन्द्रा । प्रभूवसोममत्तु । त्तु । त्तु ॥ श्रीः ॥ बोधा । सुमाइ । मघवन् । वाचमे-माम् । माम् । माम् ॥ यान्ताइ । वसा । ष्ठोअर्चतिप्रशस्तिम् । स्तिम् ।

[1] षण्णवतितमसूक्ते गीयते ।

३७४. नृमेधः पैजवनः । शक्वरी । इन्द्रः ॥

११५१. प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥१॥

११५२. त्वꣳसिन्धूँरवासृजोऽधराचो अहन्नहिम् । अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् । तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥२॥

११५३. वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः । अस्तासि शत्रवे वधं यो न इन्द्र जिघाꣳसति । या ते रातिर्ददिर्वसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥३॥

धा. ४३. उ. ६. स्व. ३. टि. ॥१४॥

---

३७४. प्र । उ । सु । अस्मै । पुरोरथम् । पुरः । रथम् । इन्द्राय । शूषम् । अर्चत । अभीके । चित् । उ । लोककृत् । लोक । कृत् । सङ्गे । सम् । गे । समत्सु । स । मत्सु । वृत्रहा । वृत्र । हा । अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् । अन् । यकेषाम् । ज्याकाः । अधि । धन्वसु ॥ त्वम् ॥ सिन्धून् । अव । असृजः । अधराचः । अहन् । अहिम् । अशत्रुः । अ । शत्रुः । इन्द्र । जज्ञिषे । विश्वम् । पुष्यसि । वार्यम् । तम् । त्वा । परि । स्वजामहे । नभन्ताम् । अन्यकेषाम् । अन् । यकेषाम । ज्याकाः । अधि । धन्वसु ॥ वि । सु । विश्वाः । अरातयः । अ । रातयः । अर्यः । नशन्त । नः । धियः । अस्ता । असि । शत्रवे । वधम् । यः । नः । इन्द्र । जिघाꣳसति । या । ते । रातिः । ददिः । वसु । नभन्ताम् । अन्यकेषाम् । अन् । यकेषाम् । ज्याकाः । अधि । धन्वसु ॥

---

स्तिम् ॥ आइमा । ब्रह्मा । सधमा । देजुषस्व । स्व । स्व ॥

दी. २६. उ. ११. मा. २५. कु. ॥८७॥

३७५. मेधातिथिः काण्वः । गायत्री । इन्द्रः ॥

११५४. रेवाँ इद्रेवत स्तोता स्यात्त्वावतो मघोनः । प्रेदु हरिवस्सुतस्य ॥१॥

११५५. उक्थं च न शस्यमानं नागो रयिरा चिकेत । न गायत्रं गीयमानम् ॥२॥

११५६. मा न इन्द्र पीयत्नवे मा शर्धते परा दाः । शिक्षा शचीवश्शचीभिः ॥३॥

धा. १४. उ. १. स्व. ३. नि ॥१५॥

---

३७५. रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वावतः । मघोनः । प्र । इत् । उ । हरिवः । सुतस्य । उक्थम् । च । न । शस्यमानम् । न । अगोः । अ । गोः । रयिः । आ । चिकेत । न । गायत्रम् । गीयमानम् ॥ मा । नः । इन्द्र । पीयत्नवे । मा । शर्धते । परा । दाः । शिक्ष । शचीवः । शचीभिः ॥

---

४. श्रूघाइ । हवाम् । विपिपानस्याद्रेः । द्रेः । द्रेः ॥ बोधा । विप्रा । स्यार्चतोमनीषा । षा । षा ॥ कोर्ष्वा । दुवा । स्यन्तमासचेमा । मा । मा ॥ श्रीः ॥ नाताइ । गिरो । अपिमृष्येतुरस्य । स्य । स्य ॥ नाद्य । ष्टुताइम् । असु । र्यस्यविद्वान् । द्वान् । द्वान् ॥ सादा । तेना । मस्वयशोविवक्मि । क्मि । क्मि ॥ श्रीः ॥ भूराइ । हिताइ । सवना । मानुषेषु । षु । षु ॥ भूराइ । मनो । षीहवतेत्वामित् । मित् । मित् ॥ मारे । अस्मात् । मघवञ्ज्योकः । कः । को ॥ हाउहाउहाउ । वाऽ२ ॥ ईऽ२३४५ ॥

दी. ३०. उ. ११. मा. २३. पि. ॥८७३॥

५. वारवन्तीयम् ॥ इन्द्रः । गायत्री । इन्द्रः ॥

रेवाꣳइद्राओहोहाइ ॥ वातस्तोऽ२३४ता । स्यात्वावाऽ२३४हाइ । तोमघाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४नाः ॥ प्रेदुह । गाइवस्सुताऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । स्या । एहियाऽ६हा ॥ श्रीः ॥ उक्थश्चनाओहोहाइ ॥ शास्यामाऽ२३४नाम् ।

---

१ [illegible]

नागोगाऽ२३४हा । यिगानिकाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवा-
ऽ२३४ता ॥ नगाय । आंगायमाऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ ।
ओहोऽ३१२३४ । नाम् । एहियाऽ६हा ॥ श्रीः ॥ मानइन्द्राओहोहाइ ॥
पाइयत्वाऽ२३४वाइ । माशार्द्वाऽ२३४हा । तेपराऽ३४ । ओहोवा । इहा-
ऽ२३४हाइ । उहुवाऽ२३४दाः ॥ शिक्षाश । चाइवश्शचाऽ३४ । ओहोवा ॥
इहाऽ२३४हाइ । ओहोऽ३१२३४ । श्रीः । एहियाऽ६हा । होऽ५इ ॥डा॥

दी. ३७. उ. ९. मा. २५. मु. ॥८७४॥

६. [1]कण्वरथन्तरे ॥ कण्वः । बृहती । पवमानस्सोमः ॥

ग्रासोमदेववीतयाइ ॥ सिन्धुर्नपाइ । प्येऽ३आर्णाऽ३सा । अ७-
शो५पयसामदिरोनजागृवाऽ२३४ऐही ॥ अच्छाकोऽ२३४शाम् ॥ मधा-
ऽ३१उवाऽ२३ ॥ एऽ३ । श्चुतमा ॥ श्रीः ॥ आच्छाकोशम्मधुश्चुताम् ॥
अच्छाकोशाम् । माऽ३धूश्चूऽ३ताम् । आहर्यतोअर्जुनोअत्केअव्यताऽ२३४ऐही ।
आऽ३हार्योऽ३तो । अर्जुनोअत्केअव्यताऽ२३४ऐही ॥ प्रियस्सूऽ२३४नूः ॥
नमाऽ३१उवाऽ२३ ॥ एऽ३ । जियआ ॥ श्रीः ॥ प्रायस्सूनुर्नमर्जियाः ॥
प्रियस्सूनूः । नाऽ३मार्जाऽ३याः । तमी५हिन्वन्त्यपसोयथारथाऽ२३४मैही ।
ताऽ३माइ५हाऽ३इन्वा । तियप सोयथारथाऽ२३४मैही ॥ नदीषूऽ२३४वा ॥
गभाऽ३१उवाऽ२३॥ एऽ३ ॥ स्तियोरा ॥ दी. ३५. उ. ९. मा. २५. मु. ॥८७५॥

७. [2]कण्वः । अनुष्टुप् । पवमानस्सोमः ॥

ग्रासुन्वानायअन्धसाः ॥ मर्तोनवा । ष्टाऽ३ताद्वाऽ३चाः । अपश्वा-
नमराधसाऽ२३४मैही ॥ हतामाऽ२३४खाम् ॥ नभृऽ३आउवाऽ२३ ॥
एऽ३ । गवआ ॥ श्रीः ॥ आजामिरत्केअव्यता ॥ भुजेनपूत् । त्राऽ३ओ-
णाऽ३योः । सरज्जारोनयोषणाऽ२३४मैही ॥ वरोनाऽ२३४यो ॥ निमा-
ऽ३१उवाऽ२३ ॥ एऽ३ । सदमा ॥ श्रीः ॥ सावीरोदक्षसाधनाः ॥ विय-

[1] त्रिचत्वारिंशत्तमसूक्ते गीयते । [2] त्रयोविंशत्युत्तरद्विशततमसूक्ते गीयते ।



स्तसा । भाऽ३रोदाऽ३साइ । हरि५पवित्रेअव्यताऽ२३४ऐही ॥ वेधाना-
ऽ२३४यो ॥ निमाऽ३१उवाऽ२३ ॥ एऽ३ । सदमा ॥

दी. २५. उ. ९. मा. १७. मे. ॥८७६॥

८. [1]कण्वबृहती ॥ कण्वः । बृहती । पवमानस्सोमः ॥

ओहोपुनानस्सोऽ३ए ॥ मधाराऽ१याऽ२३४ । हाहोइ । आपाव-
सानोअर्षसि । आरत्नाऽ१धाऽ२३४ः । हाहोइ । योनिमृत । स्यसाइदा-
ऽ१साऽ२३४इ । हाहोइ ॥ उत्सोदाऽ१इवाऽ२३४ः । हाहो । हिराऽ३ ।
ण्याऽ२३४याः । उहुवाऽ६हाउ ॥ वा ॥ श्रीः ॥ ओहोउत्सोदेवोऽ३ए ॥
हिराण्याऽ१याऽ२३४ः । हाहोइ । उत्सोदेवोहिरण्ययः । दुहानाऽ१ऊ-
ऽ२३४ । हाहो । धार्दिवियम् । मधुप्राऽ१याऽ२३४म् । हाहोइ । दुहानऊ ।
धर्दाइवाऽ१याऽ२३४म् । हाहोइ । मधूप्राऽ१याऽ२३४म् । हाहोइ ॥
प्रत्नाऽसाऽ१धाऽ२३४ । हाहो ॥ स्थमाऽ३ । साऽ२३४दात् । उहुवाऽ६-
हाउ ॥ वा ॥ श्रीः ॥ ओहोप्रत्न५सधाऽ३ए ॥ स्थमासाऽ१दाऽ२३४त् ।
हाहोइ । प्रात्न५सधस्थमासदत् । आपाच्छाऽ१याऽ२३४म् । हाहोइ ।
धारुणंवा । जियार्षाऽ१साऽ२३४इ । हाहोइ । आपृच्छ्यम् । धरुणाऽ१-
म्वाऽ२३४ । हाहोइ । जियार्षाऽ१साऽ२३४इ । हाहोइ ॥ नृभाइर्घोऽ१ता-
ऽ२३४ः । हाहो । तिचाऽ३ । साऽ२३४णाः । उहुवाऽ६हाउ ॥वा॥

दी २७. उ. १०. मा. ४५. मु. ॥८७७॥

९. [2]कण्वः । अनुष्टुप् । पवमानस्सोमः ॥

ओहोअयंपूषाऽ३ए ॥ रयाइर्भाऽ१गाऽ२३४ः । हाहोइ । सोम५पुना-
नोअर्षति । पताइर्वाऽ१इश्वाऽ२३४ । हाहो । स्यभूमाऽ१नाऽ२३४ः ।
हाहोइ ॥ वियारूयाऽ१द्रोऽ२३४ । हाहो ॥ दसीऽ३ । ऊऽ२३४भाइ ।
उहुवाऽ६हाउ॥वा॥श्रीः॥ओहोसमुप्रियाऽ३ए ॥ अनूषाऽ१वाऽ२३४ । हाहोइ ।

[1] नवमसूक्ते गीयते । [2] एकषष्टितमसूक्ते गीयते ।

ओहोवा ॥श्रीः॥ हाविन्द्रः ॥ आश्वः । ना । क्रन्वियाऽ३ः । क्रन्वियाः । तन्दुरोपसमीनरस्सोमंविश्वाचिया । धाऽ१याऽ२ । धायाऽ२ ॥ यन्नाया । सन्तुवाऽ३ (ह्निः) ॥ द्राऽ२याऽ२३४औहोवा ॥ ईऽ२३४५ ॥

दी. २७. उ. ३. मा. २२. जा. ॥८८२॥

१४. [1]मरायं ॥ राशिमरायः । बृहती । पवमानस्सोमः ॥

हाउहाउहाउ । तावा । अहाम् । सोमरारण । ण । ण ॥ सास्याइ । इन्दो । दिवेदिवेपुरूणिबभ्रोनिचरन्तिमामव । व । व ॥ पारी । धाइ ऽरति-ताऽइहि । हि । हि ॥श्रीः॥ पारी । धाइ ऽरतिताऽइहि । हि । हि ॥ पारी । धाइ ऽरतिताऽइहितवाहबक्तसुतसोमतेदिवा । वा । वा ॥ दूहा । नोवभ्रऊ-घनि । नि । नि ॥ श्रीः ॥ दूहा । नोवभ्रऊघनि । नि । नि ॥ दूहा । नोवभ्रऊघनिघृणातपन्तमतिसूर्यपरः । रः । रः ॥ शाकू । नाइवपतिम । म । म ॥

दी. २४. उ. २. मा. १८. धे. ॥८८३॥

१५. राशिमरायः ॥ अनुष्टुप् । पवमानस्सोमः ॥

पुराः । जाइतीवोशन्धसः । सः । सः ॥ सुता । यश्मा । दधि-तवेअपश्यान ऽश्नथिष्टन । न । न ॥ साखा । योदीर्घजिह्वियम् । यम् । यम् ॥ श्रीः ॥ साखा । योदीर्घजिह्वियम् । यम् । यम् ॥ योवा । रया । पावकयापरिप्रस्यन्दतेसुतः । तः । तः ॥ आइन्दूः । अश्वो । नकृत्वियः । यः । यः ॥श्रीः॥ आइन्दूः । अश्वो । नकृत्वियः । यः । यः ॥ तान्दू । रोपसमीनरस्सोमंविश्वाच्याधिया । या । या ॥ यान्ना । यसा । तुवद्रयः । यः । यः ॥ हाउहाउहाउ । वाऽ३ ॥ ईऽ२३४५ ॥

दी. १६. उ. ५. मा. ३२. ञा. ॥८८४॥

१६. [3]वारवन्तीयम् ॥ इन्द्रः । गायत्री । पवमानस्सोमः ॥

इन्द्रायेन्दाओहोहाइ ॥ मारुत्वाऽ२३४ताइ । पवास्वाऽ२३४हाइ ।

[1] चतुर्नवतितमसूक्ते गीयते ।
[2] अष्टादशे सूक्ते गीयते ।
[3] एकोनचत्वारिंशदधिकशततमसूक्ते गीयते ।



मधुमत्ताऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४माः ॥ अकम्प । योनिमामाऽ३४ । ओहोवा । इहाऽ२३४हाइ । ओहोऽ३१२३४ । दाम । एहियाऽ६हा ॥ श्रीः ॥ तन्त्वाविप्राओहोहाइ ॥ वाचोवीऽ२३४दाः । पग-इप्काऽ२३४हा । ण्वन्तिधर्णाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवा-ऽ२३४सीम् ॥ सन्त्वाम् । जान्तिआयाऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । वाः । एहियाऽ६हा ॥ श्रीः ॥ रसन्तेमाओहोहाइ ॥ त्रोअर्योऽ२३४मा । पिवान्तूऽ२३४हाइ । वरुण ऽकाऽ३४ । ओहोवा । इहाऽ२३४हाइ । उहुवाऽ२३४वाइ ॥ पवमा । नास्यमरूऽ३४ । ओहोवा ॥ इहाऽ२३४हाइ । ओहोऽ३१२३४ । ताः । एहियाऽ६हा । होऽ५इ ॥डा॥

दी. ३२. उ. ९. मा. २६. मू. ॥८८५॥

१७. [1]आसितायम् ॥ असितः । अनुष्टुप् । इन्द्रः ॥

इममिन्द्रसुताम् ॥ पिवा । ज्येष्ठममर्तियम्माऽ२३दाम् । शुक्राऽ२-स्योत्वाऽ२ । भियक्षरान् ॥ धाराऽ२ओताऽ२ ॥ स्वसोवाऽ२ओऽ२३४वा । दाऽ५नोऽ६हाइ ॥ श्रीः ॥ नकिष्ट्वद्रथाइ ॥ तरो । हरीयदिन्द्रयच्छाऽ२३-साइ । नाकाऽ२इष्ट्वाऽ२ । नुमज्मना ॥ नाकाऽ२इस्स्वताऽ२ ॥ स्वसोवा-ऽ३ओऽ२३४वा । नाऽ५ओऽ६हाइ ॥ श्रीः ॥ इन्द्रायनूनमा ॥ चता । उक्थानिचब्रवीताऽ२३ना । सुताऽ२आमाऽ२ ॥ स्सुरिन्दवाः ॥ ज्याइष्टाऽ२-आमाऽ२ ॥ स्वसोवाऽ२ओऽ२३४वा । सोऽ५होऽ६हाइ ॥

दी. ६. उ. ६. मा. १८. कै. ॥८८६॥

१८. [2]स्वारं त्वाष्ट्रीसाम ॥ त्वाष्ट्रः । अनुष्टुप् । इन्द्रः ॥

असाविसोऽ२हा । महेन्द्राताऽ२इ ॥ शविष्ठपाऽ३हा । ण्वताना-हीऽ२ ॥ आत्वापृणाऽ३हा । कुइन्द्रायाऽ२म् ॥ रजस्सूर्योऽ३हा । नराऽ२-होऽ२३४ । या । श्माऽ५इओऽ६हाइ ॥ श्रीः ॥ आतिष्ठुवाऽ३हा । श्रहन्ना-

[1] चतुर्दिकशततमसूक्ते गीयते ।
[2] अष्टादिकशततमसूक्ते गीयते ।

थाऽ२म् । युक्तातेब्राऽ३हा । ह्मणाहागीऽ२ ॥ अर्वाचीनाऽ३ऽहाइ । मुते-
मानाऽ२: ॥ ग्रावाकृणोऽ३हा । तुवाऽ३होऽ२३४ । वा । ग्नूऽ५नोऽ६"हाइ ॥
श्रीः॥ इन्द्रमिद्धाऽ३हा । रीवहाताऽ२: ॥ अप्रतिधाऽ३हा । ष्टशवासाऽ२म् ॥
ऋषीणाऽसूऽ३हा । ष्टुतीरूपाऽ२ ॥ यज्ञश्चाऽ३हाइ । मानूऽ३होऽ२३४ ।
वा । षाऽ५णोऽ६"हाइ ॥ दी. १९. उ. न. मा. १४. ली. ॥८८७॥

१९. [1]वसिष्ठप्रियम् ॥ वसिष्ठः । अनुष्टुप् । इन्द्रः ॥

यदिन्द्राऽ२३ । चित्रमइह । नास्ती ॥ त्वादाऽ३तामद्राइवोऽ२ ।
राधास्तन्नोऽ३ । विदाऽ२द्वाऽ२३४साउ ॥ ऊभाओऽ२३४वा । याहाओ-
ऽ२३४वा ॥ स्तियाऽ५भरा ॥ श्रीः ॥ यन्मन्याऽ२३ । संवरेणियम् ।
आइन्द्रा ॥ द्युक्षऽ३न्तादाऽ१भाराऽ२ । विद्यामताऽ३ । स्यताऽ२इवाऽ२३४-
याम् ॥ आकाओऽ२३४वा । पाराओऽ२३४वा ॥ स्यदाऽ५वनाः ॥श्रीः॥
यत्तेदीऽ२३ । क्षुग्रराधियम् । मानाः ॥ अस्तिऽ३श्रूतंबृहाऽ२त् । तेना-
द्धाऽ३ । चिदाऽ२द्राऽ२३४इवाः ॥ आवाओऽ२३४वा । जान्दाओऽ२३४-
वा ॥ पिसाऽ५तयाइ । होऽ५इ ॥डा॥ दी. ८. उ. ६. मा. २१. ट. ॥८८८॥

२०. [2]महावैश्वामित्रम् । विश्वामित्रः । अनुष्टुप् । इन्द्रः ॥

हयाइ । हयाऽ३ । ओहाओहा । ( त्रीणि त्रिः ) । पुरांभिन्दूः ।
युवाकावीऽ२: ॥ अमितौजाः । अजायाताऽ२ ॥ इन्द्रोविश्वा । स्यकर्मा-
णाऽ२: ॥ धर्तावज्री । पुरुष्टूताऽ२: ॥श्रीः॥ तुवंवला । स्यगोमाताऽ२: ॥
अपावरा । द्रिवोबाइलाऽ२म् ॥ तुवांदेवाः । अविभ्यूषाऽ२: ॥ तुज्यमाना ।
सआवाइषूऽ२: ॥श्रीः॥ इन्द्रमीशा । नमोजासाऽ२ ॥ अभिस्तोमैः । अनूषा-
ताऽ२ । सहस्रंया । स्यरातायाऽ२: ॥ उतवासा । तिभूयासीऽ२: । हयाइ ।

[1] षट्षष्ट्युत्तरशततमसूक्ते गीयते ।
[2] षडशीत्युत्तरशततमसूक्ते गीयते ।



३७६. नीपातिथिः काण्वः । अनुष्टुप् । इन्द्रः ॥

११५७. एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१॥
११५८. अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥२॥

३७६. आ । इन्द्र । याहि । हरिभिः । उप । कण्वस्य । सुष्टुतिम् । सु । स्तुतिम् । दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो । दिवा । वसो ॥

हयाऽ३ । ओहाओहा ॥ (त्रीणि त्रिः) होऽ४इडा(द्विः) । होऽ२३४५इ ॥डा॥
दी. २०. उ. न. मा. ३१. ब. ॥८८९॥

द्वितीयो विंशः ॥

द्वाविंशःप्रपाठकः ॥

१. [1]द्विरभ्यासं त्वाष्ट्रीसाम ॥ त्वाष्ट्रयः । अनुष्टुप् । इन्द्रः ॥

गाय । तित्वाऽ३ । हाऽ३हा । गायत्राइयाऽ२३४: ॥ अर्च ।
तियाऽ३ । हाऽ३हा । कमर्काइयाऽ२३४: । ब्रह्मा । णस्त्वाऽ३ । हाऽ३-
हाइ । शतक्राताऽ२३४उ ॥ उद्व । शमाऽ३इ । हाऽ३हाइ । वयाऽ३-
होऽ२३४ । वा । माऽ५इरोऽ६"हाइ ॥ श्रीः ॥ यत्सा । नोस्नाऽ३ ।
हाऽ३हा । नुवारुहाऽ२३४: ॥ भूरि । यस्पाऽ३ । हाऽ३हा । ष्टकर्त्वा-
ऽ२३४म् । तदि । द्रोआऽ३ । हाऽ३हा । धर्म्चेताताऽ२३४इ ॥ यूथे ।
नत्राऽ३ । हाऽ३हा । ष्णिराऽ३होऽ२३४ । वा । जाऽ५तोऽ६"हाइ ॥श्रीः॥
युंक्ष्वा । हिकाऽ३ । हाऽ३हाइ । शिनाहाराऽ२३४इ ॥ वृष । णाकाऽ३ ।
हाऽ३हा । क्षियाशाऽ२३४ ॥ अथा । नआऽ३ । हाऽ३हाइ । इन्द्रसोमापा-
ऽ२३४: ॥ गिराम् । उपाऽ३ । हाऽ३हाइ । श्रुताऽ३इऽहोऽ२३४ । वा ।
चाऽ५रोऽ६"हाइ ॥ दी. १७. उ. १. मा. २४. घी. ॥८९०॥

[1] नवोत्तरद्विशततमसूक्ते गीयते ।

